रात्तृणं प्रच्छिद्य जुह्वामवदधात्यथाश्रावयत्यो श्रावयास्तु श्रौषडिषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति' तमुपरीव प्राञ्चं प्रहरति नात्ययं प्रहरति न पुरस्तात्प्रत्यस्यति न प्रतिशृणाति न विष्वञ्चं [1]वियौत्यूर्ध्वमुद्यौत्याप्यायन्तामाप ओषधयो मरुतां पृषतय स्थ दिवं गच्छ ततो नो वृष्टिमेरयेत्यथाग्नीध्रमीक्षते ऽग्नीदिति' तमाहाग्नीध्रः संवदस्वेत्यगानग्नीदित्याहाध्वर्युरगन्नित्याहाग्नीध्रः' श्रावयेत्याहाध्वर्युः' श्रौषडित्याहाग्नीध्र' इदं ब्रूहीत्याहाध्वर्युरनुप्रहरेत्याहाग्नीध्रो' ऽनुप्रहरति' स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीत्यथोपोत्थायाहवनीयमुपतिष्ठत आयुष्पा अग्ने ऽस्यायुर्मे पाहि चक्षुष्पा अग्ने ऽसि चक्षुर्मे पाहीत्यथेमामभिमृशति ध्रुवासीति' मध्यमं परिधिमनुप्रहरति यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयाता इत्यथेतरावुपसमस्यति यज्ञस्य पाथ उप समितमित्यथैनान्संस्रावेणाभिजुहोति' जुह्वामुपस्तृतꣳ संस्रावयति संस्रावभागा स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वꣳ स्वाहेत्यथ प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य धुरि धुर्यौ विमुञ्चत्यग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तं धुरि धुर्यौ पातमिति' पशु वै मानो भवत्युत्कर एवैने दक्षिणे विमुञ्चत्येतेनैव मन्त्रेण' ॥ १९ ॥ षोडशः ॥

1 Thus (वियौति) Bc JF Sāy. Mādh., वृहति B, वृति H, वहति T.

अथादत्ते दक्षिणेनाज्यस्थालीꣳ सस्रुवाꣳ सव्येन शुष्कं होत्रे वेदं प्रदाय। प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रवतो। दक्षिणेनाध्वर्युर्गार्हपत्यं परिक्रामत्युत्तरेण होता। तौ जघनेन गार्हपत्यं पश्चात्प्राञ्चावुपविशतो दक्षिण एवाध्वर्युरुत्तरो होताथाध्वर्युर्वेदमुपभृतं कृत्वा चतुर आज्यस्य गृह्णान आह सोमायेत्युपाꣳश्वनुब्रूहीत्युच्चैराश्राव्याह सोममित्युपाꣳशु यजेत्युच्चैर्वषट्कृते जुहोति। चतुर एवाज्यस्य गृह्णान आह त्वष्ट्र इत्युपाꣳश्वनुब्रूहीत्युच्चैराश्राव्याह त्वष्टारमित्युपाꣳशु यजेत्युच्चैर्वषट्कृते जुहोति। चतुर एवाज्यस्य[1] गृह्णान आह देवानां पत्नीभ्य इत्युपाꣳश्वनुब्रूहीत्युच्चैराश्राव्याह देवानां पत्नीरित्युपाꣳशु यजेत्युच्चैर्वषट्कृते। परिश्रिते देवानां पत्नीर्जुहोत्यथ चतुर एवाज्यस्य[2] गृह्णान आहाग्नये गृहपतय इत्युपाꣳश्वनुब्रूहीत्युच्चैराश्राव्याहाग्निं गृहपतिमित्युपाꣳशु यजेत्युच्चैर्वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथाग्रेण होतारमुपातीत्य होतुर्दक्षिणस्यामङ्गुल्यावनक्ति। जिघ्रेण भक्षयित्वा। चतुर्हस्तेडाꣳ[2] संपादयत्याज्यस्यैव। समन्वारभेते अध्वर्युश्चैव पत्नी चोपहूतायामिडायामग्नीध आदधाति षडवत्तं। प्राश्नीतो। मार्जयेते[3]। अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं जुहोत्युलूखले मुसले

१ Thus BT Sāy, the other MSS. omit एव; Be throughout चतुराज्यस्य।

२ Thus B Be JH Keś Sāy. (pr. m.), चतुरद्धे॰ TF; चतुर्ह Say sec. m.

३ Corrected, मार्जयेवेद Be JFHT, मार्जयवेद B.

यच्च शूर्पे आशिश्लेष दृषदि कृष्णाजिने यत्कपाले । अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वान्वाहार्यपचन एवेध्मप्रव्रश्चनान्यभ्याधाय फलीकरणानीप्य फलीकरणहोमं जुहोत्यग्नेऽदब्धायोऽशीततनो पाहि माद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहेत्यथैतेनैव यथेतमेत्य [वेदे यजमानं वाचयति वेदो ऽसि वित्तिरसीत्यान्तादनुवाकस्य][1] होत्रे वेदं प्रदाय पत्नीं[2] विष्यतीमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमीत्यथास्यै योक्त्रमञ्जलावाधायोदपात्रमानयति समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याहं गच्छे समात्मा तनुवा ममेत्यथ मुखं विमृष्टे यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्धि सरस्वतीत्यपो निनयत्यवभृथस्यैव रूपं कृत्वोत्तिष्ठतीति ब्राह्मणम् ॥२०॥

अथैनां तथैव[3] तिरः पवित्रमप आचामयति पयस्वतीरोष-

---

[1] The words enclosed in brackets found only in BH; om. Bc JFT Sāy.

[2] Sāyana has पत्नी and defends this reading, but knows also the reading पत्नीं ।

[3] om. J Bc; तथैवं B.

धयः पयस्वदौधां पयः। अपां पदमो यत्पयस्तेन मामिन्द्र संसृजेत्यथैनां[1] गार्हपत्ये समिध आधापयत्यग्ने व्रतपते व्रतमचारिषं तदशकं तन्मे ऽराधि स्वाहा वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतमचारिषं तदशकं तन्मे ऽराधि स्वाहेत्यथ यथाप्रपन्नं निष्क्रामयत्यथ[2] प्राङेत्य ध्रुवामाप्याययत्याप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधो ऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्नित्यथाज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोत्याश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे। अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्। स्वाहाकृताहुतिरेतु देवान्स्वाहेत्यथ यज्ञसमृद्धीर्जुहोतीष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा दौरार्ध्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा सर्वसमृद्ध्यै स्वाहा भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहेमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययासन्मनसा हितः। अयासन्हव्यमूहिषे ऽया नो धेहि भेषजꣳ स्वाहायाश्चाग्ने ऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि। अयसा मनसा धृतो ऽयसा हव्यमूहिषे ऽया नो धेहि भेषजꣳ स्वाहा यदस्मिन् कर्मण्यन्तरगाम मन्त्रतः कर्मतो वा। अनयाहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन स्वाहा यदस्य कर्मणो ऽत्य-

१ TF insert तथैव

२ निष्क्रामत्यथ Be Sāy, क्रमयत्यथ J

रीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत् स्विष्टकृद्विद्वान्सर्वꣳ स्विष्टꣳ सुहुतं करोतु मे। अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानाꣳ समर्धयित्रे स्वाहा। प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाꣳ स्वाहेत्यथ बर्हिषो धातूनाꣳ संप्रलुप्य ध्रुवायाꣳ समनक्ति समक्तं बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः। समिन्द्रेण विश्वेभिर्देवेभिरक्तमित्यथैनदाहवनीये ऽनुप्रहरति दिव्यं नभो गच्छतु यत्स्वाहेत्यथोपोत्थाय दक्षिणेन पदा वेदिमत्क्रम्य[1] ध्रुवया समिष्टयजुर्जुहोति देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्युदूहति स्रुचं' निनयति प्रणीता' उपोत्थाय यजमानो दक्षिणेन पदा विष्णुक्रमान्क्रमते' संतिष्ठत आमावास्यं वा[2] पौर्णमास्यं वा हविः' ॥२१॥ सप्तदशः ॥

इति प्रथमः प्रश्नः ॥

---

१ व्यतिक्रम्य Bo H, आक्रम्य T
२ om. JB, वा om. both times Ba

अथोपव्याहरणं' विज्ञायते क्रत्वादौ क्रतुकामं कामयीत[1] यज्ञाङ्गादौ यज्ञाङ्गकाममिति' प्राक्कूलान्दर्भान्संस्तीर्य तेषु प्राङ्मुखो यजमान उपविश्य जपति याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः। ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभे॥ देवा गातुविदो गातुं यज्ञाय विन्दत। मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यतामिति[2] श्रद्ध एहि[3] सत्येन त्वा ह्वयामीत्याकूत्या वेदनं करोत्याकूत्यै त्वा कामाय त्वा समृधे त्वा पुरो दधे। अमृतत्वाय जीवसे॥ आकूतिमस्यावसे काममस्य समृध्यै। इन्द्रस्य युञ्जते धियः॥ आकूतिं देवीं मनसः पुरो दधे यज्ञस्य माता सुहवा मे अस्तु। यदिच्छामि मनसा सकामो विदेयमेनद्धृदये निविष्टमिति' मनसा चित्तैः संकल्पयते चित्तैः' सर्वकामो ऽग्नीनाधास्य इत्यग्न्याधेये' स्वर्गकामो दर्शपूर्णमासाभ्यां यक्ष्य इति दर्शपूर्णमासयोः' स्वर्गकामश्चातुर्मास्यैर्यक्ष्य इति चातुर्मास्येषु' स्वर्गकामः पशुना यक्ष्य इति पशुबन्धे' स्वर्गकामः सोमेन यक्ष्य इति सोमे' स्वर्गकामो ऽग्निं चेष्य इत्यग्निचये' ऽहीने ऽहर्गणे वा यथाकामो यत्कामो वा यजते' तन्म ऋध्यतां तन्मे समृध्यतां तन्मे संपद्यतां काम इत्यर्थलिङ्गां[4] प्रतिवचनं तत्त ऋध्यतां तत्ते समृध्यतां तत्ते संपद्यतां काम इत्योंतथेति प्रतिवचनम्' ॥ १ ॥

---

१ Thus Bo JF Keś.; कामयेत BT; H corrupt

२ After इति B has श्रद्धामाह्वयते.

३ Thus HBT, एहीति JF, एहि इति Bo

४ Thus BHT, यथ ऋत्विजा the other MSS

अथर्त्विजो[1] देवयजनं याचते । अध्वर्यो देवयजनं मे देहीत्यध्वर्युमादित्यो देवो दैवो ऽध्वर्युः स ते देवयजनं ददात्विति तथेति प्रतिवचनं । ब्रह्मन्देवयजनं मे देहीति ब्रह्माणं । चन्द्रमा देवो दैवो ब्रह्मा स ते देवयजनं ददात्विति तथेति प्रतिवचनं । होतर्देवयजनं मे देहीति होतारमग्निर्देवो दैवो होता स ते देवयजनं ददात्विति तथेति प्रतिवचनमुद्गातर्देवयजनं मे देहीत्युद्गातारं । पर्जन्यो देवो दैव उद्गाता स ते देवयजनं ददात्विति तथेति प्रतिवचनꣳ । सदस्य देवयजनं मे देहीति सदस्यमाकाशो देवो दैवः सदस्यः स ते देवयजनं ददात्विति तथेति प्रतिवचनꣳ । होत्रका देवयजनं मे दत्तेति होत्रकानापो देव्यो दैव्या होत्राशꣳसिन्यस्तास्ते देवयजनं ददत्विति तथेति प्रतिवचनं । चमसाध्वर्यवो देवयजनं मे दत्तेति चमसाध्वर्यूंरश्मयो देवा दैवाश्चमसाध्वर्यवस्ते[2] ते देवयजनं ददत्विति तथेति प्रतिवचनमपि वा न देवयजनं याचत । आदित एव तीर्थे स्नात्वोदित्याहतं वासः परिधाय । शुद्धो दैव शुचिः पूतो मेध्यो विपाप्मा ब्रह्मचारी सहकारिप्रत्यय आ चतुर्थात्कर्मणो ऽभिसमीक्षमाणो वेदकर्माणि प्रयोजयेत्प्रागपवर्गाण्युदगपवर्गाणि वा प्राङ्मुखः प्रदक्षिणं यज्ञोपवीती दैवानि कर्माणि करोति । दक्षिणामुखः प्रसव्यं प्राचीनावीती पित्र्याणि । तिष्ठन्नासीनः प्रह्वो वा यथाम्नायं । छन्दोगब्राह्मणं यथा वै दक्षिणः पाणिरेवं

---

१ Thus HJT Be, अथ ऋत्विजो BJ

२ Thus T, दैवाश्च॰ the other MSS.

देवयजनं[1] यथा मध्यस्तथा पितृयजनं[1] यथा पितृयजनं तथा श्मशानकरणं[1] यथा श्मशानकरणं तथाभिचरणीयेष्विष्टि-पशुसोमेष्वादित एव[1] पुरोदकं देवयजनं यस्मादन्यत्पुर-स्तात्समन्तिकं देवयजनं न विन्देयुरुत्तरतो देवयजनमाचमति-भिनद्मि[1] ॥ २ ॥ प्रथमः ॥

अथर्त्विजां वरणं[1] विज्ञायते ब्राह्मणा[2] ऋत्विजो योनिगोत्र-श्रुतवृत्तसंपन्ना[3] अविगुणाङ्गा[4] अविक्लिष्टिनो[1] न परिक्षाति-क्रान्ता नान्तगा नान्यजा नाननूचाना[5][1] हालेयवालेयपुत्रि-कापुत्रपरविचसहोढकानीनानुजावरद्विप्रवरान्परिहाप्याङ्गिरसो[6] ऽध्वर्युर्वासिष्ठो ब्रह्मा वैश्वामित्रो होतायास्य उद्गाता कौषीतकः सदस्यो[1] ऽवगिष्टा[7] भृगवो ऽङ्गिरसो वा[1] योनिर्वृत्तं विद्या च प्रमाणमित्येके[1] तांस्त्रीन्वृणीताथ्यापत्राह्मानेव वृणीतांकुनखिनम-ध्वर्युमकिलासिनं ब्रह्माणमखण्डं[8] होतारमकराक्षमुद्गातारम-भिपिविष्टं सदस्यमथ[9] प्रतिप्रस्थाता नेष्टोन्नेतेत्यध्वर्युपुरुषा[1] ब्राह्मणाच्छंस्याग्नीध्रः पोतेति ब्रह्मणो[1] मैत्रावरुणो ऽच्छावाको

१ स्वादित एव found only in Be F, but commented on by Bh
२ Thus HBe BF, ॰णान् the other MSS
३ Thus Be BHF, संपन्ना T, संपन्नान् J.
४ Thus all except J which has ॰ङ्गान्।
५ Thus H Be BT, नाननूचानान् J, नानूचाना F.
६ Thus, or परिहाप्य Be HFJ, परिहृप्य T, परिहाप्ये B.
७ Thus Venk in his bhasya on the Karmânta; the MSS, hav ऋविष्टा or ऋषिष्टा except F, which has ऋषि;
८ Thus BT and J (see m.); ॰खण्डं Be HFJ (pr. m)
९ अथ om BT Be.

यावद्वदिति होतुः । प्रस्तोता प्रतिहर्ता सुब्रह्मण्य इत्युद्गातुरभिगरो ध्रुवगोपः संस्राव इति[1] सदस्यस्य । स्वप्रधाना[2] । अस्वप्रधाना[2] इत्येके[2] । दश वैकादश वा चमसाध्वर्यवो । ऽन्यदृत्विग्भिः परिक्रीता भवन्तीति विज्ञायते । तस्मादग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विग्दर्शपूर्णमासयोश्चत्वार ऋत्विजो ऽध्वर्युर्ब्रह्मा होताग्नीध्र इति । चातुर्मास्येषु प्रतिप्रस्थाता पञ्चमः । पशुबन्धे मैत्रावरुणः षष्ठः । सर्वे सौम्ये ऽध्वरे । तान्कर्मणःकर्मणो वृणीतैकैकमुपसंगृह्य चोदयेदसावहमाध्वर्यवेण त्वा गच्छामि याजयतु मां भवानिति । ब्रह्मत्वेन हौत्रेणौद्गात्रेण सादस्येनेति । न सदस्यो विद्यत इत्येके । स्वेनस्वेन कर्मणा होत्रकान्[3] होत्रकानित्येके[3] । तत्पुरुषा होत्रकाश्चमसाध्वर्यवश्चाध्वर्युर्वा ऋत्विजां प्रथमो वृज्यते तेन सोमो योक्तव्य इति । ॥ ३ ॥

आदित्यो देवो दैवो ऽध्वर्युः स मे ऽध्वर्युरध्वर्यो ऽध्वर्युं त्वा वृण इत्यध्वर्युमादित्यो देवो दैवो ऽध्वर्युः स ते ऽध्वर्युस्तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनं । चन्द्रमा देवो दैवो ब्रह्मा स मे ब्रह्मा ब्रह्मन् ब्रह्माणं त्वा वृण इति ब्रह्माणं । चन्द्रमा देवो दैवो ब्रह्मा स ते ब्रह्मा तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनमग्निर्देवो दैवो होता

---

१ संस्राव B Be JH, संस्रावयति T, संस्रावयति F, with न Bh.

२ Thus Be, स्वप्रधानाः स्वप्रधाना इत्येके J; स्वप्रधान अस्वप्रधान इत्येके B; स्वधाम अस्वप्रधानाइत्येके F, स्वप्रधाना इत्येके H, स्वस्वप्रधाना इत्येके T

३ Thus B, होत्रकाहहोत्रका इत्येके T, होत्रकान्होत्रकानित्येके JHF, Be om. स होत्रकान् ।

स मे होता होतर्होतारं त्वा वृण इति होतारमग्निर्देवो दैवो होता स ते होता तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनं' पर्जन्यो देवो दैव उद्गाता स म उद्गातोद्गातरुद्गातारं त्वा वृण इत्युद्गातारं' पर्जन्यो देवो दैव उद्गाता स त उद्गाता तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनमाकाशो देवो दैवो सदस्यः स मे सदस्यः सदस्य सदस्यं त्वा वृण इति सदस्यमाकाशो दैवो देवः सदस्यः स ते सदस्यस्तेनानुमतः कर्मैवाहं करिष्यामीत्योँ तथेति प्रतिवचनमापो देव्यो दैव्या होत्राशंसिन्यस्ता मे होत्राशंसिन्यो होत्रका होत्रकान्वो वृण इति होत्रकानापो देव्यो दैव्या होत्राशंसिन्यस्तास्ते होत्राशंसिन्यस्ताभिरनुमताः कर्मैव वयं करिष्याम इत्योँ तथेति प्रतिवचनं' रश्मयो देवा दैवाश्चमसाध्वर्यवस्ते मे चमसाध्वर्यवश्चमसाध्वर्यवश्चमसाध्वर्यून्वो वृण इति चमसाध्वर्यून्रश्मयो देवा दैवाश्चमसाध्वर्यवस्ते ते चमसाध्वर्यवस्तैरनुमताः कर्मैव वयं करिष्याम इत्योँ तथेति प्रतिवचनं' वृतोवृतो जपति महन्मेऽवोचो यशो मेऽवोचो भगो मेऽवोचो भर्गो मेऽवोचस्तपो मेऽवोच स्तोमं मेऽवोचः क्लृप्तिं मेऽवोचो भुक्तिं मेऽवोचो विश्वं मेऽवोचः सर्वं मेऽवोचः सर्वं मे कल्याणमवोचस्तन्मावतु[१] तन्माविशतु तन्मा जिन्वतु तेन भुक्षीय देवो देवमेतु[२] सोमः सोममेत्वित्योँ तथेति प्रतिवचनम् ॥ ४ ॥

१ Thus only T, the other MSS : तन्मामवतु।

२ Thus only F, the other MSS. have here and further on एति instead of एतु, TB omit the whole passage, cp Pañc Br. I 1.2.

[1] सिंहे मे मन्युर्व्याघ्रे मेऽन्तरामयो । वृके मे क्षुद्‌श्वे मे घर्मो धन्वनि मे पिपासा । राजगृहे मेऽशनायाश्मनि मे तन्द्रिर्गर्दभे मेऽर्शः[2] । मत्स्यके[3] मे ह्रीरश्वत्थे मे वेपथुः । कूर्मे मेऽङ्गरोगो । वत्से मेऽपचर्याभिये मे मृत्युर्भ्रातृव्ये मे पाप्मा । सपत्ने मे निर्ऋतिर्दुष्कीर्तौ मे व्यृद्धिः । परस्वति मेऽसमृद्धिः । खड्गे म आर्तिर्गवये म आन्ध्यं । गौरे मे बाधिर्यमृचे मे शोको । गोधायां मे खेदो[4] । जरायां मे हिमः । कृष्णशकुनौ मे भीरुता । कश्मे मे पापो गन्ध । उलूके मे स्वप्नः[5] । क्रोके म ईर्ष्या । मर्कटे मे दुर्बुद्धिः । कुललै मे मरुर्खोललै मे प्रष्टौहे[6] मे तृष्णाश्वे मे श्रमो । ऽव्यां म आव्यं । कोशे मे गन्धः । कुमार्यां मेऽलङ्कारः । सूकरे मे क्रदयुः[7] । पृदाखुनि[8]

---

[1] The construction of the text of this khaṇḍa is extremely difficult. I compared also the printed Prayogamālā of Venkaṭeśvara (Vol II, fol 36), the MS. I. O. 288, fol. 12, a very old MS, corrected, and the Gṛhyaprayoga according to the MS. of Burnell's collection The MSS. have, of course, nowhere the avagraha.

[2] Thus only B and Pray Mālā, मेरिमः the other MSS

[3] Thus Be, मत्स्यके IO, मत्स्यके H, मय्यके FT, मत्स्यके J, मंचके B, मंयुके Pray. M.

[4] Thus Be, the other MSS. खेदो।

[5] Thus all except T which has स्वप्नः।

[6] प्रष्टौ॰ TB, IO, प्रोष्ठौ F, प्रष्ठौ Be, प्रष्ठौ H, प्रष्टौ J. Perhaps प्रष्ठौ is to be read?

[7] Thus H, कदयुः IO, क्रदयुः Pray. M; क्षदयुः the other MSS.

[8] Thus all except Pray M. इदाकुमि. Probably इदाकुमि is to be read

मे स्वप्नो' ऽजगरे मे दुःस्वप्नो' विद्युति मे स्यायमो[1]' सौभाग्यो मे क्लेदः' शलभे[2] मे पापलक्ष्मी' स्त्रीषु मे ऽनृतमंशाश्च मे कर्कशो' मात्ये म ईर्ष्या' शूद्रे मे स्तेयं' वैश्ये मे ऽकार्मकृत्यं[3]' राजन्यबन्धुनि मे ऽज्ञानं' नैषादे मे ब्रह्महत्या' क्षुल्लिके मे च्यवयुर्लक्ष्मी[4] मे विक्षाम' छद्रिणि मे वमतिः[5]' किंपुरुषे मे रौद्रो' द्वैपिनि मे निष्पर्दृक्षिणि मे किलासः' शुनि मे दुरिष्टं[6]' खावन्त्येषु मे श्लेष्मो' विदिहेषु मे शौषपो[7]' महावर्षेषु मे म्लौमूजवत्सु मे तन्मा' दुन्दुभौ मे कासिके[8] ग्वाकुषु[8] मे पित्तं' कलिङ्गेषु मे ऽमेध्यमश्वतर्यां मे ऽप्रजस्ता' पुंश्चल्यां मे दुश्चरितमाखुनि मे दन्तरोगो' मक्षिकायां मे शल्यकः[9]' १०

शुके मे हरिमा' मयूरे मे जल्प्या' शुने मे जरा' काये मे पापवादो' ऽप्सु मे श्रमो' अब्धोऽष्टो मे किल्बिषमपेहि पाप्मन्पुनरपनाशितो भवा नः पाप्मन्सुकृतस्य लोके पाप्मन्धेह्यविहृतो[10]'

---

१ Thus Be BHT, ष्मयमो F, ष्मयमो J, स्वयमो Pray. M.

२ Thus BJT Pray. M, Prayoga Burnell; शभे H, शल्भे Be F, IO.

३ Thus (without avagraha) Be BHJT; कर्मकृत्यं F, Pray. M.

४ Thus Be BJHT, IO, Pray, उक्षुके F; क्षुलके Pray. M.

५ वमतिः Be BHFT, IO, Pray, वमतिः J, Pray M. Is the word व्यमतिः or a subst. connected with वमिति?

६ Thus Be BHFT, Pray, Pray. M, खाव॰ J, IO

७ Thus Be JT, शौषपो F, शौषपद् B, H uncertain, शिपद्यः Pray शपथो IO, वपथो Pray. M.

८ Thus BT Pray., the other MSS. कासिके॰।

९ Thus Be BJHF, शल्पकः T, शल्कुशः Pray. M.

१० Without the least doubt the tradition of these verses according to the Baudhāyanins is corrupt. A comparison with Ath Samh VI 26 proves that we ought to read अविह्रुतान् (comp म' instead of अविहृतो and अराणि instead of अरानि।

यो नः पाप्मन जहाति तमु त्वा जहिमो वयमन्यत्रास्मन्निविशताꣳ[1] सहस्राक्षो अमर्त्यो यो नो द्वेष्टि स रिष्यतु यमु द्विष्मस्तमु जहीत्यथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति । तां दिशमेता अप उत्सिञ्चति[2] यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य यथेतं प्रविशन्ति । ॥ ५ ॥ द्वितीयः ॥

अथेदमग्न्याधेयं । तस्य कः कर्मण उपक्रमो भवतीत्युक्तान्यृतुनक्षत्राण्युपक्रमात्मनः पुरश्चरणं । कथमस्यानुपूर्व्यं[3] भवति । स्नानपवनमन्त्राचमनमन्त्रमोचनपुण्याहवाचनानि श्रद्धामाहृत्याकृत्या वेदनं कृत्वोपव्याहृत्यर्त्विजो[4] वृत्वार्हयित्वा देवयजनं याचित्वा देवयजनमादाय स्फ्यमादायान्तरेण वेद्युत्करावुद्देशेन प्रपद्य जघनेन गार्हपत्यं तिष्ठन्प्राचीनꣳ[5] स्फ्येन गार्हपत्यस्यायतनमुद्धन्त्युद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसातेत्यथैनदद्भिरवोक्षति शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु न इत्येवमेवान्वाहार्यपचनस्यायतनमुद्धन्त्येवमेवाहवनीयस्यैवमितरयोर्यदि करिष्यन्भवत्यथान्तरेण

---

१ Thus Be HF, 10, the other MSS •त्रास्निवि• or •त्राशावि•।

२ Thus only B Be and partially T, cp Pray M loc. cit the other MSS. have this passage as infra IV. 7, 8 f.

३ Thus all except H, which has पूर्वं।

४ Thus BTJ, कृत्याग्निजो F, कृत्य ऋत्विजो Be H

५ Thus BT, the other MSS प्राचीꣳ।

वैद्युत्करादुद्देशेनोदङ्ङुपनिष्क्रम्य तां दिशं यन्ति यत्रास्य संभारा उपकॢप्ता भवन्त्यपि वोत्तरेण शालायाः सर्वे संभारा उपकॢप्ता भवन्त्यपि वान्तर्वेदि प्राचीनं तान्यन्वानुपूर्व्यमेकैकꣳ संभारमेकैकेन यजुषा संभरति' वैश्वानरस्य रूपं पृथिव्यां परिस्रवा। स्योनमाविशन्तु न इति सिकताः संभृत्य निदधात्येवमेवोत्तरमुत्तरꣳ संभारमुत्तरेणोत्तरेण यजुषा संभृत्य संभृत्य[1] निदधात्युपाय सिकताखूत्करं च वल्मीकवपां च सूदं च वराहविहतं च पुष्करपर्णं च शर्कराश्चेत्यष्टौ पार्थिवा' अथोत्तरेण यजुषा षड्भिरश्वमस्कामाहरत्येव[2] वानस्पत्याभिर्जग्मयत्याः' शाखा आर्द्राः सपलाशाः सपारोहाः प्रादेशमात्रीरप्रतिशुष्काग्रा आहरत्यपि वा यथालाभं' पर्णं दार्भ्यां' चित्रियस्याश्वत्थस्य शिखः समिध आर्द्राः सपलाशाः सपारोहाः प्रादेशमात्रीरप्रतिशुष्काग्रा आहरति चित्रियादश्वत्थात्संभृता बृहत्यः' शरीरमभिसंस्कृता स्थ। प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्या इत्यथ शुष्कक्लायमाहरति या ते अग्न ओजस्विनी तनूरोषधीषु प्रविष्टा। तां त इह संभरामीत्यथाग्ना अरणी आहरत्याश्वत्थीꣳ शमीगर्भामप्यशमीगर्भां[3] वा

---

[1] Thus only BJ; संभृत्यसंभृत्येव Be; the other MSS. *omit* the second संभृत्य।

[2] Thus B Be, मस्काम् T, मस्कानि F, मकलाम् HJ.

[3] Thus Be F, Bh., Keś; JTH both times with long vowel (शामी०); B the first time with short, the second time with long vowel

चतुरङ्गुलमुत्सेधां द्वादशाङ्गुलं[1] विस्तीर्णाꣳ षोडशाङ्गुलमायतामपि वा प्रादेशमात्रीꣳ सर्वतः समां चतुरङ्गुलमेवोत्सेधां[2] । तस्या उत्तानाया अनुलोममधस्तात्प्रतीचीनप्रवणं प्रजननं कुर्वन्ति । तावतीमेवोत्तरारणिमथैने[3] आहरत्यश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञियाꣳ संभरामि । शान्तयोनिꣳ शमीगर्भमग्नये प्रजनयितवे ॥ यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा । तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेत्यथैतान्सुसंभृतान्संभारान्पुनरेव संभरति यं त्वा समभरं जातवेदो यथा शरीरं भूतेषु न्यक्तम् । स संभृतः सीद शिवः प्रजाभ्य उरुं नो लोकमनुनेषि विद्वानिति ॥ ६ ॥

अथ वै भवतीन्द्रो वृत्रꣳ हत्वासुरान्पराभाव्य सो ऽमावास्यां प्रत्यगच्छत्ते पितरः पूर्वेद्युरागच्छन्पितॄन्यज्ञो ऽगच्छत्तं देवाः पुनरयाचन्त । तमेभ्यो न पुनरददुस्ते ऽब्रुवन्वरं वृणामहा अथ वः पुनर्दास्यामो ऽस्मभ्यमेव पूर्वेद्युः क्रियाता इति । तमेभ्यः पुनरददुस्तस्मात्पितृभ्यः पूर्वेद्युः क्रियते । यत्पितृभ्यः पूर्वेद्युः करोति पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुत इति ब्राह्मणमथ यदि गां न लभते मेषमजं वा लभते । ऽपि वा घृतमोदनं पक्त्वा तस्योपरिष्टात्प्रभूतमाज्यं पयो वानीय तस्मादेतत्सर्वं करोति यद्गवा कार्यं । विज्ञायते च धेन्वै वा एतद्रेतो

---

१ MSS द्वादशाङ्गुलविस्ती॰ but cp. Rudradatta on Āpast. śra V. 1 2.

२ एव om. BT.

३ ॰रणीम॰ FJT.

यद्यावत्यं पयो वानडुहमाण्डुला इति । गौरेवाङ्गसामान्यात्संप्रत्त्यया[1] अम्बरीषं वोत्तपनीयं वाभिप्रसज्यन्त्यपि वौपासनमेवाभिप्रसज्यन्त्यर्धमौपासनं कुर्वन्ति सर्वं वा । साध्वौदनिकमौपासनं कुर्वन्ति । सो ऽत्र वैव हि क्रियत इति । समानं कर्मा संभारनिर्वपनादथ तृतीयं संभाराणां त्रेधा विभज्य सभ्यावसथ्ययोराहवनीये वा सभ्यावसथ्ययोः संकल्पः । समानं कर्मा समिदाधानात्तत्रैतस्य नानावृक्षीयाः समिधो ऽभ्यभ्यादधाति । कथमत्रानुपूर्व्यं भवत्यश्वत्थस्योदुम्बरस्य पर्णस्य शमी च विकङ्कतस्येत्येतदत्रानुपूर्व्यं भवति । कथमु खल्वैन्द्राग्नादित्ययोरन्त इत्यैन्द्राग्नादित्ययोरन्त[2] उदग्यपदिकं सृजेत्ततो ऽन्यं दग्धहोषर्थं समुद्धरेदिति । तन्त्रसमास[3] एवैतदुपपद्यते नान्यत्र प्रणीतस्याग्नेर्लौकिकत्वार्थमिन्द्रोचा कृतं [4]स्यात्तो ऽग्निः । कर्मान्ते[5] तस्य धारणमित्यपवृत्ते कर्मणि लौकिकः संपद्यते । समिद्धानि तनूहवींषि । समिद्धा अग्न्याधेयदक्षिणा ददाति । तांश्चैवाधिगच्छेदासां ऽप्येतावन्ति सन्त्यान्वौदनान्येतावतो दद्यात्तेमो द्वैवैतं

---

१ Thus HTJ, गौरेव सामान्यात् D; गौरेवांगसमान्यात् F; गौरेवांगसमासान्यात् Be

२ Thus only T; Be °योरंत (the first time); J कथमैन्द्राग्न etc. as T; B om. रत्यै°न्त; H incomplete here, F इतीन्द्रा° instead of रत्यैन्द्रा°।

३ तंत्र or तन्त्र Be BTJ, तत्र HF

४ Thus HB Be, स्यात् om. T

५ °अग्निकर्मा° FT

काममवाप्नोतीत्यपि वैकां गां दक्षिणां दद्यादिति पैङ्गायनि-ब्राह्मणं भवति । स निवा आहिताग्निः स्यादित्याहुर्यो[१] न देवानां वा एषो ऽन्यतमो य आहिताग्निरित्यथ यदग्निमुद्धरति सहस्रं तेन कामदुघो ऽवरुन्द्धे । अथ यदग्निहोत्रं जुहोति सहस्रं तेनेत्यपरिमितमेवेदमुक्तं भवति[२] । ॥ ७ ॥ तृतीयः ॥

अथाग्न्याधेयस्योपवसथ इत्युपकल्पयते गां मार्गमसामहतं वासश्चतुर उदकुम्भांश्चतस्र औदुम्बरीः स्रुच औदुम्बरीं[३] दर्विमेकां वपाश्रपणीमरत्निमात्रामौदुम्बरीमेव सर्वानेवान्यानग्न्याधेयिकान्स्थालीपाकांश्चै-[४]तयशिकान्संभारानेरकोपबर्हणे[५] आसनाभ्यञ्जने आज्यं हय-मुष्टिं स्फ्यं सूपमिति । दक्षिणत एतत्परिश्रितं भवति । तस्यैतस्मिन्परिश्रिते प्रागवादसत्य केशान्तं करोति तूष्णीं । चौलि दर्भपुञ्जीलान्युपनिधाय वपति वपे[५] प्रवपे[६] देवेन सविता प्रसूतो ब्रह्मणा अङ्गिरसो ऽहं यानि म इत ऊर्ध्वं लोमानि तानि मे स्वस्तये सन्त्वित्यथैनमनुसकेशश्मश्रु [७]निखननमुदक्-

---

१ The words स्वे॰ ... स्यात् are omitted by BT

२ Be HFJ repeat the last clause: अपरि॰ ... भवति ; BT om. अपरिमितं।

३ Thus Be H ; ॰वराश्चदाम् T, ॰वरांश्चूदाम् BJ ; ॰वराश्चकदाम् F

४ स्थालीपाकान् corrected acc. to Bh ; MSS. ॰कान्।

५ Thus T, वपेत् the other MSS , also Keś.

६ Thus F, प्रवपेत् the other MSS. except H, which omits the syllable पे The yajus seems to begin with वपे।

७ Thus only Be, निखन the other MSS

ऽनेनाभ्यवनयन्वाचयतीमा म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे। शुद्धाः प्रयुञ्जीमहि क्रतूनिति। स्नातः प्राङुत्सृप्याहतं वासः परिधायालङ्कृत्याग्नि[1] ऽथैनमेकविंशत्या दर्भपुञ्जीलैस्त्रेधा विभक्तैः सप्तभिःसप्तभिस्तूष्णीं[1] पवयित्वोदपात्रमादायेमां दिशं नीत्वा चतुष्पथ एतस्मिन्नेवोदपात्रे ऽवेक्षमाणं पाप्मनो विनिधींश्चावयति सिंहे मे मन्युर्व्याघ्रे मे ऽन्तरामय इत्येतमनुवाकं निगद्य निनीयापः पराञ्च प्राञ्चमनवेक्षमाणा आयन्ति। हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्य पवमानः सुवर्जन इत्येतमनुवाकं यजमानं वाचयन्नद्भिर्मार्जयन्त्या[2]मात्यादिश्रमादीयाम्वाहार्यपचनवेलायाः सादयित्वा शोधयित्वा बर्हिषा परिस्तीर्याज्यं विलाप्योत्पूयोत्तरत एतानुपसादयति[3] चतुर उदकुम्भांस्त्रीनौदुम्बरान्कूलानौदुम्बरीं[4] दर्वीमेकां वपाश्रपणीमविशाखामौदुम्बरीमेव दक्षिणतः सर्वानेवान्याम्नयाग्नीपाकान्पैतृयज्ञिकान्संभारानेरकोपबर्हणे[5] आञ्जनाभ्यञ्जने आज्यं द्वपस्तुष्टिं स्फ्यं स्रुवमिति। दक्षिणतो ऽधिदेवनं करोति। तदेकास्यपश्चाग्रतो[6] ऽयाग्निवपत्यथ[7] स्फ्यमादाय सकृदेव

---

१ Before तूष्णीं T Be ins विषु।

२ Thus Be HBT; न चाभा० JF.

३ ०सादयंति BT.

४ Thus BTH Be; कूलान् J, कलशान् F

५ cp. page ४५, note ४

६ Thus Be FJ and Keś sec. m.; एकव्याग्रपंचा० BT and Keś. pr m, एकव्यार्यंचा० H

७ Thus JFH; ०र्त्यथ BT Be.

दक्षिणोद्धन्त्यपहता असुरा रक्षांसि पिशाचा ये क्षयन्ति पृथिवीमनु। अन्यत्रेतो गच्छन्तु यत्रैषां गतं मन इत्यथैनदद्भिरवोक्षत्युदीरतामवर उत्पराम उन्मध्यमाः पितरः सोम्यासः। असुं य ईयुरवृका ऋतज्ञास्ते नो ऽवन्तु पितरो हवेष्विति ' ॥ ८ ॥

अथोल्मुकमादत्ते य आददानाः स्वधया नवानि पित्र्याणि रूपाण्यसुराश्चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टानस्मात्प्रणुनोत्तु[1] यज्ञादिति ' तेनोद्धतमभितपत्यग्निः पावकः सुदिनानि कृण्वन्नितो ऽसुरान्नुदताद्दूरमोकसः। पितॄणां ये वर्णं कृत्वेह भागमिच्छन्त इति ' तद्दवैव व्यन्तं करोति ' तस्मिन्नुल्मुक आज्यस्तोकं प्रश्चोतयति ' तद्दक्षिणाग्रं बर्हिः स्तृणाति सकृदाच्छिन्नं बर्हिरूर्णामृदु स्योनं पितृभ्यस्त्वा भराम्यहम्। अस्मिन्त्सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चानुगैः सहेत्यथ पितॄनावाहयत्युदीराणा इह सन्तु नः सोम्याः पितरः पितामहाः प्रपितामहाश्चानुगैः सह। असुंगमाः सत्ययुजो ऽवृकास आ नो हवं पितरो ऽद्यागमन्तु॥ एह गच्छन्तु पितरो हविषे अत्तवे। अस्मिन्यज्ञे बर्हिष्यानिषद्य मा वीरः प्र मा युनगित्यथैभ्य एरकोपबर्हणे ,निवेदयत आसनं शयनं चेमे तयोः सोम्यास आगताः। प्रिया अस्माय नो भूत्वा शिवा भवत शंकरा इत्यथैभ्यः

1 Corrected, अनुमोक्तु MSS

पानान्याहरति[१] मधुपानं चीरपाणमू स्तकुपानं यद्वा भवत्यन्यद्‌ब्राह्मणेभ्यो ददात्यन्यदुपनिनयत्येतद्वः पितरः पितामहाः प्रपितामहाः पानमित्यचैकैकेनोदस्तुभेन मार्जयति तूष्णीं । तदग्रान्पर्युपविशन्ति चत्वारः पितापुत्राः । पिता पुरस्ताज्ज्येष्ठो दक्षिणतो ऽनुजः पश्चात्कनिष्ठ[२] उत्तरतो । दाद्याघाग्निपिता प्रच्छिनत्ति । तद्विजयते । दादश ज्येष्ठसंद्विजयते । दादशानुजस्तद्विजयते । ऽथ ये ऽतिशिष्यन्ते ताष्कनीयाऽस्मुपसमूहन्त्यथ[३] यदि द्वौ भवतो दिरायामः पितौप यद्येको जाया तृतीयाथ यदि नैव भवत्युभौ दिरायामौ जायापती । एष एव विधु न्याय । एष एव[४] द्वयोः । शतं शतमित्येव[५] व्यपगच्छन्ति । धूना गौरित्युक्तोत्तिष्ठन्त्यथैभ्यो बर्हिरादाय गामुपाकरोति पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टामुपाकरोमीति । तूष्णीमित्येके । ऽथैनामद्भिः प्रोक्षति पितृभ्यस्त्वा पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टां प्रोक्षामीति । तूष्णीमित्येके । तामत्रैव प्रतीचीनशिरसीं[६] दक्षिणापदीं संज्ञपयन्ति । तस्यै संज्ञप्ताया अद्भिरभिषेकं प्राणानाप्याययति तूष्णीं । तूष्णीं वपामुत्खिद्य हृदयमुद्धरति प्रज्ञा-

[१] Thus BF and Keś sec m, चाहारयति Be HJ, Keś. pr. m.; चाहारामयति T.

[२] Thus B Be J and Keś., कनिष्ठ H, कनीयान् the other MSS

[३] Thus TBJ, the other MSS more or less corrupt.

[४] एव *only in B Be H Bh.*

[५] एव *B Be HF*, एवं *TJ*

[६] Thus all the MSS.

तानि पावदानानि प्रज्ञातौ च मतस्नू[1] तान्देतेष्वेव शूलेषूपनिष्ठ्यैतस्मिन्नेवाग्नौ[2] श्रपयन्ति। शृतायां वपायां पञ्च स्रुवाकृतीर्जुहोति ॥ ९ ॥

याः प्राचीः संभवन्त्याप उत्तरतश्च याः। अद्भिर्विश्वस्य भुवनस्य धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमः स्वाहा ॥ अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या। दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं पितामहाद्दधे स्वधा नमः स्वाहा ॥ अन्तर्दध ऋतुभिः सर्वैरहोरात्रैः ससन्धिकैः। अर्धमासैश्च मासैश्चान्तरन्यं प्रपितामहाद्दधे स्वधा नमः स्वाहा ॥ यन्मे माता प्रलुलोभ चरत्यननुव्रता। तन्मे रेतः पिता वृङ्क्तामाभुरन्योपपद्यताꣳ स्वधा नमः स्वाहा ॥ यदः क्रव्यादङ्गमदहल्लोकाननयन्प्रणयञ्जातवेदाः। तद्वो अहं पुनरावेशयाम्यरिष्टाः सर्वैरङ्गैः संभवत पितरः स्वधा नमः स्वाहेति। त्रेधा वपां विच्छिद्यौदुम्बर्या दर्व्या जुहोति सोमाय पितृमते शुष्मिणे जुह्मो हविः। वाजिमिदं जुषस्व नः स्वजा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा ॥ अङ्गिरस्वन्तमूतये यमं पितृमन्तमाहुवे। वैवस्वते दमद्धि नः स्वजा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा ॥ यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृधः। प्र देवेभ्यो वहा[3] हव्यं पितृभ्यश्च स्वजा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहेति।

---

१ Thus all the MSS.

२ Thus only TJ, the other MSS corrupt, comp. Baudh gṛhs. I, 1

३ वह BF

तूष्णीं दर्वीमभ्याधाय पिण्डानामावृतैतान्यवदानानि ददाति हृदयमेवापि ऽथ सव्यं मतस्नमथ दक्षिणमेतत्ते ततासौ ये च त्वामनु याꣳश्च त्वमत्रान्वसेषा[१] ते तत स्वधाचितिर्यावती पृथिवी तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददामि पृथिव्या मितमसि तताय मा क्षेष्ठा इति । द्वितीयं ददात्येतत्ते पितामहासौ ये च त्वामनु याꣳश्च त्वमत्रान्वसेषा ते पितामह स्वधाचितिर्यावदन्तरिक्षं तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददाम्यन्तरिक्षेण मितमसि पितामहाय मा क्षेष्ठा इति । तृतीयं ददात्येतत्ते प्रपितामहासौ ये च त्वामनु याꣳश्च त्वमत्रान्वसेषा ते प्रपितामह स्वधाचितिर्यावती द्यौस्तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददामि दिवा मितमसि प्रपितामहाय मा क्षेष्ठा इत्यथ पितरो यथाभागं मन्दध्वमित्युक्त्वैकैकेनोदकुम्भेन मार्जयति तूष्णीमेवैभ्यो गामुपपरेत्य लोहितमुपप्रवर्तयति यानि रक्षाꣳस्यसृग्भागानि ये चापि पितरो हरन्तां विहरन्तां तृप्यन्तु रुधिरस्य ते ॥ ये नः पतिता गर्भा असृग्भाज उपासते । तेभ्यः स्वजा स्वधा नमस्तृप्णुवन्तु मदन्तु च ॥ य आमा ये च[२] पक्वा ये च दुष्टाः पतन्ति नः । तेभ्यः स्वजा स्वधा नमस्तृप्णुवन्तु मदन्तु च ॥ ये कुमारा याः स्त्रियो

---

१ Here and in the corresponding passages further on the MSS. have °न्वधेषा instead of °न्वसेषा ।

२ om. BT and two MSS of the grhya-sūtra

ये ऽविज्ञाताः पतन्ति नः। तेभ्यः स्वजा स्वधा नमस्तृप्णुवन्तु मदन्तु चेत्यागत्याञ्जनं ददात्यथाभ्यञ्जनं ददात्यथ वासांसि ददात्यथ पञ्चभिर्नमस्कारैर्विपर्यासमुपतिष्ठते ऽथ वीरं याचते ऽथैनानुत्थाप्य प्रवाह्य तिसृभिर्मन आह्वयते मनो न्वाह्वामह आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यथैतद्वहतं वास एवंविदे ब्राह्मणाय दत्त्वान्यदस्नानीयं[1] वासः परिधाय दक्षिणोपपरेत्याद्भिर्मार्जयते ॥ १० ॥

यासु गन्धा रसा वर्णा बलं च निहिते[2] उभे। ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे॥ या ऊर्जमभिषिञ्चन्ति देवप्रेषिता महीम्। ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे॥ यासां निष्क्रमणे सर्वमिदं जायते जगत्। ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे॥ यासामिमे त्रयो लोकास्तेजसा यशसावृताः। ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे॥ याः प्राचीर्या दक्षिणा याः प्रतीचीर्या उदीचीर्या ऊर्ध्वा रेवतीर्मधुमतीरापः स्रवन्ति शुक्राः। ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु म इत्यथैतदस्नानीयं वासो विमुच्यान्यत्परिधाय प्राजापत्ययर्चाग्निमिद्धेति प्रजापते न त्वदेतान्यन्य इत्यथोल्मुकमपिसृजत्यभद्रतो[3] हविषो जातवेदा

१ Thus H Be J, वसनीय the other MSS.

२ Thus Be HTF; निचिहिते B, निहितेषु I.

३ Thus HBTJ Be, F reads with Āp. Hir. Bhār. the mantra with नो।

श्वाङ्कव्यानि सुरभीणि कृत्वा। प्रादाः[१] पितृभ्यः स्वधया ते अचन्प्रजानन्नग्ने पुनरप्येहि देवानित्यन्वैतान्यवदानानि ब्राह्मणेभ्यो ददाति हृदयमेवाग्नेऽथ सव्यं मतस्नमथ दक्षिणं यथाश्रद्धमन्नं कुरुते। गामेतामङ्गशः कृत्वा ब्राह्मणेभ्यो वरं[२] ददाति। स[३] ये ह के चैतस्यै मांसं लभन्ते सर्वे ह वा अस्यै ते गोभाजश्चो भवन्त्यामात्ये[४] जयानभ्यातानाम्राष्ट्रभृत इति कृत्वामात्यहोमा-ञ्जुहोत्येष ह वा उपवमथ। उप ह्यस्मिन्देवा वसन्ति मात-र्जिष्ठामो वामं वस्वित्येतद्ध वै देवानां वामं वसु यदाग्नेयो ऽष्टाकपाल। उप हैनं वामं वसु गच्छति यस्य ह वा एता-मेवंविद्वान्गां कल्पयते[५]। सर्वं पाप्मानं तरति। तरति ब्रह्म-हत्यामप पुनर्मृत्युं जयतीति होवाच प्रजापतिस्तानि ह वा एतानि कूश्माण्डानीत्याचक्षते काजवानीति[६] वामात्यहोमा इति वातीमोचा[७] इति वा। स यत्किं चास्मिँल्लोके पापं

---

१ प्रादात् Be only २ om. Be H

३ Thus T only; F ददाति स ये ह केचैतस्यै, B Be H · ददात्यथैतस्यैके-चैतस्यै; J ददातियेषकेचैतस्यै; Bb. reads *with* स।

४ Thus T, B: गोभाजश्चो भवंसमात्ये; FH गोभागश्चोभव (or वे) त्यमात्ये; J गोभाजोतश्चिद्रेवाग्नोभवत्याजमोमात्ये; Be presents the same reading as T, but समात्ये instead of चामात्ये।

५ Thus B Be TH, the other MSS कल्पयति।

६ Uncertain. The above given in the reading of T; काजपानीति J, काजपानिति F, काजयानीति HB Be, probably Maitr S. II. 1. 4 काजवं is to be compared.

७ Thus TJF वातिमोचा B Be H

कर्म करोति सर्वस्मात्तस्मात्पाप्मनो विमुच्यानृणः स्वर्गं लोकमेतीति होवाच प्रजापतिः ' ॥ ११ ॥ चतुर्थः ॥

अग्नीनाधास्यमानो भवति स उपकल्पयत ऊषांश्च सिकताश्चाखूत्करं च वल्मीकवपां च सूदं च वराहविहतं च पुष्करपर्णं च शर्कराश्चेत्यष्टौ पार्थिवा ' अथ वानस्पत्या अश्वत्थस्योदुम्बरस्य पर्णांश्च शमीं च विकङ्कतस्याशनिहतस्य शमीगर्भावरणी[1] मुञ्जकुलायं चित्रियस्याश्वत्थस्य तिस्रः समिध आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्रीरप्रतिशुष्काग्राः षड्ढिरण्यशल्कांस्त्रीन्सौवर्णांस्त्रीन्राजतानश्वं पूर्ववाहं रथचक्रं ब्राह्मौदनिकान्व्रीहीन्सर्वौषधं रोहितं चर्मानडुहं नवानि यज्ञपात्राणीत्यथास्मा[2] अरणी आहरति यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा । तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेत्यथातो नक्षत्राणामेव मीमांसा ' कृत्तिकास्वग्निमादधीत ' रोहिण्यामग्निमादधीत ' पुनर्वस्वोरग्निमादधीत ' पूर्वयोः फल्गुन्योरुत्तरयोः फल्गुन्योश्चित्रायामित्यथात ऋतूनामेव मीमांसा ' वसन्ते ब्राह्मणोऽग्निमादधीत ' ग्रीष्मे राजन्यः ' शरदि वैश्यो ' वर्षासु रथकार इत्यथो खलु यदैवैनं[3] श्रद्धोपनमेदथादधीत ' सैवास्यर्द्धिरिति ' तदेतदा-

---

१ Thus B Be HF, शमी॰ TJ.

२ इति om JF (H is defect here)

३ Thus BT Ke6 यदैवैनं JHF Be, but cp Sayana on T Br. I 1 2 8 (page 13 of the commentary)

तस्यातिवेलं वा श्रद्धायुक्तस्य[1] वै ब्राह्मणं भवति यो रोहिण्यामग्निमाधत्त[2] ऋध्नोत्येव सर्वावीरावोद्वतीति । सा या वैशाख्याः पौर्णमास्या उपरिष्टादमावास्या भवति सा संवत्सरस्य रोहिण्या संपद्यते तस्यामादधीतेत्यथास्यैतत्पुरस्तादेव जुष्टे देवयजने ऽगारं वा विमितं वा कारितं भवति । तस्य द्वे द्वारौ कुर्वन्ति प्राचीं च दक्षिणां च । मध्ये गार्हपत्यस्यायतनं कुर्वन्ति । पुरस्ताद्द्वादशसु विक्रामेष्वा[3]हवनीयस्यापि वा चतुर्निमिते । दक्षिणतो विपुवत्यन्वाहार्यपचनस्यापि वा यथा द्वौ भागौ प्राक् स्यातामेकः पश्चादित्येवं । वेधोद्धत्यावोक्ष्य केशश्मश्रु वपते । नखानि निकृन्तते । एवं पत्नी केशवर्जमुभौ मानुषेणालङ्कारेणालङ्कृतौ भवतो ऽहतवाससावथाभ्यां व्रतोपायनीयं पाचयति[4] । तस्याशितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्य । ॥ १२ ॥

अथाधिवृक्षसूर्ये याचति सर्वौषधमाज्यस्थालीं स्रुवां स्रुचं बर्हिर्वासो दीप्याङ्कुकलानित्येतत्समादाय संप्रक्रम्या अम्बरीषं वोत्तपनीयं वाभिप्रव्रजन्ति । तस्मिन्दीप्याङ्कुकलान्संप्रकीर्य बर्हिषा परिस्तीर्याज्यं विलाप्योत्पूयाञ्जलिनोपस्ती-

---

१ Thus J (omitting एतद्) and H ; T वातंस्यातिवेलंवाश्रद्धायुक्तस्याय ; B Be F : ०तिवेलं (or वार्य) श्रद्धायुक्तस्यादय ।

२ Thus HJT, ०मादधीत the other MSS.

३ Thus BJT (the last विक्रामे०) ; विक्रमे० FH Be.

४ Thus Be HJ , वाचयति T (grantha ?) and F , याचयति B.

णाभिघारितꣳ सर्वौषधं जुहोत्यग्नये सर्वौषधाय पुष्ट्यै प्रजननाय स्वाहेत्यथ जयानभ्यातानाꣳ राष्ट्रभृत इति हुत्वामात्यहोमाञ्जुहोत्यथ स्रुचि चतुर्गृहीतं गृहीत्वा प्राजापत्यां जुहोति प्रजापते न त्वदेतान्यन्य इत्यथापरं चतुर्गृहीतं गृहीत्वानुख्यां जुहोत्यन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः। अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततान स्वाहेत्यथैतानङ्गारान्पात्रे वा शरावे वा यजमानो गृह्णात्यायुषे वो गृह्णामि तेजसे वो गृह्णामि तपसे वो गृह्णामि[1] वीर्याय वो गृह्णामि ब्रह्मवर्चसाय वो गृह्णामीत्यथैनानादायोपोत्तिष्ठत्यायुर्मामाविशतु भूतिर्मामाविशतु ब्रह्मवर्चसं मामाविशत्विति। तानध्वर्यवे संप्रदायोदायन्त्यन्वारब्धे यजमाने। एतेनैव यथेतमेत्योत्तरेणागारं परीत्य[2] पूर्वया द्वारा प्रपाद्य गार्हपत्यस्यायतने न्युप्योपसमादधाति। परिस्तृणन्ति। दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथैतद्रोहितं चर्मानडुहं जघनेनाग्निं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। तस्य वहसः काले चतुरः पात्र्यां व्रीहीन्निर्वपति[3] ब्रह्मणे जुष्टं निर्वपामीति वा तूष्णीं वाथ निरुप्तानभिमृश्याकूत्यै त्वा कामाय त्वा समृधे[4] त्वेत्यथैतान्व्रीहीन्कूर्पे अवधायाद्भिरभ्युक्ष्य चर्मोद्वहत्यथैतस्मिन्नेव[5]

---

1 Before वीर्याय B ins. ओजसे वो गृह्णामि। 2 प्रणीय B Be
3 T and Ke's, perhaps rightly, व्रीहीणां i. e. of व्रीहीन्।
4 Thus all, except T, which has समृद्ध्यै, but cp. T. Br. II. 5. 3. 2
5 उद्वहति B.

चर्मण्युलूखलमुसले निधायावहन्त्यथैतेनैव पात्रेण चतुर उदपात्रानानयति यदि वीडिता स्थाली भवति । यद्यु वा अवीडिता पञ्च वा भूयसो वा । स समोदकः संपद्यते ॥१३॥

तं य एव कश्च[1] कुशलः परीक्षेण[2] श्रपयित्वाभिघार्योद्वासमुद्वासयत्यथैनमाग्नेयतिगव[3] ऋत्विग्भ्यः प्राञ्चमुपसंगच्छन्त एतमेत ऋत्विजो[4] ऽथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनममंघ्रचिवोद्धरति । सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयाथैतस्यैवौदनस्योपघातं[5] जुहोत्युपतिष्ठते वा प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्त्व देवान्यजे हेडाग्ध्वादित्यथैनाऽश्चतुर आर्षेयानुत्तरतोऽनुदिशमुपवेश्य तानानुपूर्वमाचमय्य[6] तेभ्य एनं भूमिष्ठ स्पृशन्नुच्छिन्दन्निवोपोहति । त्रिः प्राश्य प्राश्नन्ति[7] राद्धमो ब्रह्मौदन इति । तेभ्यः माण्डं वत्सतरं ददात्यथैष उत्तरत आसीनो ब्राह्मणः चामकार्यं प्राश्नाति । तस्मै यदस्योपकल्पते[8] तद्ददात्यथ

---

१ कश्चन B Be and Keś ; कश्चित् T , कश्च the other MSS.

२ Thus HJ Be ; परीक्षेन B ; परिक्षेन T , परिक्षेण F

३ Thus H Bh , Keś ; आग्नेयतिगवम् B , आग्नेयीगव Be J ; आग्नेयीगवे कामे F ; आग्नेयतिं T.

४ Thus Be F ; एतदृत्विजो HBJ , T om एत ।

५ Thus H ; ओदन the other MSS

६ आनुपूर्वं J

७ Thus H Be T F, Keś , प्राश्नन्ति the other MSS

८ Thus F only , the other MSS कल्पते ।

यदाज्यमुच्छिष्यते तेन समिधावभ्यज्याऽऽदधाति समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आस्मिन्हव्या जुहोतन स्वाहा ॥ उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत। जुषस्व समिधो मम स्वाहा ॥ तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य स्वाहेति गायत्रीभिर्ब्राह्मणस्य त्रिष्टुब्भी राजन्यस्य जिघर्म्यग्निमा त्वा जिघर्म्यायुर्दा अग्ने हविषो जुषाण इति जगतीभिर्वैश्यस्य जनस्य गोपा अजनिष्ट जागृविस्त्वामग्ने मानुषीरीडते विशः सप्त ते अग्ने समिधः सप्त जिह्वा इति समित्सु वत्सतरीं ददाति ॥ १४ ॥

अथास्मा अरणी प्रयच्छन्नाह वाचंयमो भविष्यसि सꣳस्थाधि यज्ञे सꣳस्थास्यमिति स आह ब्राह्मणानामयनार्थं गोपायत संभारान्निधत्तेति तस्य सुभिक्षमन्वाधेयं भवति साग्न्याधेयस्य समृद्धिस्तदाहुर्नाग्न्याधेये गां कुर्वीत घोररूपमिति कुर्वीतैवापि[1] त्वेव न कुर्वीतापि बह्वीरपि कुर्वीतानु चैतस्य भवेत्पुण्या प्रशꣳसेति कात्यो[2] ऽथास्मा अरणी प्रयच्छति ते प्रतिगृह्णाति मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम्। अन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथः पुरोगाम् ॥ आरोहतं दशतꣳ शक्वरीर्ममर्तेनाग्न आयुषा वर्चसा सह। ज्योग्जीवन्त उत्तरामुत्तराꣳ समां दर्शमहं पूर्णमासं यज्ञं यथा यजा इत्यथैने उपनिगृह्णात्यृत्विय-

---

१ Thus JFH Be, कुर्वीतैवापि B, T totally corrupt.

२ cp Draidha I, 16

वतौ स्थो अग्निरेतसौ गर्भं दधायां ते वामहं ददे। तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः। ते मत्प्रातः प्रजनिष्येथे ते मा प्रजाते प्रजनयिष्यथः। प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोक इत्यथैनमनृतात्सत्यमुपनयति मानुषाद्दैव्यमुपनयतीदमहमनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामीति। तं वाचंयमꣳ रात्रिं जागरयन्त आसते। यस्मैमाꣳ रात्रिमग्निमिन्धते यस्मैरग्निमिन्धान उभौ लोकौ सनेमहम्। उभयोर्लोकयोर्ऋध्वाति मृत्युं तराम्यहमित्युत्तरेण गार्हपत्यस्यायतनं कल्माषमजं बध्नाति तेनैनमाधास्यमानꣳ संख्यापयति प्रजा अग्ने संवासयाशाश्च पशुभिः सह। राष्ट्राण्यस्मा आधेहि यान्यासन्त्सवितुः सव इति॥ १५॥

पञ्चमः[1]॥

अथाध्वर्युरपररात्र आहृत्यारणी निष्टपति जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते। अग्निमश्वत्थादधि हव्यवाहꣳ शमीगर्भाज्जनयन्यो मयोभूः॥ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन्न आरोहाथा नो वर्धया रयिमित्यथैतमग्निꣳ हते मनुष्य दक्षिणतो ज्वलयन्त आसते।

1 According to Bhavasvāmin, who divides our second praśna in two parts (the second beginning after khaṇḍa 11), the adhyāya number is षष्ठः, the khaṇḍa number according to T, which has the same division, is 4 in B 16, but the adhyāya number here also is षष्ठः।

ऽथैतान्यग्न्यायतनानि मृत्पिण्डेन परिलेपयत्यथ तृतीयꣳ संभाराणामादाय गार्हपत्यस्यायतने निवपति यत्पृथिव्या अनाम्रतꣳ संबभूव त्वे सचा। तदग्निरग्नये ऽददात्तस्मिन्नाधीयतामयमिति। स यत्रोषानुपाधिगच्छति तज्जपति यद्दस्यन्द्रमसि कृष्णं तदपीहेत्यथैनानादधाति दिवस्त्वा वीर्येण पृथिव्यै महिम्ना। अन्तरिक्षस्य पोषेण सर्वपशुमादध इत्यथैनान्संप्रयौति सं वः सृजामि हृदयानि सꣳसृष्टं मनो अस्तु वः। सꣳसृष्टः प्राणो अस्तु वः॥ सं या वः प्रियास्तनुवः संप्रिया हृदयानि वः। आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो ममेत्यथैनान्कल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः। कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः॥ ये ऽग्नयः समनसो ऽन्तरा द्यावापृथिवी। वासन्तिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्त्वित्यथातिशिष्टानाꣳ संभाराणामर्धानादाय दक्षिणया द्वारोपनिष्क्रम्यान्वाहार्यपचनस्यायतने निवपति यदन्तरिक्षस्यानाम्रतꣳ संबभूव त्वे सचा। तद्वायुरग्नये ऽददात्तस्मिन्नाधीयतामयमिति। स यत्रोषानुपाधिगच्छति तज्जपति यद्दस्यन्द्रमसि कृष्णं तदपीहेति। तथादधाति। तथा संप्रयौति। तथा कल्पयत्यथैतेनैव यथेतमेत्यातिशिष्टान्संभारानादाय पूर्वया द्वारोपनिष्क्रम्याहवनीयस्यायतने निवपति यद्दिवो ऽनाम्रतꣳ संबभूव त्वे सचा। तदादित्यो ऽग्नये ऽददात्तस्मिन्नाधीयतामयमिति। स यत्रोषानुपाधिगच्छति तज्जपति यद्दस्यन्द्रमसि कृष्णं तदपीहेति।

तथादधाति । तथा संभयीति । तथा कल्पतेत्यथ गोभारꣳ समादिशति । स आह विहृता अग्नयो मा कश्चनान्तरेण संचारीदित्यथाध्वर्युः प्रदक्षिणमाहृत्य प्रत्यङ्ङाहृत्य[1] गार्हपत्यस्यायतन उपरि संभारेषु मुञ्जकुलायं निदधाति । तस्मिन्प्राचीनप्रजननामरणिं[2] निधाय दशहोत्रोत्तरारणिमवदधाति । स आह मन्थतेति । यजमानः प्रथमो मन्थति । यजमान उत्तमो मन्थति । जनयति । जाते वरं ददामीति वाचं विसृजते । ऽथैनमुपतिष्ठते ऽग्नौ जनन्नमृतं मर्त्यासो ऽस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः पुमाꣳसं जातमभिसꣳरभन्तामित्यथैनमभिप्राणिति प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शतशारदाय शतꣳ शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय ॥ आग्ने त्वामग्नमादधाम्यन्नादमन्नाद्याय गोभारं गुप्त्या इत्यथोद्गातारमाह रथन्तरं ब्रूहीत्यथैनमादधाति । भूर्भुवो घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ ॥ भृगूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामीति भृग्वङ्गिरसामादध्यादादित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानां । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञ । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनादधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रतेना-

---

१ After आहृत्य HFJ ins अथैनम्

२ Instead of अरणिं B has अधरारणिं, Bc अधरारणीं, H अरणी

दधामीति वैश्यस्य ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्येति यथर्षि यथागोत्रं गायत्रेण छन्दसेत्युत्तरतो हिरण्यशल्कमुपास्यति स्वया तनुवा संभवेत्यथैतꣳ राजतं वृषलाय वाश्रान्ताय वार्तिमयच्छत्यार्तिमेवार्तिप्रयच्छतीति ब्राह्मणमथैनमुपतिष्ठते अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि। ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः॥ सुगार्हपत्यो विदहन्नरातीरुषसः श्रेयसीःश्रेयसीर्दधत्। अग्ने सपत्नाꣳ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहीति ॥ १६ ॥

अथैतमग्निमाददते य एष घते मथितो भवति तं दक्षिणया द्वारोपनिर्हृत्यान्वाहार्यपचनमादधाति भूर्भुवो वातः प्राणस्तद्यमग्निः संप्रियः पशुभिर्भुवत्। स्वदितं तोकाय तनयाय पितुं पच॥ अग्नीनां त्वा देवानां व्रतपते व्रतेनादधामीति यथर्षि यथागोत्रं गायत्रेण छन्दसेत्युत्तरतो हिरण्यशल्कमुपास्यति स्वया तनुवा संभवेत्यथैतꣳ राजतं वृषलाय वाश्रान्ताय वार्तिमयच्छत्यार्तिमेवार्तिमयच्छतीति ब्राह्मणमपि वा गार्हपत्यादेवान्वाहार्यपचनमादधाति प्रजापतिरग्निमसृजत सो ऽबिभेत् मा धक्ष्यतीति तस्य त्रेधा महिमानं व्यौहच्छान्त्या अप्रदाहायेत्येतस्माद्ब्राह्मणादथैनमुपतिष्ठत इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेय। इहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेद इत्यथैतमेवाभ्यादधातीध्मं प्रणयतीयं तं

तथादधाति । तथा संप्रयौति । तथा कल्पतत्येव गोष्ठारं समादिशति । स आह विहृता अग्नयो मा कदनान्तरेण संचारीदित्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य[1] गार्हपत्यस्यायतन उपरि संभारेषु मुञ्जकुलायं निदधाति । तस्मिन्नतौचीनप्रजननामरणिं[2] निधाय दक्षिणेनोत्तरारणिमवदधाति । स आह मन्थतेति । यजमानः प्रथमो मन्थति । यजमान उत्तमो मन्थति । जनयति । जाते वरं ददामीति वाचं विसृजते । ऽथैनमुपतिष्ठते ऽग्नीजनन्नमृतं मर्त्यासो ऽस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभिसंरभन्तामित्यथैनमभिप्राणिति प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शतशारदाय शतं शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय ॥ प्राणे त्वामृतमादधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्या इत्यथोद्गातारमाह रथन्तरं ब्रूहीत्यथैनमादधाति । भूर्भुवो घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ ॥ भृगूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामीति भृग्वङ्गिरसामादध्यादादित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानां । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञ । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनादधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रतेना-

१ After आद्रुत्य HFJ ins. जघनेन

२ Instead of अरणिं B has अधरारणिं, Be अधरारणीं, H अरणी

प्रदक्षिणमाहृत्येध्मं प्रतिष्ठापयति यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः । तयोः पृष्ठे सीदतु जातवेदाः शम्भूः प्रजाभ्यस्तनुवे स्योनः ॥ प्राणं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्या इत्यथोद्गातारमाह वारवन्तीयꣳ श्यैतमिति[1] गायेति ' सर्वाणि संप्रेष्यति[2] ' हरति गीयमान आहवनीयमादधाति भूर्भुवः सुवरर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः संप्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वादधेऽग्निनाग्ने ब्रह्मणा अमीषां त्वा देवानां व्रतपते व्रतेनादधामीति ' यथर्षि यथागोत्रं ' गायत्रेण छन्दसेत्युत्तरतो हिरण्यशल्कमुपास्यति स्वया तनुवा संभवेत्यथैतꣳ राजतं वृषलाय वाज्ञाताय वातिप्रयच्छत्यार्तिमेवातिप्रयच्छतीति ब्राह्मणमथैनमुपतिष्ठत आनग्ने व्यानग्ने सर्वमायुर्व्यानश इत्यथैतावग्नी आदधाति सभ्यं चावसथीयं च[3] ' रथचक्रं प्रवर्तयति संततं[4] गार्हपत्यादाहवनीयात् ' ॥ १७ ॥

सर्वौषधेन व्याहृतीभिरग्नीन्त्समचित्वा[5] पञ्चपञ्च नानावृक्षीयाः समिधोऽभ्यज्याभिदधाति समिध्यमानः प्रथमो नु धर्म इत्येताभिः पञ्चभिरायुर्दा अग्ने हविषो जुषाण इत्येता-

---

१ B Be ins. साम before गायेति, T श्यैतयौतसामगायेत

२ Thus B Bb , the other MSS. संप्रेष्य

३ BH चाव    ४ Thus HB Be J , संततं the other MSS.

५ Thus only J, the other MSS आहुतिभि॰

तथाभ्यादधाति यथा मन्यते ऽर्धोदिते सूर्य आहवनीय[1] आधीयमानः संपत्स्यत इति । तस्य तथा संपद्यत । उपोपयमनीः कल्पयन्त्यथ एष पूर्ववाट् पत्नूम्नितः पुरस्तात्तिष्ठत्यथो-द्गातारमाह वामदेव्यं गायेत्यथैनमुपस्थकृत ओजसे बलाय त्वोद्यच्छे वृषणे शुष्मायायुषे वर्चसे । सपत्नतूरसि वृत्रतूः ॥ यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः । पुष्टिर्या ते मनुष्येषु पप्रथे[2] तया नो अग्ने जुषमाण एहि ॥ दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः । यत्र-यत्र जातवेदः संबभूथ ततो नो अग्ने जुषमाण एहीतीय-त्यग्रे हरत्यथैयत्यथैयत्यधोऽधः गिरो हरतीति ब्राह्मणमाद-दान एवैता मात्रा अभिसंपादयेदित्येतदपरमश्वं पूर्वं नयन्ति । तमनुमन्त्रयते प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पद इति । विषुवत्युपरमन्ति विक्रमस्व महाꣳ असि वेदिषन्मानुषेभ्यस्त्रिषु लोकेषु जागृहीत्यथोपातियन्त्यश्व-मिरुपशामपसख्यद्न्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततानेत्यथैतेनाश्वेन प्राचोत्तरतः पार्श्वतः संभाराणामाक्रमयति यथाहितस्याग्नेर-ङ्गारा अभ्यववर्तेरन्नित्यथैनं प्रदक्षिणमावर्त्याद्भिरभ्युक्ष्योदञ्च-मुत्सृजति[3] । स एषो ऽध्वर्योर्भवत्यन्यं ब्रह्मणे ददात्यथ १०

१ om T. २ पप्रथे B Be H ३ आवर्त्य FHJ, आहृत्य B Be T.

प्रदक्षिणमावृत्यैवैनं प्रतिष्ठापयति यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः। तयोः पृष्ठे सीदतु जातवेदाः शम्भूः प्रजाभ्यस्तनुवे स्योनः॥ प्राणं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्या इत्यथोद्गातारमाह बृहद्रथन्तरयोरन्वेतमिति[1] गायेति । सर्वाणि संप्रेष्यति[2] । बृहति गीयमान आहवनीयमादधाति भूर्भुवः सुवरर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः संप्रियः पशुभिर्भुवत्। यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वादधे ऽग्निनाग्ने ब्रह्मणा अमीषां त्वा देवानां व्रतपते व्रतेनादधामीति । यथर्षि यथागोत्रं । गायत्रेण छन्दसेत्युत्तरतो हिरण्यशल्कमुपास्यति त्वया तनुवा संभवेत्यथैनꣳ राजतं वृषलाय वाज्ञाताय वातिप्रयच्छत्यार्तिमेवातिप्रयच्छतीति ब्राह्मणमथैनमुपतिष्ठत आनशे व्यानशे सर्वमायुर्व्यानश इत्यथैतावग्नी आदधाति सभ्यं चावसथीयं च[3] । रथचक्रं प्रवर्तयति संततं[4] गार्हपत्यादाहवनीयात् । ॥ १७॥

सर्वौषधेन व्याहृतीभिरग्नौ प्रमथित्वा[5] पञ्चपञ्च नानावृक्षीयाः समिधो ऽभ्यज्याभिदधाति समिध्यमानः प्रथमो नु धर्म इत्येताभिः पञ्चभिरायुर्दा अग्ने हविषो जुषाण इत्येता-

---

[1] B Be ins. साम before गायेति, T ॰मित्येतत्सामगायेन

[2] Thus B Bu , the other MSS संप्रेष

[3] BH चाथ  [4] Thus HB Be J , संततं the other MSS.

[5] Thus only J, the other MSS व्याहृतिभि॰

मपोद्धृत्याथ प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य जघनेन गार्हपत्यं तिष्ठंस्तनूभिरुपतिष्ठते ये ते अग्ने शिवे तनुवौ विराट्च स्वराट्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ सम्राट्चाभिभूश्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च ते मा विशतां ते मा जिन्वताम्। यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादध इति [१] सर्वाभिर्गार्हपत्यꣳ [१] सर्वाभिरन्वाहार्यपचनꣳ [१] सर्वाभिराहवनीयमथ घोरास्तनूरनुदिशति यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेत्यथ यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप उपस्पृश्य विराजकमैरुपतिष्ठते [१] नर्य[२] प्रजां मे गोपाय। अमृतत्वाय जीवसे। जातां जनिष्यमाणां च। अमृते सत्ये प्रतिष्ठितामिति गार्हपत्यमथर्व पितुं मे गोपाय। रसमन्नमिहायुषे। अदब्धायो ऽशीततनो। अविषः पितुं कृण्वित्यन्वाहार्यपचनꣳ [१] शꣳस्य पशून्मे गोपाय। द्विपादो ये चतुष्पदः। अष्टाशफाश्च य इहाग्ने। ये चैकशफा आशुगा इत्याहवनीयꣳ [१] सप्रथ सभां मे गोपाय। ये च सभ्याः सभासदः। तानिन्द्रियावतः कुरु। सर्वमायुरुपासतामिति सभ्यमहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रैविदा विदुः। ऋचः सामानि यजूꣳषि। सा हि श्रीरमृता सतामित्यव-

---

१ ध्यायेदित्यथाप B Be

२ Of these mantras J gives only the pratikas

सधीयमथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्याहवनीये पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इति । पूर्णाहुतौ वरं ददात्यथैतान्यग्निहोत्रपात्राणि प्रक्षालितान्युत्तरेण गार्हपत्यमुपसादयति कूर्चे वा सूनायां वा स्थालीꣳ[1] सस्रुवाꣳ स्रुचमभिघोतनꣳ समिधमित्यथैतामग्निहोत्रीं दक्षिणत उदीचीꣳ स्थापयित्वा ब्राह्मणो[2] दोग्धि । पूर्वौ दुह्यादपरौ दुह्यान्न संसृष्टेद्द्वयोर्दुह्यात्पशुकामस्येत्यधिश्रित्योत्तरमानयत्यथैतदग्निहोत्रमग्रेणाहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमुपसाद्य तस्मिन्नग्निहोत्रविधिं चेष्टित्वा समिधमुपयत्य प्राङ् हरति । जघनेनाहवनीयमुपसादयति कूर्चे । ऽथैताꣳ समिधं मध्यत आहवनीयस्याभ्यादधाति तूष्णीं । तस्यामादीप्तायां प्रतिमुखं द्विर्जुहोत्युभ माध्यंव[3] च माध्युभयमवाप्नोतीति ब्राह्मणं । द्विरङ्गुल्या प्राश्योदङ् पर्यावृत्य प्राचीनदण्डया स्रुचा भक्षयति । निर्णिज्य स्रुचं निष्ट्याद्भिः पूरयित्वोदगुद्दिशति । सप्तर्षीनेव[4] प्रीणातीति ब्राह्मणꣳ । हुत्वोपसमिन्द्धे ब्रह्मवर्चसस्य समिद्ध्या[5] अपो निनयत्यवभृथस्यैव रूपमकरिति[6] ब्राह्मणम् । ॥ १८ ॥

---

१ आज्यस्थालीꣳ H.

२ Thus BT; ब्राह्मणे F, ब्राह्मणोवा Bo, ब्रह्मणोवा J, ब्राह्मणोवै H.

३ Thus JT and Venk on Karmānta I. 17, ऊर्ध्वमार्हि Bo, ऊर्ध्वमार्हि BB; ऊर्ध्वार्हि F

४ Thus B Be HF, सप्तऋषीनेव TJ

५ Thus corrected, समिध्या अपो B Be HF, समिध्या आपो J, समिध्यापो T

६ Thus only B Be, cp Taitt Br II 1 1, 9 The other MSS. have अभ्योतिष्ठतीति instead of अकरिति।

वोरुणोपनिगृह्णीते[1] ऽथेतराणि प्राञ्चहृत स्तृणन्नेति तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्-अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनमित्यथ यान्यतिशिष्यन्ते तानि बर्हिषि प्रत्यस्यत्यापृणो ऽसि संपृण प्रजया मा पशुभिरापृणेत्यथ यथाप्रपन्नं निष्क्रम्यापेणाहवनीयं परीत्य दक्षिणत उदङ्मुखस्तिष्ठन्नाहवनीयमुपतिष्ठते ऽयाड्यज्ञं हविषो जातवेदा अदब्धो अन्ततः पूर्वो अस्मिन्निषद्य । सन्वन्सनिं सुविमुचा नो विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम् ॥ एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा । उत प्रणेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ॥ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो अग्निरिन्द्रो बृहस्पतिर्विश्वे[1] मुञ्चन्तु मरुतः स्वर्का इत्येतयैव जपा दर्शपूर्णमासयोरिष्टीनां चातुर्मास्यानां पशुबन्धस्य सौत्रामण्या इति[1] ॥ ३० ॥

अथ पशावुपधीयन्ते[1] यदा जानात्यग्नये मथ्यमानायानुब्रूहीति तदेते ऋचौ जपति यद्वो वयं प्रमिनाम व्रतानि ॥ यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजातीति[1] मैत्रावरुणदण्डे ऽध्वर्युर्यजमानं वाचयति त्वां गावो ऽवृणत राज्याय

---

१ विश्वेदेवा B Be H, but comp Kauś. sū 97 8, Kāty. śrs XXV. I, 11.

त्वाꣳ स्तवन्त मरुतः स्वर्काः। वर्षिष्ठक्षत्र ककुभि शिश्रियाणस्तं नो अग्ने विभजा वसूनीति' तमग्ने गृहीत्वा मैत्रावरुणाय प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीति' तꣳ स सूनृतः प्रतिगृह्णाति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रतिगृह्णामीति दक्षिणोत्तरयेनमूर्ध्वमुन्मार्ष्टिवक्रो ऽविधुरो भूयासमिति' तमादाय संप्रेष्यति होता यक्षदग्निꣳ समिधा सुषमिधा समिद्धमितीध्मान्तं पशोः' ॥ ३१ ॥ दशमः ॥

इति तृतीयः प्रश्नः ॥



पशुना यक्ष्यमाणो भवति । स उपकल्पयते पौतुद्रवान्परिधीन्गुग्गुलु[1] सुगन्धितेजनꣳ शुक्लामूर्णास्तुकां या पेलश्चान्तरा शृङ्गे द्वे रशने द्विगुणां च त्रिगुणां च द्वे वपाश्रपणी विशाखां चाविशाखां च हृदयशूलं कार्ष्मर्यमयान्परिधीनौदुम्बरं मैत्रावरुणदण्डं मुखेन संमितमिध्माबर्हिरिध्मं प्रणयनीयं प्लक्षशाखामिडसूनं यवान्यवमतीभ्यः सक्तून्सक्तुहोमाय पृषदाज्याय दधि हिरण्यमित्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा षड्ढोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा यूपाहुतिं जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचत्याज्यस्थालीꣳ स्रुवां बर्हिर्हिरण्यमुदपात्रꣳ । क्रयन्ति तक्षाणꣳ सपरशुमाहैहि[2] यजमानेति पूर्वया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य यूपस्पष्टो भवति यत्र वा वेत्स्यन्मन्यते । स यः समे भूम्यै स्वाद्योने रूढो बहुपर्णो बहुशाखोऽप्रतिशुष्काग्रः प्रत्यङ्ङुपनतस्तमुपतिष्ठतेऽत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्याया इत्यथैनमाज्येनानक्ति देवस्त्वा सविता मध्वानक्त्वित्युर्ध्वाय बर्हिरनूच्छ्रयत्योषधे त्रायस्वैनमिति । स्वधि-

---

१ Thus Keś, गुगुलु B, गुग्गुलु Bo H, गुग्गुलु T, गल्गुलु F.

२ Thus only Bo H, the other MSS om आह।

तिना तिर्यञ्चं प्रहरति स्वधिते मैनꣳ हिꣳसीरिति । यः प्रथमः शकलः परापतति तं प्रज्ञातं निदधाति । तमपरिभिन्दन्ननघमङ्गं वृश्चति । प्राञ्चं वोदञ्चं वा प्रयान्तमनुमन्त्रयते दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या संभवेत्यावृश्चने हिरण्यं निधाय संपरिस्तीर्याभिजुहोति वनस्पते शतवल्शो विरोह स्वाहेति । सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशते । ऽथैनꣳ ग्राव्णः प्रसूदयति यं त्वायꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति । यथादिष्टं तस्मै वृश्चेद्त्यैव ब्राह्मणवतामवमर्शं परिवृक्णपरमं¹ प्रादेशावमं यथाऽस्य काले परिवासयत्युच्छिष्टो रायः सुवीर इति । यदपरं भवति तस्य चतुरङ्गुलं यथानाय प्रच्छेदयति । तं चतुरश्रिं वाष्टाश्रिं वा कृत्वा वा हरत्वा² वा कारयत्यौग्र निष्ठितमेवतष्टानामेव स्वरं कुरुते । ऽथास्यैषा पूर्वैवेव पाशुबन्धिकी वेदिर्विमिता भवति दशपदा पश्चात्तिरश्ची द्वादशपदा प्राच्यष्टापदा पुरस्तात्तिरश्ची । तां परिस्तीर्य स्तम्बयजुर्हरति । ॥ १ ॥

इदमेव प्रसिद्धं पौरोडाशिकं । विर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं अपरयुद्धमपुद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथ याचति स्फ्यमुदपात्रं बर्हिः

---

१ Thus H Be T, परिवृंक्षमपर॰ B, परिवृंक्षंपर॰ F.

२ Thus Be H and the Aptoryāma-Sūtra, कृत्वावारयत्वावारयत्यूग्र T, कृत्वावायत्वावारारयत्योग्र B, कृत्वावहरत्यावावारयेत्यौग्र F.

शम्यामित्येतस्मादायाहेहि यजमानेत्युत्तरेण वेदिं द्वयोर्वा त्रिषु वा प्रक्रमेषु स्फ्येनोद्धत्यावोक्ष्य शम्यया चात्वालं परिमिमीते' वित्तायनी मे ऽसीति पुरस्तादुदीचीनकुम्बयान्तरत स्फ्येनालिखति' तिक्तायनी मे ऽसीति दक्षिणतः प्राचीनकुम्बयान्तरत स्फ्येनालिखत्यवतान्मा नाथितमिति पश्चादुदीचीनकुम्बयान्तरत स्फ्येनालिखत्यवतान्मा व्यथितमित्युत्तरतः प्राचीनकुम्बयान्तरत स्फ्येनालिखत्यथ चात्वाले बर्हिर्निधाय तस्मिन्स्फ्येन प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो ऽस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति' हृत्वोत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति' द्वितीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति' हृत्वोत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति' तृतीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यस्तृतीयस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति' हृत्वोत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति' तूष्णीं चतुर्थꣳ हरति सह बर्हिषाथाध्वर्युः स्फ्येन चात्वालात्पुरीषमुद्धन्त्यथाग्नीध्रमाहाग्नीदितस्त्रिर्हरेति' ततस्त्रिराग्नीध्रो हरति' यदाग्नीधस्त्रिर्हरत्यथाध्वर्युरुत्तरवेद्यै पुरीषꣳ सम्प्रयौति सिꣳहीरसि महिषीरसीति' प्रथयत्युरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति' स्फ्येन सꣳहन्ति ध्रुवासीत्यथैनामद्भिरवोक्षति देवेभ्यः शुन्धस्वेति' देवेभ्यः शुम्भस्वेति सिकताभिरनुप्रकिरति' तां प्रादेशमात्रीं

चतुरश्रां[1] निधाय शम्यया परिमिमीत । उत्तरनाभिमुत्साद्यैनां प्रतिच्छाद्याभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति । तया यूपावटं परिलिखति यथान्तर्वेद्यर्धꣳ स्याद्बहिर्वेद्यर्धं परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथाग्नीध्रमाहाग्नीदिमं यूपावटं खनोपरसंमितं प्राक् पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमति खनतादिति । तꣳ स खनति वा खानयति वा । यावदेवाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाताभ्यादधातीध्मं प्रणयनीयमुपोपयमनीः कल्पयन्ति[2] चात्वालादाग्नीध्र इन्द्रघोषवतीः प्रोक्षणीरध्वर्युरादत्ते । परिकर्मिणे पशुगृहीतमाज्यं प्रयच्छति । अथापि संभारा भवन्त्यथ संप्रैषमाहाग्नये प्रणीयमानायानुब्रूह्याग्नीदेकस्फ्ययानुसंधेहीति । चिरुक्तायामुपच्छन्ते । होतुर्वेशं यन्त्युत्तरेण वेदिं प्रतिपद्यन्ते । धारयन्त्येतमग्निमथाध्वर्युरिन्द्रघोषवतीभिः प्रोक्षणीभिरुत्तरवेदिं प्रोक्षति । ॥ २ ॥

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्विति पुरस्तान्मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति दक्षिणतः । प्रचेतास्त्वा रुद्रैः पश्चात्पात्विति पश्चाद्विश्वकर्मा त्वादित्यैरुत्तरतः पात्वित्युत्तरतो ऽथ यत्प्रोक्षणीनामुच्छिष्यते तद्दक्षिणत उत्तरवेद्यै निनयति । यदेव

---

१ Thus B T, चतुरस्रां the other MSS.

२ Thus B Be T F, कल्पयति H

तत्र क्रूरं तत्तेन शमयतीति ब्राह्मणमथैनाꣳ हिरण्यमन्तर्धायाज्यया पञ्चगृहीतेन व्याघारयति । सिꣳहीरसि सपत्नसाही स्वाहेति दक्षिणे ऽꣳसे । सिꣳहीरसि सुप्रजावनिः स्वाहेत्युत्तरस्याꣳ श्रोण्याꣳ । सिꣳहीरसि रायस्पोषवनिः स्वाहेति दक्षिणस्याꣳ श्रोण्याꣳ । सिꣳहीरस्यादित्यवनिः स्वाहेत्युत्तरे ऽꣳसे । सिꣳहीरस्यावह देवान्देवयते यजमानाय स्वाहेति मध्ये । ऽथ भूतेभ्यस्त्वेति स्रुचमुद्गृह्णात्यथ पौतुद्रवान्परिधीन्परिदधाति । विश्वायुरसि पृथिवीं दृꣳहेति मध्यमं । ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति दक्षिणमच्युतक्षिदसि दिवं दृꣳहेत्युत्तरमथास्याꣳ सिम्बिष्टाम्संभारान्निवपति गुल्गुलु[१] सुगन्धितेजनꣳ शुक्लामूर्णास्तुकामग्नेर्भस्मास्यग्नेः पुरीषमसीत्यथैनामꣳस्रावेणाभिघारयत्यथ[२] प्रदक्षिणमावृत्येध्मं प्रतिष्ठापयति यत्र प्रतितिष्ठ सुमतौ सुशेवा आ त्वा वसूनि पुरुधा विशन्तु । दीर्घमायुर्यजमानाय कृण्वन्नधामृतेन जरितारमङ्ग्धीत्यथैनं विस्रस्याहुतिषाहं क्रत्वाध्वराहुतिभिरभिजुहोत्यग्निर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन् । देवेभ्यः प्रभूताद्यज्ञं प्रम यज्ञपतिं तिर स्वाहा ॥ वायुर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन् । देवेभ्यः प्रभूताद्यज्ञं प्रम यज्ञपतिं तिर स्वाहा ॥ सूर्यो यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन् । देवेभ्यः प्रभूताद्यज्ञं प्रम यज्ञपतिं तिर स्वाहा ॥ यज्ञो यज्ञं

१ Thus F, गुग्गुलु B Be H, गुल्गुलु T (Grantha?)

२ °भिजुहोत्यथ Bo F.

मयेतु प्रजानन्मैनं यज्ञहनो विदन् । देवेभ्यः प्रभूतावयज्ञं यज्ञपतिं तिर स्वाहेत्यथैतां यजमान एव स्वयं जुहोत्यग्निरन्नादोऽन्नपतिरन्नाद्यस्येशे स मेऽन्नं ददातु स्वाहा । वायुः प्राणदाः प्राणस्येशे स मे प्राणं ददातु स्वाहा । आदित्यो भूरिदा भूयिष्ठानां पशूनामीशे स मे भूयिष्ठान्पशून्ददातु स्वाहेत्यग्निवदुत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ कृत्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवꣳ स्वधितिꣳ स्रुचश्च[1] संमृड्ढि तूष्णीं पृषदाज्यधानीं पत्नीꣳ संनह्याज्येन च दध्ना चोदेहीत्याहृतासु प्रोक्षणीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाहृत्य स्रुवꣳ स्वधितिꣳ[2] स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यधानीं पत्नीꣳ संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धमाज्यानि गृहीत्वा पृषदाज्यधान्यामुपस्तृणीते महीनां पयोऽसीति विश्वेषां देवानां तनूरिति द्वितीयं बर्हिषी अन्तर्धाय दध्यानयत्यधामसद्यं पृषतीनां ग्रहं पृषतीनां ग्रहोऽसीत्यपोद्धृत्य बर्हिषी अथाभिघारयति विष्णोर्हृदयमसीत्येकमिष विष्णुस्त्वानुविचक्रम इति द्वितीयम् ॥ ३ ॥

अथ प्रोक्षणीभिरपोऽभिषिञ्चतीध्मं प्रोक्षति वेदिं प्रोक्षति बर्हिः प्रोक्षति बर्हिरासन्नं प्रच्योपनिनीय पुरस्तात्प्रस्तरं

---

१ Thus B Be T, स्रुवेण instead of स्रुवꣳ H; स्रुवं च स्वधितिं च F and Srautapad p 161.

२ स्रुवं च स्वधितिं च F

स्तृणाति । पञ्चविधं बर्हिः स्तीर्त्वा[1] प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधाति । विधृती तिरश्ची सादयति । विधृत्योः प्रस्तरं । प्रस्तरे जुहूं । बर्हिषोत्तरा । एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य याचति यवमतीः प्रोक्षणीर्बर्हिर्दर्भमाज्यस्थालीं स्रुवं स्वरुग्रमं मैत्रावरुणदण्डं यूपशकलं हिरण्यमुदपात्रमित्येतत्संनिधाय यूपं प्रक्षालयति यत्ते शिक्वः परावधीत्तक्षा हस्तेन वास्या । आपस्ते तद्गमयते ऽपसुदन्तु[2] शुन्धनीरिति । यूप एष प्रक्षालितः सपशः संपन्नपालः प्रागवटादुपशेते । तमुत्तरेणाहवनीयं तिष्ठन्परास्य प्रोक्षति पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेत्यवटे ऽपो ऽवनयति शुन्धतां लोकः पितृषदन इति । यवाग्प्रस्कन्दयति यवो ऽसि यवयास्मद्द्वेषो यवयारातीरिति । बर्हिर्हस्तं व्यतिषज्यावस्तृणाति पितृषाङ् सदनमसीत्यथैनमद्भिरव्यमन्तर्धाय[3] स्रुवाङ्गत्याभिजुहोति पितृभ्यः स्वाहेति । यूपशकलमवास्यति स्वावेशो ऽस्यग्रेगा नेतॄणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्तादित्यथादत्त आज्यस्थालीं स्रुवं स्वरुगमं मैत्रावरुणदण्डमुदपात्रमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्यपेण यूपं परीत्य दक्षिणत उदङ्मु-

१ अथ ins H Be (acc m)

२ Thus R, स्कन्नेरयत्. the other MSS

३ Thus ( अनन् ) all, see Bh

खास्तिष्ठन्ति पूर्वं एषाध्वर्युरपरो यजमानो ऽपरा पत्न्येव सर्वाश्च चषालं यूपस्याग्रमनक्ति देवस्त्वा सविता मध्वानक्त्वित्यन्तरतश्च बाह्यतश्च । स्वभ्यक्तं कृत्वा चषालं प्रतिमुञ्चति सुपिप्पलाभ्यस्त्वौषधीभ्य इत्येव । स्रुवेणाग्निष्ठामश्रिमभिघारयन्नाह यूपायाज्यमानायानुब्रूहीत्यान्तमनक्त्यन्तमेव यजमानं तेजसानक्ति । नोपरमनक्ति । पत्न्युपरमनक्ति । सर्वतः परिमृशत्यपरिवर्गमेवास्मिन्तेजो दधातीति ब्राह्मणमुच्छ्रयन्नाहोच्छ्रीयमाणायानुब्रूहीत्युच्छ्रयत्युद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳहेत्यथैनं वैष्णवीभ्यामृग्भ्यां कल्पयति ते ते धामानि विष्णोः कर्माणि पश्यतेति द्वाभ्याꣳ । स यत्राग्निष्ठामश्रिमाहवनीयेन संपादयति तद्ध्रुवस्य चषालं परेक्षयति तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततमित्यथैनं प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति । मैत्रावरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेत्यन्यूनमनतिरिक्तं परिव्ययन्नोदपात्रमुपनिनीयाथैतां त्रिगुणाꣳ रशनां त्रिः संभुज्य मध्यमेन गुणेन नाभिदघ्ने परिव्ययन्नाह परिवीयमाणायानुब्रूहीति । त्रिः प्रदक्षिणं परिव्ययति परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या इत्युपान्ते व्यतिषजत्यान्तं प्रवेष्टयत्यणिमति स्वरुमप्रवयत्यथोत्तरेणाग्निष्ठामश्रिं मध्यमे गुणे स्वरुमवगूहत्यन्तरिक्षस्य त्वा सानाववगूहामीति । स्वर्वन्तं यूपमुत्सृजति । ॥ ४ ॥ प्रथमः ॥

स्तात् तं विश्वदेवꣳ स्थमापो देवीः स्वदन्तैनमित्युपरिष्टात्प्रोक्ष्याधस्तादुपोक्षति' सर्वत एवैनं मेध्यं करोतीति ब्राह्मणमुद्गृह्य प्रोक्षणीधानम् ॥ ५ ॥

अथेध्मात्समिधमाददान आघाराग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं' परि समिधꣳ शिनष्टि' वेदेनोपवाजयत्यनुक्रान्तासु सामिधेनीषु स्रुवेणाघारमाघारयति' संमृष्टे स्रुग्भ्यामुत्तरमाघारमाघारयिष्यन्स्रुचावुदङ्ङत्याक्रम्य जुह्वा ध्रुवाꣳ समनक्ति' सं ते प्राणो वायुना गच्छतामिति ललाटे' सं यजत्रैरङ्गानीति ककुदि' सं यज्ञपतिराशिषेति दक्षिणस्याꣳ श्रोण्यामथ यथायतनꣳ स्रुचौ सादयित्वा प्रवरं प्रवृणीते' प्रसिद्धꣳ होतारं वृणीते' ऽग्नाश्रावयत्यो श्रावयास्तु श्रौषडग्निश्चावरुणौ प्रशास्तारौ प्रशास्तादित्यसौ[1] मानुष इति मैत्रावरुणस्य नाम गृहीत्वाथाश्रावयति' यथेतात्याश्रावयत्यो[2] श्रावयास्तु श्रौषडग्निर्दैवीनां विशां पुरएतायं यजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतꣳ हिमा द्वा यू राधाꣳसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति' सीदति होता' प्रवरमाकाङ्क्षति' प्रसृतः स्रुचावादायात्याक्रम्याश्राव्याह समिधः प्रेष्येति' वषट्कृते जुहोति प्रेष्य प्रेष्येति' चतुर्थाष्टमयोः समानयमानोऽष्टमे सर्वꣳ समानयते' परि स्वाहाकृतीभ्यः सꣳस्रावꣳ शिनष्टि' दश प्रयाजानिष्ट्वो-

१ Thus all MSS and Keś. except Be, which has प्रशास्तादि° ।

२ Thus B; the words °श्रावयति यथेतात्य om. TF; II Be om. °यति, but comp. Bh

इत्युत्क्रम्य स्वरुं च शासं च याचति । तौ जुह्वामङ्क्त्वा[1] ताभ्यां पशुः समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति । प्रयच्छति शासमेवगूहति स्वरुमेव यथायतनः स्रुचौ सादयित्वाह पर्यग्नये क्रियमाणायानुब्रूहीत्यथैष आग्नीध्र आहवनीयादुल्मुकमादायान्तरेण चात्वालोत्करावुत्तरेण शामित्रदेशमग्रेण पशुं जघनेन स्रुच इत्येवं त्रिः प्रदक्षिणं पर्येत्यथानुपरिसरणमपाव्यानि जुहोति प्रजानन्तः प्रतिगृह्णन्ति पूर्वे येषामीशे पशुपतिः पशूनां ये बध्यमानमनु बध्यमाना य आरण्याः पशवो विश्वरूपाः प्रमुञ्चमाना भुवनस्य रेत इति । निधायाग्नीध्र उल्मुकं यथेतं त्रिः पुनः प्रतिपर्येत्यथोल्मुकप्रथमाः[2] प्रतिपद्यन्ते । ऽस्वकृतमिता[3] पशुना । पशुमध्वर्युर्वपाश्रपणीभ्यामन्वारभते । वपाश्रपणी यजमानो । ऽथाश्राव्य संप्रेष्यत्युपप्रेष्य होतर्हव्या देवेभ्य इत्यथैतं[4] पशुमन्तरेण चात्वालोत्करावुदञ्चं नीयमानमनुमन्त्रयते माता प्राणो यजमानस्य पशुना रेवतीर्यज्ञपतिं प्रियधाविशतेति द्वाभ्याम् । स[5] यत्रैतदाग्नीध्र उल्मुकं निदधाति तदग्रेण वोत्तरेण वा पशवे निहन्यमानाय बर्हिरुपास्यति पृथिव्याः संपृचः पाहीति । तदेतं पशुं प्रतीचीनशिरसमुदीचीनपादं निग्रन्थ्यहणन्तं मायुः संज्ञपयतेत्युक्त्वैतेनैव यथेतमेत्य पृषदाज्यावकाश आसत इह

१ Thus all ( F चमक्का )।
२ FR om प्रति॰ ।
३ Thus Be ; स्वकृतमिता B , स्वकृणिता the other MSS.
४ Thus T Be, अथैनं the other MSS.
५ om BF.

प्रजा विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्माꣳ अवन्तु पयसा घृतेनेति । संज्ञप्तं प्राज्ञाङ्जुहोति संज्ञप्ताहुतिं यत्पशुर्मायुमकृतेत्यथैनमभ्येति[1] शमितार उपेतनेति । पाशात्पशुं प्रमुच्यमानमनुमन्त्रयते ऽदितिः पाशं[2] प्रमुमोक्तैतमित्यथैनदिशं मोचयोपसव्येमां दिशं निरस्यत्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमित्यथ प्रतिप्रस्थाता पत्नीमुदानयत्युदकमण्डलुमुत्थाप्याथैनामादित्यमुदीक्षयति नमस्त आतानेत्यथैनामन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य[3] प्राचीमुदानयन्वाचयत्यनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्यागतामध्वर्युरपो वाचयत्यापो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्मेति । प्रानुपूर्वं[4] पशोः प्राणानाप्याययति । वाक्त आप्यायतामिति वाचं । प्राणस्त आप्यायतामिति प्राणं । चक्षुस्त आप्यायतामिति चक्षुः । श्रोत्रं त आप्यायतामिति श्रोत्रमेतानेव पुनः संमृशति या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत्ते क्रूरं यदास्थितं तत्त आप्यायतां तत्त एतेन शुन्धतामिति । नाभिस्त आप्यायतामिति नाभिं । पायुस्त आप्यायतामिति पायुꣳ । संप्रमृश्य पदः प्रक्षालयति शुद्धा-

---

[1] Thus TH Be, ˚भ्येति BF

[2] T gives the first two pādas of this stanza (TS. III. 1. 4. 1), perhaps rightly.

[3] Thus B Keś, ˚निष्क्रमय्य Be TH ˚निष्क्रम्य F.

[4] ˚पूर्वं THF Keś

शरित्राः शमद्भ्यः शमोषधीभ्यः शं पृथिव्या इति । शमहोभ्यामित्यतिशिष्टा दक्षिणतो ऽनुपृष्ठं निनयति । नयन्ति पत्नीमुत्तानं पशुं पर्यस्यन्ति[1] । तस्य दक्षिणस्य पार्श्वस्य विष्टुतमनु प्राचीनाग्रं बर्हिर्निदधात्योषधे त्रायस्वैनमिति । स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनꣳ हिꣳसीरिति । छिनत्ति बर्हिर्विं त्वचं कृणुत्वैतस्यैव बर्हिषो ऽग्रमज्यते । स्वविमदुभयतो लोहितेनाक्तां दिशि निरस्यति रक्षसां भागो ऽसीदमहꣳ रक्षो ऽधमं तमो नयामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो नयामीत्यथाप उपस्पृश्य वरीय आच्छायेथे लेति वपामुत्खिदति । तया वपाश्रपणी प्रोर्णोति घृतेन द्यावापृथिवी प्रोर्णुवाथामित्यविशाखयोपदधाधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर इत्यथैनां प्रदक्षिणमावृत्याद्भिरभ्युक्ष्य[2] शामित्रे प्रतितपत्यथोल्मुकप्रथमाः प्रतिपद्यन्ते ॥ ६ ॥

अथाध्वर्युर्वपयाच वपाश्रपणी पुनरन्वारभते यजमान ऐत्युर्वन्तरिक्षमन्विहीत्याहवनीयस्याग्निमेध्याङ्गारेषु वपायै प्रतितप्यमानायै बर्हिषो ऽग्रमुपास्यति वायो वीहि स्तोकानामित्यथैनामन्तरेण यूपं चाहवनीयं चोपातिहृत्य तां दक्षिणत उदङ्मुखः प्रतिप्रस्थाता श्रपयत्यथैनाꣳ स्रुवाकृत्याभिजुहोति त्वामु ते दधिरे हव्यवाहमित्यथाह स्तोकेभ्यो ऽनुब्रूहीति । परिहितासु स्तोकीयासु शृतायां वपायां शुक्लप्रभृतावादाया-

---

१ °स्यति Bo F

२ Thus all, except Bh. which has °माहृत्य°, are we to correct प्रदक्षिणमावृत्य?

वर्त्मे ऽथ संप्रैषमाहाग्नीदुत्तरबर्हिरुपसादय प्रतिप्रस्थातः पशौ संवदस्वेत्यथैष आग्नीध्रः प्लक्षशाखायामिडसूनमुपगूहति । तदुत्तरबर्हिर्भवत्यथ प्रतिप्रस्थाता पृषदाज्यं विहृत्य जुह्वाꣳ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य पृच्छति शृतꣳ हवीः[1] शमितरिति । शमितैव उत्तरतो हृदयशूलं धारयꣳस्तिष्ठति । स शृतमिति प्रत्याह । तं तथैव द्वितीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याह । तं तथैव तृतीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याहाथ शमितुर्हृदयशूलमादाय तेन हृदयमुपतृद्य तꣳ शमित्रे संप्रदाय पृषदाज्येन हृदयमभिघारयति सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहेति । विषूः कृत्वा हरतेत्युक्त्वैतेनैव यथेतमेत्य चतसृपूपस्तृणीते जुहूपभृतोरिडाधाने यस्मिꣳश्च वसाहोमं ग्रहीष्यन्भवन्त्याहरन्ति तं पशुमन्तरेण चात्वालोत्करावन्तरेण यूपं चाहवनीयं चापातिहृत्य तꣳ[2] दक्षिणतः पश्वहोत्रामादयत्येतेनैव यूपाहरन्त्येतेनैवेडसूनमेव प्लक्षशाखायाꣳ हृदयं निधाय स्वधितिना तस्यापि ऽवद्यन्नाह ॥ ८ ॥

मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीति । हृदयस्यैवाग्रे द्विरवद्यत्यथ जिह्वाया अथ वक्षसो ऽथ तनिम्नो ऽथ वृक्कयोरथ सव्यस्य दोष्णो ऽथ दक्षिणस्य पार्श्वस्याथ सव्यस्याथ दक्षिणायै श्रोणेरथ गुदं । त्रैधं गुदं कृत्वाणिमत्स्विष्टकृते निदधाति

१ With pluti sign only Be.

२ H om., Be sec m del.

स्वविमदुपयड्भ्यो मध्यं[1] द्वेधं कृत्वा जुह्वामवदधात्यथ वृक्यमेदो यूपन्नवधाय तेन जुहूं प्रोर्णोति' यूष्णोपसिञ्चत्यभिघारयत्यथोपभृति स्विष्टकृते सर्वेषां अङ्गानाꣳ सकृत्सकृत्समवद्यति' सकृद्दक्षिणस्य दोष्णः पिशितं सच्छिद्यावदधाति सकृत्सव्यायै श्रोणेरणिमद्गुदस्याथ वृक्यमेदो यूपन्नवधाय तेनोपभृतं प्रोर्णोति' यूष्णोपसिञ्चति[2]' द्विरभिघारयत्यथ हृदयं जिह्वां वक्षस्तनिम मतस्नौ[3] वनिष्टुमितीडापात्र्याꣳ[4] समवधाय यूष्णोपसिञ्चत्यभिघारयत्यथ[5] कꣳसे वा चमसे वा वसाहोमं गृह्णाति' यूष्णोपसिञ्चत्यभिघारयत्यथ पशोरवदानानि संस्पर्शयत्यैन्द्रः प्राणो अङ्गेअङ्गे निदेध्यदैन्द्रो ऽपानो अङ्गेअङ्गे विबोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत्सलक्ष्माणो भवथ। देवत्रा यन्तमवसे सखायो ऽनु त्वा माता पितरो मदन्त्वित्यथ दक्षिणेन पार्श्वेन वसाहोमं प्रयौति कुम्भतः श्रोरस्यभिस्त्वा श्रोणात्पः समरिणन्नातस्य त्वा भज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्या इति' संसृष्टस्य पशोः प्रतीचीं जाघनीꣳ हरन्ति' प्रतिपरिहरन्ति पशुमथ जुहूपभृतावाददान आहेन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहीत्यत्याक्रम्याश्राव्याहेन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रेष्येति' प्रतिप्रस्थातैव उत्तरतो

---

१ Thus Be H T Keś , मध्यमं BF.

२ अथ ins Be FH

३ Thus Be H F Keś. ( sec m ), मतस्नू BT.

४ BH Bo, इति पात्र्याꣳ , F इडिपात्र्योꣳ , T totally corrupt

५ अथ after •सिञ्चति ins. Be F.

वसाहोमं धारयन्नास्ते।[1] सो ऽर्धर्चे याज्याये वसाहोमं जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वान्तरिक्षाय स्वाहेति[1] वषट्कृते हविर्जुहोत्येतस्य होममनु प्रतिप्रस्थाता वसाहोमोद्रेकेण दिशो जुहोति दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा। दिग्भ्यो नमो दिग्भ्यः स्वाहेत्यथ प्रदक्षिणमावृत्य पृषदाज्यात् स्रुवेणोपघ्नन्नाह वनस्पतये ऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति[1] वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथ समवपमान आहाग्नये स्विष्टकृते ऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति[1] वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा[1] आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा होत्र इडामुपोद्यच्छन्ते मेदस[1] उपहूतायामिडायामग्नीध आदधाति षडवत्तमर्धवनिष्टुमथार्धवनिष्टुं[1] मेदस्तश्चाश्नन्ति मार्जयन्ते[1] ऽथाह ब्रह्मणे वचः परिहरेति[1] तद्ब्रह्मा प्रतिगृह्णाति ॥ ६ ॥

समानीयात्याक्रम्याश्राव्याह देवेभ्यः प्रेष्येति ' वषट्कृते जुहोति प्रेष्य प्रेष्येत्येवमेवोपयष्टोपयजति गुदस्य मध्यतो ऽदृक् समुद्रं गच्छ स्वाहेत्येतैरेकादशभिरग्निं वैश्वानर गच्छ स्वाहेति सर्वमन्ततो ऽनुप्रहरत्यथ बर्हिषि हस्तौ निमार्ष्ट्यद्भ्यस्त्वौषधीभ्यो मनो मे हार्दिं यच्छेत्यथास्य धूममन्वीक्षते तनूं त्वचं पुत्रं नप्तारमशी-येत्येकादशानूयाजानिष्ट्वोद्धृत्याक्रम्य जुह्वाꣳ स्वरुमवधाय पुर-स्तात्प्रत्यङ् तिष्ठञ्जुहोति दिवं ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्मना पृणस्व स्वाहेत्यथ यथायतनꣳ स्रुचौ साद-यित्वा वाजवतीभ्याꣳ स्रुचौ व्यूहति ' संयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ[1] विमुच्य जाघन्या पत्नीः संयाजय-न्त्याज्यस्यैव सोमं च त्वष्टारं च यजत्युत्तानायै जाघन्यै देवानां पत्नीर्यजति ' नीच्या[2] अग्निं[2] गृहपतिमुत्तानायै जाघन्यै होत इडामवद्यति ' नीच्या[2] अग्नीधे[2] षडवत्तं ' प्राश्नीतो ' मार्जयेते ' अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं कृत्वा[3] न फलीकरणहोमेन चरत्यथ प्राङेत्य ध्रुवामाप्याय्य त्रीणि समिष्टयजूꣳषि[4] जुहोति यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहेति ' स्रुवेणैव द्वितीय-मेष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरः स्वाहेति ' स्रुचा

---

१ सुचो Be H.

२ Thus only Be, the other MSS have नीचाग्निं and नीचाग्नीधे।

३ जुहोति B Be.

४ T ius षड्भिष्कानि।

तृतीयं देवा गातुविदो गातुं वित्त्वा गातुमित। मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्युद्द्रुहति स्रुचमेव यावति स्फ्यमुदपात्रꣳ हृदयशूल-मित्येतत्समादायाहैषि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्यन्त-रेण चात्वालोत्करावुदङुपनिष्क्रम्यापरेण यूपꣳ स्फ्येनोद्धृत्यावोक्ष्य शुष्कस्य चार्द्रस्य च सन्धौ हृदयशूलमुद्वासयति ॥ १० ॥

शुगसि तमभिशोच यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाद्भिर्मार्जयन्ते धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्चेत्यथा-प्रतीचमायन्ति वरुणस्यान्तर्हित्यै[1] प्रपद्ये समिधः कुर्वत एधो ऽस्येधिषीमहीत्येतयाहवनीये ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेत्यथौपयजिके[1] ऽग्नौ बर्हिरुपोषति यत्कुसीदमप्रतीत्तं मयि येन यमस्य बलिना चरामि। इहैव सन्निरवदये तदेतत्त-दग्ने अनृणो भवामीत्यथाञ्जलिनोपस्तीर्णाभिघारितान्सक्तून्सदाव्ये जुहोति विश्वलोप विश्वदावस्य त्वासञ्जुहोमि स्वाहेति। हस्तौ प्रध्वꣳसयते ऽग्धादेको ऽहुतादेकः समनमादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमिति[1] द्वितीयं जुहोति यान्यपा-मित्यान्यप्रतीत्तान्यस्मि यमस्य बलिना चरामि। इहैव सन्तः प्रति तद्यातयामो जीवा जीवेभ्यो निहराम एनत्स्वाहेति[1]

---

१ Corrected acc to Bh.; •चोपा[illegible] MS.

हस्तौ प्रध्वꣳसयते ऽधादेको ऽकृतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमिति' तृतीयं जुहोत्यनृणा अस्मिन्ननृणाः परस्मिꣳस्तृतीये लोके अनृणाः स्याम। ये देवयाना उत पितृयाणाः सर्वान्पथो अनृणा आक्षीयेम स्वाहेति' हस्तौ प्रध्वꣳसयते ऽधादेको ऽकृतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमित्यथ[1] देवता उपतिष्ठते' ऽयं नो नभसा पुर इत्यग्निꣳ' स त्वं नो नभसस्पत इति वायुं' देव सꣳस्फानेत्यादित्यमथ यूपमुपतिष्ठत आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम्। बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेत्यथ पूर्वाग्निꣳ शकले समारोपयत्ययं ते योनिर्ऋत्विय इति' तं मध्यमे ऽग्नावपिसृजत्याजुह्वान उद्बुध्यस्वाग्न इति द्वाभ्यामथ'मध्यममग्निमुपसमाधाय मध्यमे ऽग्नौ पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इति' पूर्णाहुतौ वरं ददाति' धेनुवरं[2] वानडुद्वरं[3] वा दद्यादिति ह स्माह बौधायनः' संतिष्ठते पशुबन्धः संतिष्ठते पशुबन्धः॥ ११॥ तृतीयः॥

॥ इति चतुर्थः प्रश्नः॥

---

१ अथ om B.

२ Thus BF, धेनू॰ H Be, धेनूं T.

३ Thus BTF, वानडुद्वरं B, वानडुद्वरं Be, comp VII 4 a f.

वैश्वदेवहविर्भिर्यक्ष्यमाणो भवति फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां। नक्षत्रप्रयोग इत्येक आहुरुदगयन आपूर्यमाणपक्षस्य पुण्याहे प्रयुञ्जीतेति। स उपकल्पयते वेणोः शललीं लोहितायसं च क्षुरं चतुष्टयानि पुरोडाशकपालानि चतस्रश्चरुस्थालीस्तावन्ति मेक्षणानि द्रव्यं पयः पृषदाज्याय च[1] दधि हविरातञ्चनाय च त्रेधा बर्हिः संनद्धं तदेकधा पुनः संनद्धं[2] प्रसूमयं प्रस्तरमित्यथोपवसथीये [3]ऽहन्दिहविषमारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं चरुं। सा प्रसिद्धेष्टिः संतिष्ठते। ऽथास्यैतद्धविर्भ्यो देवेभ्यो वत्सा अपाकृता भवन्ति। वैश्वदेवं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ [1]प्रातर्हुते ऽग्निहोत्रे पुराणं प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ पृष्ठ्याः स्तीर्त्वापः प्रणीयाग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमिति। हविष्कृता वाचं विसृजते। समानं कर्माधिवपनादध्युष्य दक्षिणार्धे गार्हपत्यस्याष्टौ कपालान्युपदधात्यथोत्तरतस्त्रिः पवित्रमप आनीय सौम्याय चरवे ऽधिश्रयत्यथोत्तरतः सावित्राय द्वादशकपाला-

---

१ T F om.

२ J recommences with प्रसूमयं।

३ इति Be J F H

न्युपदधात्यथोत्तरतस्तिरः पवित्रमप आनीय सारस्वतपौष्णाभ्यामधिश्रयत्यथोत्तरतो मारुताय सप्त कपालान्युपदधात्यथोत्तरतस्तिरः पवित्रं पय[1] आनीयामिक्षाया अधिश्रयत्यथोत्तरतो द्यावापृथिव्यमेककपालमुपदधात्यभीन्धते कपालान्युपेन्धते चरुस्थालीः कृतानि पिष्टानि समुप्य संयुत्याथाधिवृणक्त्याग्नेयमष्टाकपालं। तिरः पवित्रꣳ सौम्ये[2] चरव्यानावपत्यथाधिवृणक्ति सावित्रं द्वादशकपालं। तिरः पवित्रꣳ सारस्वतपौष्णयोश्चरव्यानावपत्यथाधिवृणक्ति मारुतꣳ सप्तकपालं। तिरः पवित्रं तप्ते पयसि दध्यानयति। सामिक्षा भवति। तां य एव कश्च[3] कुशलः परीन्धेन श्रपयित्वा विवाजिनां कृत्वाभितापे निदधात्यथाधिवृणक्ति द्यावापृथिव्यमेककपालमिति। त्वचं पुरोडाशानां ग्राहयित्वा श्रपयित्वाभिवास्य प्राङ्गत्याग्नेयेभ्यो निनीय सम्बयजुर्हरति। ॥ १ ॥

इदमेव प्रसिद्धं पौरोडाशिकं। वियजुषा तूष्णीं चतुर्थं। पूर्वं परिग्राहं परिगृह्णाति। करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति। यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ कृत्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यग्रहणीं पत्नीꣳ संनह्याज्येन च[4] दध्ना चोदेहीत्यागतासु प्रोक्षणीषूदस्य स्फ्यं

[1] Thus Be Keś, पवित्रमप the other MSS
[2] Thus J F Keś, सौम्यश्च B Be H सौम्येचरव्यान् T
[3] कथम Be, कश्चित् F.
[4] B H om.

मार्जयित्वैषाबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यग्रहणीं पत्नीꣳ संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धं पृषदाज्यवन्त्याज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति वेदिं प्रोक्षति बर्हिः प्रोक्षति बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तमयं प्रस्तरं गृह्णाति विविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधाति विधृती तिरश्ची सादयति विधृत्योः प्रसूमयं प्रस्तरं प्रस्तरे जुहूं बर्हिष्युत्तरा एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यानुपूर्वꣳ[1] हवीꣳष्युद्वासयत्युपस्तीर्णाभिघारितान्पुरोडाशानभिघार्य चरुमसिद्धमा मारुतादंश कꣳसे वा चमसे वामिक्षां व्युद्धृत्य वाजिनमानीयाभिघारयत्यथैककपालमुद्वास्य बर्हिषीयाविःपृष्ठं करोत्यथैतानि सपरिगृह्यान्तर्वेद्यासादयति भूर्भुवः सुवरित्येताभिर्व्याहृतीभिरुत्करे वा विग्रहे वा वाजिनमथ निर्मन्थ्यमाहृता निर्मन्थ्येन चरति[2] प्रवृत्याभिहुत्य ॥ २ ॥

अथेध्मात्समिधमादाया आघारसमिधमानायामनूच्ये-ध्मादधातीध्मं परि समिधꣳ शिनष्टि वेदेनोपवाजयत्यनुवाक्य सामिधेनीषु स्रुवेणाघारमाघारयति संमृष्टे स्रुच्यावुत्तरमंसमपायꣳस्यायस्रुचावुदङ्ङत्याक्रम्य जुह्वा ध्रुवाꣳ समज्य

1 ॰पूर्वं Be H F.

2 प्रचरति Be B, in the following khanda B has consequently प्रथं ।

सादयित्वा स्रुचौ प्रवरं प्रवृणीते । प्रसिद्धꣳ होतारं वृणीते । सीदति होता । प्रसवमाकाङ्क्षति । प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति । वषट्कृते जुहोति यज यजेति चतुर्थाष्टमयोः समानयमानो ऽष्टमे सर्वꣳ समानयते । नव प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सꣳस्रावेणानुपूर्वꣳ[1] हवीꣳष्यभिघारयत्यथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथानुपूर्वꣳ[1] हविर्भिश्चरति । प्रसिद्धमा मारुता द्विश्वेभ्यो देवेभ्यो ऽनुब्रूहि विश्वान्देवान्यजेत्यामिक्षया चरत्, याꣳश्चैककपालेन चरति द्यावापृथिवीभ्यामनुब्रूहि द्यावापृथिवी यजेत्यथ स्विष्टकृता चरत्यथैतानि मेक्षणान्याहवनीये ऽनुप्रहरत्यथैनानि सꣳस्रावेणाभिजुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यति । ॥ ३ ॥

उपहूतायामिडायामग्नीध आदधाति षडवत्तं । प्राश्नन्ति । मार्जयन्ते । ऽथाह ब्रह्मणे प्राशित्रं परिहरेति । परि प्राशित्रꣳ हरन्त्यथापो ऽनु वेदेन ब्रह्मभागमथान्वाहार्यं याचति । तस्मिन्प्रथमजं वत्सं ददात्युद्वासयन्त्येतद्धविरुच्छिष्टमासादयन्ति वाजिनमथ संप्रैषमाह ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्यथाध्वर्युः पृषदाज्यं विहृत्य[2] जुह्वाꣳ समानीयात्याक्रम्याश्राव्याह देवान्यजेति । वषट्कृते जुहोति यज यजेति नवानूयाजानिष्ट्वोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ साद-

१ Thus Keś , ॰पूर्वꣳ the MSS

२ Thus T Be H F Keś.; विहृत्य B.

यित्वा वाजवतीभ्याꣳ स्रुचौ जुहोति । शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ विमुच्याथ कꣳसं वा चमसं वानाव्यक्तिं याचति । तमन्तर्वेदि निधाय तस्मिन्बर्हिषि विषिच्य वाजिनमानयन्नाह वाजिभ्यो ऽनुब्रूहीत्यथाक्रम्याश्राव्याह वाजिनो यजेति । वषट्कृते जुहोति वाजिभ्यः स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षꣳ । स यावन्त ऋत्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति यन्मे रेतः प्रसिच्यते यन्म आजायते यद्वा जायते पुनः । यद्वा मे प्रतितिष्ठति तेन मा वाजिनं कुरु तेन मा रेतस्विनं कुरु तेन मा प्रियमाविश तस्य ते वाजिपीतस्य वाजिभिः पीतस्येति वा मधुमत उपहूतस्योपहूतो भक्षयामीति । निर्णिज्य पात्रं प्रयच्छत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि[1] समिष्टयजूꣳषि जुहोति यज्ञ यज्ञं गच्छैष ते यज्ञो यज्ञपते देवा गातुविद इत्यथ पूर्णपात्रविष्णुक्रमैश्चरित्वा विसृजते व्रतमथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य वेष्ण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षणि च वर्तयते परि च वपत एतमेव परमेष्ठ्यन्तं नाप्नोति किं चन । एते समुद्र आहित एते भूमिरियꣳ श्रिता ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितं वैश्वानरस्य तेजसा ॥ एतेनाह निवर्तये

१ Thus H B Be T J, पाशुकानि F

मत्येन परिवर्तये। सूर्यस्यानुवर्तये शिवेनास्योपवर्तये अग्नेर्मास्याभिवर्तये ॥ शीर्ष्णो मदृतं तत्सत्यं तदृतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्ताद्देवा ये ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते वैश्वदेवहवींष्यि। संवत्सरीणाः स्वस्तिमाशासत इत्याशास्ते। ॥ ४ ॥ प्रथमः ॥

अथातश्चतुर्षु मासेषु वरुणप्रघासहविर्भिर्यक्ष्यमाणो भवति। स उपकल्पयते मेषीं शमलीं लोहितायसं च क्षुरं चतुष्कपालानि पुरोडाशकपालानि पञ्च चरुस्थालीस्तावन्ति मेक्षणानि द्वयं पयः पृषदाज्याय च[1] दधि हविरातञ्चनाय च[1] शमीपर्णकरीरसक्तूनैषीकं शूर्पं मनागुपतप्तानां यवानामवाञ्जनपिष्टानां प्रतिपूरुषं[2] करम्भपात्राण्येकातिरिक्तानि भवन्ति। तेषामेव मेषीं च मेषं च कुर्वन्ति। शृङ्गवान्मेषो भवत्यशृङ्गा मेषी। तौ शुक्लाभिरूर्णाभिः संप्रच्छन्नौ भवतो। द्वावध्वर्यू। द्वयानि यज्ञपात्राणि। द्वयमिध्माबर्हिः द्वे वेदी। तयोः पाशुबन्धिकीवोत्तरा दार्शपौर्णमासिकीव दक्षिणा। ते पश्चात्समे पुरस्ताद्विषमे पृथमात्राद्वेदी असंभिन्ने भवतो। ऽथास्यैतद्द्वेधा वत्सा अपाकृता भवन्ति मरुद्भ्यो वरुणायेति। द्वयं पयो दोहयित्वोपवसति सांनाय्यस्य वाव्रता तूष्णीं वाथ प्रातर्हुते ऽग्निहोत्रे पृष्ट्वाः स्तीर्त्वाप: प्रणीय निर्वपत्याग्नेयमष्टाकपाल-

[1] Thus (च...च) Bo H T (दक्षिण the last), the first च om JF, the last B.

[2] Thus (with क) BTH, comp TBr I.6 4 5, with ख the other MSS.

मिति पञ्च संचराण्यैन्द्राग्नमेकादशकपालं[1] मारुतीमामिक्षां
वारुणीमामिक्षां कायमेककपालमिति । हविष्कृता वाचं
विसृजते । समानं कर्मा पर्यग्निकरणादथैतानि करम्भपात्राण्य-
भिपर्यग्निकुर्वन्ति मेषीं च मेषं च शमीपर्णकरीरसक्तूनेषीकं
शूर्पमिति । स्वं पुरोडाशानां ग्राहयित्वा श्रपयित्वाभिवास्य ९
प्राङ्नेत्याग्नेभ्यो निनीय मारुतं यजुषी हरतो । ऽध्वर्युरेवोत्तरस्यां
वेद्यां हरति प्रतिप्रस्थाता दक्षिणस्यां । तयोर्हरतोरध्वर्युः पूर्व
एति पुनरायतोः प्रतिप्रस्थाता पूर्व एतीदमेव प्रसिद्धं पौरो-
डाशिकं । विर्यजुषा तूष्णीं चतुर्थं । पूर्वौ परिधी परि-
गृह्णीतो । ऽध्वर्युरेव करणं जपत्युद्धत । उद्धताभ्यामाग्नीध्रस्ति- १०
र्हरति[2] । यदाग्नीध्रस्तिर्हरत्यध्वर्युरेव चात्वालस्याहृता चात्वालं
परिलिखत्युत्तरवेदेराहृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्याग्ने-
राहृता दावग्नी[3] प्रणयतो । ऽध्वर्युरेवोत्तरस्यां वेद्यामग्निं
निधायाध्वराहुतिभिरभिजुहोति । प्रतिप्रस्थाता दक्षिणस्यामग्निं
निधायाभिजुहोति तूष्णीमग्निवत्युत्तरौ परिधी परिदध्य ११
योयुपित्वा तिर्यञ्चौ स्फ्यौ सन्ध्याध्वर्युरेव संप्रैषमाह प्रोक्षणी-
रासादयतमिध्माबर्हिषी उपसादयतं स्रुवौ च स्रुचश्च संमृड्ढं
तूष्णीं पृषदाज्यधान्यौ पत्नीं संनह्याज्याभ्यां च दध्ना चोदेत-
सिन्ध्यावतासु प्रोक्षणीषूदस्य स्फ्यौ मार्जयित्वेध्माबर्हिषी उपसाद्य

---

१ Thus, with च, Be J H F, Bh, Keś.; ऐन्द्राग्नि B T.

२ Thus, Be J, उद्धत्योद्धताभ्याम॰ T; उद्धत om. B H, उद्धत्युद्धता॰ F.

३ Thus J H, द्वावग्नि Be, T om. ग्नी; B om. द्वाव।

प्रदक्षिणमावृत्य प्रत्यञ्चावावृत्य स्रुवौ च स्रुचश्च संमृष्टस्तूष्णीं[1] पृषदाज्यग्रहणीं । पत्नीं संनह्याज्याभ्यां च दध्ना चोदेत । आज्ये च प्रोक्षणीश्चोत्पूय प्रसिद्धं पृषदाज्यवन्त्येवाज्यान्यध्वर्युरुत्तरस्यां वेद्यां गृह्णीते । दार्शपौर्णमासिकानि प्रतिप्रस्थाता दक्षिणस्याम् । ॥ ५ ॥

अथ प्रोक्षणीभिरुपोत्तिष्ठतः[2] । इध्मौ प्रोक्षतो । वेदी प्रोक्षतो । बर्हिषी प्रोक्षतो । बर्हिषी आसन्ने प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरौ गृह्णीतः । पञ्चविधमेवाध्वर्युरुत्तरस्यां वेद्यां बर्हि स्तृणाति । त्रिविधं प्रतिप्रस्थाता दक्षिणस्यामथ प्रस्तरपाणी प्राञ्चावभिसृष्य कार्ष्मर्यमयान्परिधीन्परिधत्त । ऊर्ध्वाः समिध आधत्तो । विधृतीस्तिरश्चीः[3] सादयतो । विधृतीषु प्रस्तरौ । प्रस्तरयोर्जुह्वौ । बर्हिषोरितरा[4] । एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रवतो [5]दक्षिणत एवाध्वर्युरुत्तरतः प्रतिप्रस्थातानुपूर्वं[6] हवींष्युद्वासयत । आग्नेयप्रभृतीन्येवाध्वर्युरुद्वासयति प्रसिद्धमैन्द्राग्नान्मारुतीं प्रतिप्रस्थाता कंसे वा चमसे

---

1 Thus J only; the other MSS mostly ॰स्त्वं ।

2 उपोत्तिष्ठात F.

3 Corrected. विधृतीस्तिरश्चः T, विधृत्यस्तिरश्चाः B; विधृत्यतिरश्चः Be; विधृत्यस्तिरश्चः H, विधृत्यास्तिरश्चाः F, विधृत्यस्तिर॰ J

4 Thus B Be F T; इतरे H J

5 The following words दक्षिणत . . प्रतिप्रस्थाता are found only in B, but comp. Srautapadārtha page 118

6 चानुपूर्व्यं H Be; चानुपूर्वं J, चनुपूर्वं F, ॰नुपूर्वं B.

नीयात्याक्रम्याश्राव्याह देवान्यजेति ' वषट्कृते जुहोति यज यजेति नत्वानूयाजानिष्ट्वोद्‌गात्रस्याक्रम्य यथायतनꣳ स्रुचः[1] सादयित्वा वाजवतीभ्याꣳ स्रुचौ[1] व्यूहतः ' शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ[2] विमुच्य ' तथैव कꣳसौ वा चमसौ वानाज्यलिप्तौ यावतः ' समानौ वाजिनयोश्चर्याध्वर्युरेव प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूꣳषि जुहोत्येकं प्रतिप्रस्थाता दार्शपौर्णमासिकं दक्षिणे ' ऽथ पूर्णपात्रविष्णुक्रमैश्चरित्वा न विसृजते सतस्य याचत्याज्यस्थालीꣳ ससुवाꣳ स्रुवं बर्हिः प्रतिवसनीये वाससी वारुणीं निष्कासं तुषानित्येतत्समादायाहिहि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्यन्तरेण[3] चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्राप्स्तद्यन्ति ' प्रसिद्धो ऽवभृथः ' साम चैव नाह देवीराप एष वो गर्भ इति चाथाप्रतीक्षमायन्ति वरुणस्यान्तर्हित्यै ' प्रपथे समिधः कुर्वत एधो ऽस्येधिषीमहीत्येत्याहवनीये[4] ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेत्यथ

---

१ Thus Be H, the dual both times in TFJ; B has the first time the plural, the second time the dual

२ Thus B Be HJ, स्रुचौ TF

३ Thus passage चाहेहि .. नूची पत्नी found thus only in B Be TH; J. has only चाहेहि यजमानेति; F omits the words altogether.

४ Thus HF, °त्येमाहवनीये BJ

विसृजते ऽतमेव पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य श्येन्या शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपते यद्धर्मः पर्यवर्तयदन्तात्पृथिव्या दिवः। अग्निरीशान ओजसा वरुणो धीतिभिः सह। इन्द्रो मरुद्भिः सखिभिः सह॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितं वैश्वानरस्य तेजसा। ऋतेनास्य निवर्तये सत्येन परिवर्तये। तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये॥ शीर्ष्णस्तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते वरुणप्रघासहवींष्यपि' परिवत्सरीणाꣳ स्वस्तिमाशास्स इत्याशास्ते' ॥ ९ ॥ द्वितीयः ॥

अथातश्चतुर्षु मासेषु साकमेधहविर्भिर्यक्ष्यमाणो भवति' स उपकल्पयते श्येनीꣳ शलली लोहितायसस्य च क्षुरं चतुष्टयानि पुरोडाशकपालानि चतस्रश्चरुस्थालीस्तावन्ति मेक्षणानि पृषदाज्याय दध्यथ पौर्णमास्या उपवसथे ऽग्नये ऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता' सा प्रसिद्धेष्टिः संतिष्ठते' ऽथ मध्यंदिने मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति' सा प्रसिद्धेष्टिः संतिष्ठते' ऽथास्यैतदहर्मरुद्भ्यो गृहमेधिभ्यो वत्सा अपाकृता भवन्त्यथ सायꣳ हुते ऽग्निहोत्रे सर्वासां दुग्धे गार्हपत्ये गृहमेधीयं चरुꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनमसंभिन्दन्नुद्धरति' सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयान्तर्वेद्यासादयत्यथाग्नये सोमायेत्याज्यभागाभ्यां

चरुंथोपस्तीर्य पूर्वार्धाच्चरोरवद्यन्नाह मरुद्भ्यो गृहमेधिभ्यो ऽनुब्रूहीति। पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति। प्रत्य-त्याक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति। वषट्कृते जुहोत्यथ स्विष्टकृता चरतीडान्तो गृहमेधीयः संतिष्ठते। पूर्णदर्व्याय[1] क्षामकाषं परिशिनष्टि। प्रतिवेशꣳ स्त्रीकुमारेभ्यः पचन्त्याशिता भवन्त्याञ्जते। ऽभ्यञ्जते। ऽनु वत्सान्वासयन्ति। सवत्सैरेवैताꣳ रात्रिं वत्सं बध्नन्त्यथाध्वर्युरपरात्र उत्थाय नित्यवत्सायै पयसाग्निहोत्रं जुहोत्यथैनां दर्वीं निर्णिज्योपस्तीर्य तस्मिन्नेतꣳ सर्वम एव क्षामकाषमवदधाति। द्विरभिघारयत्यथ पुरोऽनुवाक्यामन्वाह पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्जꣳ शतक्रतो इति। यजति देहि मे ददामि ते नि मे धेहि नि ते दधे। निहारमिन्नि मे हरा निहारं निहरामि ते स्वाहेत्यृषभ[2] एहीत्यृषभस्य रवथे[3] जुहु-याद्ब्राह्मणो हिंकार[4] इत्येतदपरं। गार्हपत्ये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीय मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यता। सा प्रतिष्ठेष्टिः संतिष्ठते। ऽथ तदानीमेव पृष्ठ्याꣳ स्तीर्त्वापः प्रणीय

---

१ पौर्णदर्व्यायै Be.

२ स्वाहा om TF

३ Thus H; रवथे F; रवते BT; रवे Be J; Comp Journ. Germ Or. Soc. LII, p 429.

४ Thus B Be F, ब्रह्मणोभिहिंकार H; ब्रह्मणोपाहिंकार J; ब्राह्मणोपाध-हिंकर T.

निर्वपत्याग्नेयमष्टाकपालमिति पञ्च संचराण्यैन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालमिति । तेषां पुरोडाशानां यावयित्वा श्रपयित्वाभिवास्य प्राङेत्याग्नेभ्यो निनीय स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं । त्रियजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धृतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथ चात्वालस्यान्तेन चात्वालं परिलिखत्युत्तरवेदेरायतनोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्याग्नेरायतनाग्निं प्रणयत्यग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ कृत्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यग्रहणीं पत्नीꣳ संनह्याज्येन च दध्ना चोदेहीत्यायतनात् प्रोक्षणीपूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य स्रुवं च स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यग्रहणीं । पत्नीꣳ संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धं । यथा वैश्वदेवहवीꣳष्येवꣳ संतिष्ठते ऽन्यत्र वाजिनाद्यथ पूर्णपात्रविष्णुक्रमैश्चरित्वा न विसृजते व्रतम् । ॥ १० ॥ तृतीयः ॥

महापितृयज्ञं करिष्यन्नुपकल्पयते व्रीहीꣳश्च यवाꣳश्च षट्कपालान्यभिज्ञान्यार्थे दुग्धमर्धपात्रं द्वे नवे पात्रे इषुशलाकां[1] चौमार्णवेवाम्लमूलं बर्हिर्वर्षीयाꣳसमिध्ममिध्मात्परिश्रयणं कशिपूपबर्हणे आञ्जनाभ्यञ्जने दर्भाꣳ स्फ्यमुदकुम्भौ यज्ञायुधानीत्यथ

---

1 Corrected, ॰शाका B, the other MSS. ॰शाकाꣳष्ट or ॰शाकार।

गार्हपत्यं परिस्तृणाति । तमुत्तरेणैकैकशः संसादयति कशिपूपबर्हणे आञ्जनाभ्यञ्जने दर्भाꣳ स्फ्यमुदकुम्भौ यज्ञायुधानीत्यथ यज्ञोपवीतं कृत्वोत्तरेण[1] गार्हपत्यमुपविश्य पवित्रवत्याग्निहोत्रहवण्या निर्वपति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सोमाय पितृमते जुष्टं निर्वपामीति चतुरो मुष्टीन्मीवीणां निर्वपत्येतामेव प्रतिपदं कृत्वा पितृभ्यो बर्हिषद्भ्यो जुष्टं निर्वपामीति चतुरो यवानामेतामेव प्रतिपदं कृत्वा पितृभ्योऽग्निष्वात्तेभ्यो जुष्टं निर्वपामीति चतुर एव यवानां । तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोष्यन्ते यवा हविष्कृता वाचं विसृजते । समानं कर्माधिवपनादुद्धृत्य दक्षिणार्धे गार्हपत्यस्य षट्कपालान्युपदधात्यथैतान्यवानुलूखले परिहृत्य गार्हपत्य एककपालमधिश्रित्य भर्जयन्ति[2] । यद्रूपा धानाः कृत्वा तेषामर्धा धाना भवन्त्यथेतरान्सक्तून्कुर्वन्ति । कृतानि पिष्टानि समुप्य संयुत्याधिश्रयति[3] पुरोडाशꣳ षट्कपालमथोत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेषु नवं पात्रमधिश्रित्य तिरः पवित्रमाज्यमानीय तिरः पवित्रं धाना आवपत्यथैतदभिशान्त्यायै दुग्धमर्धपात्रं याचति । तस्मिꣳस्तिरः पवित्रꣳ सक्तूनोप्यैनदिषुशलाकयोपमन्थति । दक्षिणोपमन्थत्यनारभ्योपमन्थतीति ब्राह्मणमथोत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेष्वधिश्रयति । त्वचं पुरोडाशस्य

---

१ अपरेण instead of उत्तरेण T

२ om Be JF

३ Before अधिश्रयति H Be JF have च ।

प्राश्यित्वाभित्राण्यान्वितायेभ्यो[1] निनयति । दक्षिणत एष सम स्थण्डिलः कृतो भवति । तदेनां चतुरश्रां[2] वेदिमालिखत्येव न खनति । तस्यै मध्यतोऽन्वाहार्यपचनमुपसमाधाय स्तम्बयजु-र्हरति । ॥ ११ ॥

इदमेव प्रसिद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपत्युद्धत्युद्धतादाग्नीध्रस्त्रि-र्हरति । यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपिला तिर्यञ्चं स्फ्यं कृत्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुप-सादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीत्यथास्य प्रोक्षणीषू-दस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङुदस्य स्रुवं च स्रुचश्च संमार्ष्ट्याज्येनोदेहीत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धं पञ्चगृहीतानि वा चतुर्गृहीतानि वाज्यानि गृहीत्वा प्रोक्षणी-भिरुपोत्तिष्ठतीध्मं प्रोक्षति । वेदिं प्रोक्षति । बर्हिः प्रोक्षति । बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्समूलं प्रस्तरं गृह्णाति तूष्णीमथ प्राचीनावीतं कृत्वा त्रिरपसलैः परिस्तृणन्त्येति । संतरामेवात्र । अथ वितरामथ वितरामथ यज्ञोपवीतं कृत्वा यथेतं त्रिः पुनः प्रतिपर्येत्याथ[3] प्रस्तरपाणिर्द्वौ परिधी परि-दधाति मध्यमं चैव दक्षिणं चोर्ध्वे समिधावादधाति । विधृती तिरश्ची सादयति । विधृत्योः समूलं प्रस्तरं न्यस्यति तूष्णीं ।

---

1 After प्राश्यित्वा Bo TJH have अपयित्वा ।

2 Thus T, -श्रां the other MSS

3 प्रति om. BF.

प्रस्तरे जुह्वं' बर्हिषीतरे' एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य मध्यमाद्धुत्वानुपूर्वꣳ[1] हवींष्युद्वासयत्युपस्तीर्णाभिघारितं पुरोडाशमभिघार्य[2] धानाः करम्भमिति' तेषामेकैकमनूचीनान्युदाहरन्ति' दक्षिणतः पुरोडाशमासादयत्युत्तरतो धाना' उत्तरतः करम्भं' दक्षिणत एतत्परिश्रयणं कशिपूपबर्हणे आञ्जनाभ्यञ्जने दशाꣳ स्फमिति निदधात्युत्तरत उदकुम्भौ' दक्षिणत उपविशतो ब्रह्मा च यजमानश्चोत्तरतोऽध्वर्युश्चाग्नीध्रश्च' ॥ १२ ॥

अथेध्मात्समिधमाददान आहाग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मꣳ सकृद्वा त्रिर्वा' परि समिधꣳ मिनष्टि' वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति' संमृष्टे स्रुग्भ्यामुत्तरमथाघꣳस्यमयंस्रुचावुद्धृत्याक्रम्य[3] जुह्वा ध्रुवाꣳ समज्य सादयित्वा स्रुचौ प्रवरं प्रवृणीते[4] ऽग्राश्रावयत्यो श्रावयास्त्वौषडग्निर्देवो होता देवान्पितृन्यक्षदित्येतावान्प्रवरः' सीदति होता' प्रसवमाकाङ्क्षति' प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति' वषट्कृते जुहोति' यज यजेत्यपबर्हिषश्चतुरः प्रयाजानिष्ट्वोद्धृत्याक्रम्य सꣳस्रावे-

---

१ °पूर्वꣳ all

२ After पुरोडाश B Bo HF ins उद्वासयति।

३ Thus Bo HF, स्रुच उद° J, स्रुचावुद° T, स्रुचा उद° B.

४ BH ins प्रथिवꣳ होतारं वृणीते but comp TB I 6. 9 1.

थानुपूर्वꣳ[1] हवीꣳष्यभिघारयत्यथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राचीनावीतानि कुर्वते । विपरिक्रामन्त्येत ऋत्विजो । विपरिहरन्ति हवीꣳष्युत्तरतः पुरोडाशमासादयति । दक्षिणतः करम्भमाग्रय[2] एव धाना भवन्त्युत्तरत उपविशतो ब्रह्मा च यजमानश्च दक्षिणतो ऽध्वर्युश्चाग्नीध्रश्चाथैनत्परिश्रयन्ति । तस्योदीचीं द्वारं कुर्वन्ति । स यो बलवांस्तमाहानेनोदकुम्भेन संततया धारया त्रिरपसलैः परिषिञ्चन्परीहीति । स तथा करोति । निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्यथोपस्तीर्य पूर्वार्धात्पुरोडाशस्यावद्यन्नाह ॥ १३ ॥

सोमाय पितृमते ऽस्तु स्वधेति । पूर्वार्धात्पुरोडाशस्यावद्यति । पूर्वार्धाद्धानानां । पूर्वार्धात्करम्भस्याभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यो[3] स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । सोमं पितृमन्तꣳ स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा[4] । स्वधा नम इति वषट्करोति । वषट्कृते

---

१ •पूर्व्यꣳ all

२ Thus FJ (?); चाग्रथा HBT , मथा Be.

३ Here and in the corresponding passages some of the MSS. have चत्याश्रावयति instead of चति• and चा instead of चो।

४ Thus here and in the four corresponding passages BT ; JF Be have every time ये स्वधामह इत्यागूर्भवति instead of ये स्वधेत्यागूर्य स्वधामह इति वा; H has this passage four times thus · ये स्वधामह इत्यागूर्भवति स्वधा नम इति वषट्करोति ये स्वधेत्यागूर्य स्वधामह इति वा।

जुहोत्यथोपस्तीर्य मध्याद्धानानामवद्यत्याह पितृभ्यो बर्हिषद्भ्यो ऽनु स्वधेति । मध्याद्धानानामवद्यति । मध्यात्करम्भस्य । मध्यात्पुरोडाशस्याभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यो स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । पितॄन् बर्हिषदः स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते जुहोत्यथोपस्तीर्यापरार्धात्करम्भस्यावद्यत्याह पितृभ्यो ऽग्निष्वात्तेभ्यो ऽनु स्वधेत्यपरार्धात्करम्भस्यावद्यत्यपरार्धात्पुरोडाशस्यापरार्धाद्धानानामभिघारयति । प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यो स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति । पितॄनग्निष्वात्तान्स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते जुहोत्यथोपस्तीर्य दक्षिणार्धात्पुरोडाशस्यावद्यत्याहाग्नये कव्यवाहनाय स्विष्टकृते ऽनु स्वधेति । दक्षिणार्धात्पुरोडाशस्यावद्यति । दक्षिणार्धाद्धानानां । दक्षिणार्धात्करम्भस्य । द्विरभिघारयति । न प्रत्यनक्ति । दक्षिणतो ऽवदायोदङ्ङतिक्रामत्यो स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयत्यग्निं कव्यवाहनꣳ स्विष्टकृतꣳ स्वधा कुर्विति । ये स्वधेत्यागूर्य स्वधामह इति वा । स्वधा नम इति वषट्करोति । वषट्कृते दक्षिणार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथैतन्मेक्षणꣳ शलाकामित्यग्नावनुप्रहरत्यथैने मꣳस्रावेणाभिजुहोत्यथ दक्षिणतो ऽत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा यज्ञोपवीतानि कुर्वते । विपरिक्रामन्त्येत ऋत्विजो । विपरिहरन्ति हवीꣳषि । दक्षिणतः

पुरोडाशमासाद्यत्युत्तरतः करम्भमांसथ[1] एव धाना भवन्ति[2] । दक्षिणत उपविशतो ब्रह्मा च यजमानश्चोत्तरतो ऽध्वर्युराग्नीध्रश्चाथ प्राशित्रमवदायेडामवद्यति । ॥ १४ ॥

उपहूतायामिडायामग्नीध आदधाति षडवत्तं । निघ्रेण[3] भक्षयित्वा बर्हिषि संन्यस्यन्त्यथ प्राचीनावीतानि[4] कृत्वा पुरोडाशं धानाः करम्भमिति पात्र्यां संप्रयौति । तिसृषु स्रक्तिषु[5] पर्णमेषेषु त्रीन्पिण्डान्ददात्येतत्ते ततासौ ये च त्वामन्विति दक्षिणस्यां श्रोण्यामेतत्ते पितामहासौ ये च त्वामन्विति दक्षिणे ऽंसे । एतत्ते प्रपितामहासौ ये च त्वामन्वित्युत्तरे ऽंसे । उत्तरस्यां श्रोण्यां लेपं निमार्ष्ट्येषा युष्माकमियमस्माकमिमा वयं जीवा जीवन्तो ऽनुसंचरन्तो भूयास्मेत्यथ पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य[6] यज्ञोपवीतानि कृत्वाहवनीयमुपतिष्ठन्ते सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि । प्र नूनं पूर्णवन्धुर स्तुतो यासि वशाँ अनु । योजा न्विन्द्र ते हरी इत्या प्रमितोरुपतिष्ठन्ते । अथ गार्हपत्यमुपतिष्ठन्ते ऽक्षन्-

---

1 Thus only F; मथा Be; चारथा the other MSS.

2 DT ins. उत्तरत उदकुंभो।

3 Thus (comp. Āpastamba's अवघ्रेय) T Bh Keś, the other MSS also Prayoga I.O निघ्रेय।

4 Here and in the following passages the MSS. have sometimes the singular instead of the plural यज्ञोपवीत, प्राचीनावीत।

5 स्रक्तीषु Be H

6 Be JF ins. अथ।

मीमदन्त ह्यत्र प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी इत्यथ तमितोऽपतिष्ठन्ते । ऽथ प्राचीनावीतानि कृत्वान्वाहार्यपचनमभिप्रपद्यन्ते ऽवन्पितरो ऽमीमदन्त पितरो ऽतीतृपन्त पितरो ऽमीमृजन्त पितरः । परेत पितरः सोम्या इत्यथ तमितोऽपतिष्ठन्ते । स यो वत्सवाꣳस्तमाहानेनोदकुम्भेन संततया धारया त्रिरपसलैः परिषिञ्चन् परीहीति । स तथा करोति । निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्याहरणमीत्येव[1] कशिपूपबर्हणे आञ्जनाभ्यञ्जने ददात्यथ वासाꣳसि ददात्यथ षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते । ऽथ वीरं याचते । ऽथैनानुत्थाप्य प्रवाह्य तिसृभिर्मन आह्वयते मनो न्वाह्वामहे आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यथैतान्पिण्डान्सह पर्णशैवैरप्स्वनुप्रहरति । व्यवच्छिन्दन्ति परिश्रयणमथ यज्ञोपवीतानि कुर्वते । ऽथ[2] संप्रैषमाह सन्नमस्थास्थामः समिधमाधायाग्नीदग्नीन्त्सकृत्सकृत्संमृड्ढीत्यथ जुहूपभृतावादायात्याक्रम्याश्राव्याह देवौ यजेति[3] । वषट्कृते जुहोति । यज[4] यजेत्यपबर्हिषौ द्वावनूयाजाविष्ट्वोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा वाजवतीभ्याꣳ स्रुचौ व्यूहति । शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ विमुच्याथैव समिष्टयजुर्जुहो-

---

1 Thus B Be HF. Ke4; आहरणीत्येव T; J corrupt.

2 Thus Be JF, ०वीतं कृत्वा the other MSS.

3 यजयजेति Be H.

4 om. Be F.

त्यथैतेषाꣳ भस्त्राणां देहे उदाहरन्त्यथ यज्ञोपवीतानि कृत्वा प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठन्ते प्रजापते न त्वदेतान्यन्य इत्यथैतां द्वितीयां जपति यदन्तरिक्षं पृथिवीमुत द्यामिति' संतिष्ठते महापितृयज्ञः' ॥ १५ ॥ चतुर्थः ॥

यावदेवात्राध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता प्रतिपूरुषं त्रैयम्बकानेककपालानेकातिरिक्तान्गार्हपत्ये श्रपयित्वानभिघारितानुद्वास्य शते वा शरावे वा जरत्कोशबिले वा समुप्योपास्ते' ऽथ याचति नीललोहिते सूचे अन्तमं[1] पर्णमन्तमागारादेकोल्मुकमुद्याचमित्यथैतत्समादाय गार्हपत्यमुपतिष्ठन्ते यावन्तो गृह्याः स्मस्तेभ्यः कमकरं पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छेत्यथोदञ्चो निष्क्रम्य तां दिशं यन्ति यत्रास्य नित्यसंपन्नश्चतुष्पथः स्पष्टो भवति' यद्यु वै न भवत्यनसा वा रथेन वा वियान्ति' तदेतदेकोल्मुकमुपसमाधाय[2] संपरिकीर्यान्तमे पर्णे सर्वेषां त्रैयम्बकाणाꣳ सकृत्सकृत्समवदाय जुहोत्येक एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजं यथासति सुगं मेषाय मेष्या अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम्। यथा नः श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात्साहेत्यथैतदन्तमं पर्णं यं द्वेष्टि तस्य

---

१ Here and infra the MSS have sometimes वंतिम॰ ।

२ समद् only FJ, the other MSS om

संचरे पशूनां न्यस्यति। यदु वै न देध्याखवटे[1] न्यस्यत्यथैतेषां त्रैयम्बकाणामेकैकं उन्नयच्छति द्वौ यजमानायाथैतमग्निं त्रिः प्रदक्षिणं परियन्ति[2] दक्षिणानूरूनुपाघ्नानास्त्र्यम्बकं[3] यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतादिति। सकृत्परीत्योत्तरतस्तिष्ठन्त्युत्खिदन्ति[4]। भगाय त्वेति क्षिपन्त। एवमेव द्वितीयं परियन्त्येवं तृतीयमथैषा पतिकामा[5] त्रिरपसलैः पर्येति सव्यमूरुमुपाघ्नाना[6] त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मा पतेरिति। सकृत्परीत्योत्तरतस्तिष्ठत्युत्खिदति[4]। भगाय त्वेति क्षिपत। एवमेव द्वितीयं पर्येत्येवं तृतीयमथैनान्यजमानस्याञ्जलावावपति ॥ १६ ॥

प्रजया त्वा सꣳसृजामि माघरेण सुरामिवेति। तान्यजमानः पत्न्यञ्जलावावपति प्रजया त्वा पशुभिः सꣳसृजामि मासरेण सुरामिवेति। तान्पत्नी दृषिवे भगकामायै भगेन

---

१ Thus Bh.; वाध्यखटे T; वाखवटे B; the other MSS. वाखवटे, comp. X. 48.

२ Thus only Be, the other MSS. write पर्यंति।

३ Thus BH; उपघ्नाना J Be, उपघ्नानो F; उपनिघ्नानाः T; उपघ्नाना Keś.

४ Thus BH; उत्किरंति (as TBr. I. 6 10. 5) the other MSS., but comp. Dvaidhasūtra: त्रैयम्बकानामुत्खेदन इति।

५ Instead of अथैषा पतिकामा BF have अथ कुमारी भगकामा।

६ Thus BH, उपघ्नाना Be JF Keś

त्वा सꣳसृजामि सम्भरेण सुरामिवेत्यथैनामूत आधाय नीललोहिताभ्याꣳ सूत्राभ्यां विग्रथ्य शुष्के वा स्थाणौ विशाखायां[1] वा अवसृजत्येष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतो ऽतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासा इत्यथैनमुपतिष्ठन्ते ऽथापो प्रतिधिष्य परास्य प्राचमनपेक्षमाणा आयन्ति स्वसापादागमत्वाक्षैतेनैव यथेतमेत्यादित्यं चरुं पुनरेत्य निर्वपतीयं वा अदितिरस्यामेव प्रतितिष्ठन्तीति ब्राह्मणꣳ सा प्रसिद्धेष्टिः संतिष्ठते ऽत्र विसृजते ऽतमय पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानमायतन उपविश्य सेनया शलल्या लोहितायसेन च क्षुरेण शीर्षाणि च वर्तयते परि च वपते य इमां मही पृथिवीमृतुभिः पर्यवर्तयथो अस्याः पृथिव्यास्त्वचि निवर्तयत्योषधीः । अग्निरीशान ओजसा वरुणो धीतिभिः सह ॥ इन्द्रो मरुद्भिः सखिभिः सह ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितं वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये सत्येन परिवर्तये ॥ तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये ॥ शीर्ष्णस्तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते साकमेधहवीꣳष्यौदावसरीणाꣳ स्वस्तिमागमत इत्यास्ते ॥ १७ ॥ पञ्चमः ॥

अथातश्चतुर्षु मासेषु शुनासीरीयहविर्भिर्यक्ष्यमाणो[2] भवति

---

1 Thus Bo HP, Dvaidha, Bh., Keś., विशाखां BT.

2 Some MSS. read here and *infra* शुनाशीरीय॰ ।

स उपकल्पयते वेणीᳲ शलली लोहितायसस्य च क्षुरं पञ्चत-थानि पुरोडाशकपालानि पञ्च चरुस्थालीर्भवन्ति मेक्षणानि पृषदाज्याय दधीत्यथास्यैताᳲ[1] रात्रिं वायवे वत्सा अपाकृता भवन्ति । प्रातर्वायव्यं पयो दोहयति[2] सांनाय्यस्य वावृता तूष्णीं वाथ प्रातर्हुते ऽग्निहोत्रे पृषदाज्याᳲ स्तीर्त्वाऽपः प्रणीय निर्वपत्याग्नेयमष्टाकपालमिति पञ्च संचराण्यैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालमिति । त्वचं पुरोडाशानां ग्राहयित्वा अपयित्वाभिवास्य प्राशित्रायेभ्यो निनीय साम्वयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं । त्रियंशुपा तूष्णीं चतुर्थं । पूर्वं परियाहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्तिर्हरति । स यद्युत्तरवेदिं करोति यथा महाहवीᳲष्येवᳲ संतिष्ठते । यदु वा उत्तरवेदिं न करोति यथा वैश्वदेवहवीᳲष्येवᳲ संतिष्ठते ऽन्यत्र वाजिनादथ पूर्णपात्रविष्णुक्रमैश्चरित्वा विसृजते व्रतमथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य वेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपत एकं मासमुदसृजत्परमेष्ठी प्रजाभ्यः । तेनाभ्यो मह आवहदमृतं मर्त्याभ्यः ॥ प्रजामनु प्रजायसे तदु ते मर्त्यामृतम् । येन मासा अर्धमासा ऋतवः परिवत्सराः ॥ येन ते ते प्रजापते

---

१ इति found only in BH, the word is missing in all the MSS also supra page 141, 15

२ दोहयित्वा TF.

ईजानस्य न्यवर्तयन् । तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा शिरस्तपस्याहितं वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये सत्येन परिवर्तये तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये ॥ शीर्ष्णस्तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्ताद्धाये ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते शुनासीरीयहवींᳪष्यनुवत्सरीणाᳪ स्वस्तिमायास्त इत्याशास्ते ॥ १८ ॥ षष्ठः ॥

॥ इति पञ्चमः प्रश्नः ॥



अग्निष्टोमेन यक्ष्यमाणो भवति। स उपकल्पयते कृष्णाजिनं च कृष्णविषाणां च वासश्च मेखलां च सैषा पृथ्वी वेणीकार्या भवति त्रिवृदेकतःपाशा द्वाविंशतिं च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च सतूलां च शरेषीकामौदुम्बरं च[1] दण्डं चमसं च[2] व्रतप्रदानꣳ स्थालीꣳ सशिक्याꣳ समेक्षणमेतानि चर्योदृशा यजमानस्यान्वेव पत्नीमभितो भवन्ति। कुम्बं च कुरीरं च वासश्च योक्त्रं चापरिमितानि च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च सतूला च शरेषीकास्मन्मयश्च पात्रः शङ्कुश्च स्थाली सशिक्या समेक्षणा। जुष्टे देवयजने शाला कारिता भवति। पुरोहविषि देवयजने याजयेदित्येतेषां यज्जोषयते। प्राचीनवंशा दिक्षतीकाशा दक्षिणतो वर्षीयसी। तस्यै चतस्रो द्वारः कुर्वन्ति प्राचीं दक्षिणां प्रतीचीमुदीचीं। दक्षिणतो व्रतश्रपणागारं कुर्वन्ति पश्चात्पत्नीशालमथ[3] यदि दूरे तीर्थं भवत्युत्तरेण शालां द्वौ कटपरिवारौ कुर्वन्ति पूर्वं यजमानायापरं पत्न्यै। तयोः प्राची द्वारौ कुर्वन्ति। तदुदकुम्भौ निधापयत्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वारण्योरग्नीन्समारोह्य शालामभिप्रैत्युत्तरेण शालां परीत्य पूर्वया द्वारा शालां प्रपाद्य गार्हपत्यस्यायतने मथित्वाग्नीन्विहृत्य मध्यमे वंशे राजानं प्रबध्नन्ति। परिस्तृणन्ति। दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथ

1 च only P, the other MSS. om the word, except F which has चमसं।

2 च om HF.

3 Thus TJ, °शालाम° HBP; °शालीम° F.

गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा सप्तहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने' अथापरं चतुर्गृहीतं गृहीत्वा यूपाहुतिं जुहोति यच्च जुहोति' पूर्वाह्ण एवैतौ व्रतदुघयोर्वत्सौ बध्नन्त्यथाभ्यां व्रतोपायनीयं पाचयति[1]' तस्याश्रितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्याथाध्वर्युराग्नीध्रात्संभारानाहार्यथाहेहि यजमानेति' पूर्वया द्वारोपनिष्क्रम्य यथायतनमन्वारब्धस्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्ति ॥ १ ॥

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इत्यूर्ध्वाग्रं बर्हिरनूक्ष्यत्योषधे त्रायस्वैनमिति' स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनꣳ हिꣳसीरिति' प्रवपति देवश्रूरेतानि प्रवपा इति' स्वस्त्युत्तराण्यशीयेत्युप्तान्प्रत्यभिमृशत' एतयैवावृतोत्तरं गोदानमद्भिरुनत्ति यजुषा वा तूष्णीं वा' नापिताय क्षुरं प्रयच्छन्नाह नापितोपकेशश्मश्रु मे निकृन्तनखानि प्रमृतादिति' तं तथा प्रहाप्यैनमद्भिरभिषिञ्चत्यापो अस्मान्मातरः शुन्धन्तु घृतेन नो घृतप्वः पुनन्त्विति' संप्रधाव्य रजः प्रक्षालयति विश्वमस्मत्प्रवहन्तु रिप्रमित्युदाभ्यः[2] शुचिरा पूत एमीति' वससाग्रेण प्रतिष्ठापाय आपामत्यपो अश्नातीति प्राङ्मुखाय प्रदक्षिणमहतं वासः परिधत्ते सोमस्य तनूरसि तनुवं मे पाहीत्यथास्मै मिथ्यमुद्धरति उपगृह्णाति' तस्य पाणिभ्याꣳ संप्रवामा

[1] Thus J; पाचति T, वाचयति BP, वचयति H; वाचयति F.

[2] Corrected according to Bh., Kes., and the parallel passage p. 159, 1. The Mss. have not एमि but ऐमि (BT) and एति HP; J om.

मुखमेव प्रथममभ्यङ्क्ते महीनां पयो ऽसि वर्चोधा असि वर्चो मयि धेहीत्यनुलोममा पादाभ्यामन्यो ऽस्य पृष्ठमभ्यनक्त्ययास्मै तदाञ्जनं पिष्टं दृषद्युपप्रोते सतूला च शरेषीका तस्य प्राङ्मुखस्य प्रत्यङ्मुख उपविश्य सव्येन पाणिना दक्षिणमक्ष्यनक्ति वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहीति त्रिरनिधावं त्रिरुत्तरमेवं पञ्च कृत्व आङ्क्त इति ब्राह्मणं पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमथैनमेकविंशत्या दर्भपुञ्जीलैः पवयति चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति यजमानमतिवाचयति तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमित्यथैनꣳ सव्ये पाणावभिपद्य शालामानयत्या वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इति पूर्वया द्वारा शालां प्रपादयतीन्द्राग्नी द्यावापृथिवी आप ओषधीरित्यथैनमग्रेणाहवनीयं पर्याणीय दक्षिणत उदङ्मुखमुपवेश्याहवनीयमीक्षयति त्वं दीक्षाणामधिपतिरसीतीह मा सन्तं पाहीत्यात्मानम् ॥ २ ॥

यावदेवाचाध्वर्युरेष्यति तावदेव प्रतिप्रस्थाता पत्न्यै दक्षिणमुपपक्षमद्भिरुनत्ति तूष्णीं तूष्णीमूर्ध्वाग्रं बर्हिरनुक्ष्यति तूष्णीꣳ स्वधितिं तिर्यञ्चं निदधाति तूष्णीं प्रवपति तूष्णीमुप्तानं प्रत्यभिमृशत एतयैवावृतोत्तरमुपपक्षमद्भिरुनत्ति तूष्णीमेव नापिताय क्षुरं प्रयच्छन्नाह नापितोपपक्षौ मे निकृन्तनखौ प्रमृतादिति तां तथा प्राहायैनामद्भिरभिषिञ्चति

तूष्णीं तूष्णीं संप्रधाव्य रजः प्रश्नावयति तूष्णीमद्भिरद्देति[1] तूष्णीं वसनस्यान्तेन प्रतिच्छाद्याप आचामति तूष्णीं[2] प्रदक्षिणमहतं वासः परिधत्ते तूष्णीमभ्यङ्क्ते तूष्णीमाङ्क्ते ऽथैनामपरिमितैर्दर्भपुञ्जीलैः पवयति तूष्णीं तूष्णीमेवाथैनामानीयापरया द्वारा शालां प्रपाद्य प्राचीमुदानयन्वाचयति प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु । अथाहमनुकामिनी स्वे लोके विशा इहेत्यथ जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यमित्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नावैष्णवमेकादशकपालं दीक्षणीयामिष्टिं निर्वपति तस्यै दशतयमुत्सीदति न यजमानं व्रतमुपनयति न पत्नीꣳ संनह्यति न यजमानभागं करोति न ब्रह्मभागं न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं याचति[3] न फलीकरणहोमेन चरति न समिष्टयजुर्जुहोति न पूर्णपात्रे यजमानं वाचयति न विष्णुक्रमान्क्रमते ऽथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याज्यस्थाल्यां प्रत्यवनीयाज्यस्थाल्याः स्रुवेणोपघातं दीक्षाहुतीर्जुहोति ॥ ३ ॥

आकूत्यै प्रयुजे ऽग्नये स्वाहा मेधायै मनसे ऽग्नये स्वाहा दीक्षायै तपसे ऽग्नये स्वाहा सरस्वत्यै पूष्णे ऽग्नये स्वाहेत्यथ

---

१ अद्भिर् ( Instr. ) all, instead of the Abl., that was to be expected; H omits the word

२ तूष्णीं twice BF

३ Thus HTJF, याचयति B.

ध्रुवि चतुर्गृहीतं गृहीत्वा स्रुचा पञ्चमीं जुहोत्यापो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाज्यस्य पूर्णाꣳ स्रुचमौदुम्बरीं जुहोति विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यम्॥ विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहेत्यथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथापरेणाहवनीयं पर्याहृत्य यजमानाय प्रयच्छति कृष्णाजिनं च कृष्णविषाणां च वासश्च मेखलां चौदुम्बरं दण्डं वसनमुष्णीषꣳ अथैव प्रतिप्रस्थाता पत्न्यै प्रयच्छति कुम्बं च कुरीरं च वासश्च योक्त्रं च शङ्कुं च ॥ ४ ॥ प्रथमः ॥

अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमस्तृणाति तस्य शुक्लकृष्णे संधयति शुक्ले ऽङ्गुष्ठौ भवति कृष्णे ऽङ्गुलिऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृच इत्यथ दक्षिणं जान्वाच्याभिपर्यसीमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳशिशाधि। ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ रुहेमेत्यथोपस्थं कृत्वा प्रदक्षिणं मेखलां पर्यस्यत्यूर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छेति पाहि मा मा मा हिꣳसीरिति निष्टर्क्यं ग्रन्थिं ग्रथ्नात्येतस्मिन्काले प्रतिप्रस्थाता योक्त्रेण पत्नीꣳ संनह्यत्याशासाना सौमनसꣳ सं त्वा नह्यामीति द्वाभ्यामथ यजमानं वाससा प्रोर्णोति विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छेति वसनस्यान्तीकाशेषु वाचयति नक्षत्राणां मातीकाशात्पाहीति प्रतिहृत्य वसनस्यान्तान्प्रदक्षिणमुष्णीषेण शिरो वेष्टयति श्रिया

ते शिरो वेष्टयामि श्रियै यशसे ब्रह्मवर्चसायेत्येतस्मिन्काले प्रतिप्रस्थाता पत्न्यै कुम्बकुरीरमधूहति तूष्णीमथास्यैषा कृष्णविषाणा चित्रत्त्विर्वा पञ्चवत्त्विर्वा शाण्या रज्ज्वा परिवृणा मण्डूरवद्विपथिता[1] ' तां यजमानाय प्रयच्छतीन्द्रस्य योनिरसीति ' मा मा हिꣳसीरिति यजमानः प्रतिगृह्णाति ' तां वसनस्यान्तमायां[2] दशायां बद्धा तयान्तर्वेदि लोष्टमुद्धन्ति कृष्यै त्वा सुसस्याया इति ' सुपिप्पलाभ्यस्त्वौषधीभ्य इति दक्षिणं गोदानं कण्डूयत ' एतस्मिन्काले प्रतिप्रस्थाता पत्न्यै शङ्कुमावध्नात्येतेन कण्डूयस्वेत्यथास्मा ऊर्ध्वाग्रमौदुम्बरं दण्डं प्रयच्छति मुखेन संमितꣳ सूपस्था देवो वनस्पतिरित्यूर्ध्वो मा पाह्योदृच इति यजमानः प्रतिगृह्णात्यथैनं यजमानमारम्भं वाचयति स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इत्यत्र मुष्टी[3] करोति वाचं[3] यच्छत्यथाहादीक्षिष्टायं ब्राह्मणोऽसावित्यमुगोत्रो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता नमिन्द्रायेन्द्राग्निभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यश्च सोमपेभ्यः

---

१ The reading of these difficult words is not wholly certain ; H reads as above, B मंडघरवद्विशाविप॰, J मंडघरवद्धाविप॰, T मण्डलचरवद्धाविप॰ ; F. मडघरद्विताषाविप॰ ; P मडघरवद्विताबाविप॰ ; comp the Bhāṣya (and Keś) मण्डूरवत् स्फाटलपाशवत् बद्धा, where बद्धा is the periphrase of विपथिता ।

२ चांतिमायां BJ.

३ Thus (without च) TJF, BH ins च after वाच and after मुष्टी, but comp, TS VI 1 4, 3

दर्व्यास्ये कंसे वा चमसे वा निःषिच्य व्रतं प्रयच्छति । तद्दक्षिणतः परिश्रित्य व्रतयति ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेति । यजुषा यावन्मात्रं व्रतयित्वा तूष्णीं भूयो व्रतयत्य-तस्मिन्काले प्रतिप्रस्थाता पत्न्यै पात्रे निःषिच्य व्रतं प्रयच्छति । तस्याः परिश्रित्य व्रतयति तूष्णीं । निर्णिज्य पात्रे प्रयच्छतो ऽथ तथैव पुरा नक्षत्राणामन्तर्धानात्सम्प्रेष्य वाचंयमयोर्व्रते दोहयतो । ऽथोदित आदित्ये यजमानः कृष्णाजिनमासज्य पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्भूर्भुवः सुवर्व्रतं कृणुत व्रतं कृणुतेति त्रिर्वाचं विसृजते । समानो वाचो विसर्गः समानꣳ संवेशनयजुः समानं प्रबुद्धयजुः समानमपामाचमनꣳ समानं व्रतनमेव मनोहारान्प्रहिणोति । स यं मन्यते न मा प्रत्याख्यास्यतीति तं प्रथममभि प्रहिणोति विश्वे देवा अभि मामावदृत्रन्पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावेत्याहरन्तं दृष्ट्वा जपति नानाहरन्तꣳ रास्वेयत्सोमा भूयो भर मा पृणन्पूर्त्या विराधि माहमायुषेति । स यथारूपं प्रतिगृह्णाति ॥७॥

चन्द्रमसीति हिरण्यं वस्त्रमसीति वास उस्रासीति गाꣳ हयो ऽसीत्यश्वं छागो ऽसीति छागं मेषो ऽसीति मेषमेव यद्ब्राह्मणेनानादिष्टं भवति प्राजापत्यमसि मम भोगाय भवेत्येव तत्प्रतिगृह्णाति । ताः समुदायुत्य[१] रक्षन्ति । तासां या नश्यति वा म्रियते

१ Thus BTJ; समुदायित्य H; समुदायैत्य F.

वा वायवे त्वेति तामनुदिशति' याप्सु वा पाशे वा वरुणाय त्वेति तां' या सं वा शीर्यते गर्ते वा पतति निर्ऋत्यै त्वेति तां' यामहिर्वा व्याघ्रो वा हन्ति रुद्राय त्वेति तां' तास्रां तिस्रः. पराच्यो' ऽथ येयं नष्टा यदि विन्देयुः कथꣳ स्यादित्येतदनुदिष्टैव[1] स्यादित्येतदेकं' कमस्याः[2] अतः[3] श्रेयाꣳसं[2] प्रतिग्रहीतारं लभेत' दक्षिणाभिरेवैनाꣳ[3] सह दद्यादित्येकं' वायव्ययैवैनया[4] यजेतेत्येतदपरम्[5]' ॥ ८ ॥ द्वितीयः ॥

अथातः प्रयाणस्यैव मीमाꣳसा' दीक्षितं वायोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षिते सꣳसृजन्ति व्रते' संबध्नन्ति व्रतदुघयोर्वत्सावादधति[6] यदाधेयं भवति नीडे गार्हपत्यं प्रउग आहवनीयमपि वारण्योरग्नीन्समारोह्य बृहस्पतिवत्यर्चा प्रयाति भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्यथ यत्रैनं यान्तं व्रतवेलोपाधिगच्छत्युत्तरतो ऽरणी निधाय दक्षिणतः परिश्रित्य व्रतयति' तूष्णीं तृणोदकायावस्यत्यथ यद्यपर्याणा[6] अप उपाधिगच्छति तज्जपति देवीरापो अपां

---

१ Thus BF (J om this passage), अनुद्दैव T, अनुदिष्टेव H.

२ Thus T; कमस्यामश्रे॰ BJ, कमस्याः मा: श्रे॰ F, कमास्याः श्रे॰ H.

३ एव om HTF.

४ Thus JF (but ॰नयायजेते॰) H (but ॰वैनयजे॰), B वायव्ययैवैनय-जयेत्ये॰; T: वायव्यैव्यैवेनयायजतेत्ये॰ ।

५ Thus only T and Bh , ॰दधाति the other MSS

६ Thus all the MSS and Keś, also the citation in the Dvaidha-sūtra. I did not venture to correct अपरियाणा, as only the Vivaraṇa reads

प्रभूम इति। त्रिरुपांश्वाह। देवेभ्य एवैनं प्राह। त्रिरुच्चैरुप-निष्क्रम्योभयेभ्य एवैनं देवमनुष्येभ्यः प्राहेति ब्राह्मणमथैनꣳ सङ्ख्यान्ति ॥ ५ ॥

दीक्षितोऽसि दीक्षितवादं वद सत्यमेव वद मानृतं मा स्वपिष्ठा मा कण्डूयथा माऽपावृथा यदि स्वपासि स्वपिरद्य स्वपामि यदि कण्डूयामि कृष्णविषाणया कण्डूयामि यदि वाचं विसृजेद्वैष्णवीमृचमनुद्रवतान्मा त्वान्यत्र दीक्षितविमितात्सूर्योऽभ्युदियान्माभिनिम्रुक्ताद्यानि[1] देवतानामानि यथाख्यातं तान्याचक्षाथ यान्यदेवतानामानि यथाख्यातं तान्याचक्षाण उपरिष्टाद्विचक्षणं धेहि चनसितवतीं विचक्षणवतीं वाचं वद कृष्णाजिनान्मा यवच्छेत्था दण्डाच्चेति। स एवमेवैतत्सर्वं करोत्यथोपसमिन्धनवेलायामुत्तरेणाहवनीयं तिष्ठन्नुपैषमाहाग्नीज्ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ[2] पत्नि वाचं यच्छेति। संप्रेष्य वाचंयमयोर्मते दोहयतो। ऽथाध्वर्युः[3] पूर्वया द्वारोपनिष्क्रम्य दोहयित्वैतेनैव यथेतमेत्य गार्हपत्येऽग्निहोत्रविधि चेष्टित्वा तप्तोदशुदास्य शीतीकृतातच्य वानातच्य वोत्तरे शालाखण्डे शिक्य आसजत्यथ प्रतिप्रस्थाता दक्षिणया द्वारोप-निष्क्रम्य दोहयित्वैतेनैव यथेतमेत्य व्रतश्रपणे तप्तोदशुदास्य शीतीकृतातच्य वानातच्य वा दक्षिणे शालाखण्डे शिक्य

---

१ Thus HF, ॰मुद्रवात् T, ॰मुद्रवात् BJ.

२ BT ins. सत्य वाचं यच्छ।

३ JF ins. प्रदक्षिणमावृत्य।

अथास्तमितेऽथोदितेषु नक्षत्रेषु यजमानः कृष्णाजिनमास्थाय पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्भूर्भुवः सुवर्व्रतं कृणुत व्रतं कृणुतेति त्रिर्वाचं विसृजते । ज्योतिष्मतीमुपध्यासेति । सन्ततवतीं विचक्षणवतीं वाचं वदति । स यदु शालामुपाधिगच्छति तदुपप्रत्यवहं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीरित्यथ यद्येनमभिवर्षेदुन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्येतज्जपति । तस्यैते यजुषी परिभवे च मसृणाये भवतः । अथास्मै निपतः[2] काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति[3] । स यदि वक्रतयमुपस्तीर्णं भवति कृष्णाजिनाद्देवानन्तर्हितः संविशत्यथ संवेशनयजुर्जपति ॥ ६ ॥

अग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहि । गोपाय नः स्वस्तये प्रबुधे नः पुनर्दद इति । दक्षिणतः शय एतद्वै यजमानस्यायतनꣳ स्व एवायतने शये ऽग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शय इति ब्राह्मणमथैषा पत्नी जघनेन गार्हपत्यꣳ संविशति तूष्णीमथाध्वर्युरैधराव आहृत्य प्रबुद्धयजुर्वाचयति त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्य इत्यथाप आचामति दैवीं धियं मनामहे सुमृडीकामभिष्टये । वर्चोधां यज्ञवाहसꣳ सुपारा नो असद्वशे

१ एव BTH.

२ निपत BH., निपतः T Keś., निवपत F; नित J, निपतत. P pr. m.: निपततः sec. m.

३ F ins. यदपरिस्तीर्णं भवति comp. Keś. यदपरिस्तीर्णं भवति ।

नपाद् ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं वो मा व्यक्रमिषम्- च्छिन्नं तन्तुं पृथिव्या अनु गेषमिति[1] स वा गाहते स वा तरति[1] सेतुमेव कृत्वात्येतीति ब्राह्मणमथ यत्र वत्स्यन्भवति तद्वत्स्यत्यथेमवस्य वर आ पृथिव्या इत्यथादित्यमुद्यन्तमुपतिष्ठत आरे शत्रून्कृणुहि सर्ववीर इत्यथ यत्र यक्ष्यमाणो भवति तद्वक्ष्यत्येदमगन्म देवयजनं पृथिव्या इत्यान्तादनुवाकस्य[1] ॥ ८ ॥

अथातः क्रयस्यैवोपवसथः[2] पर्याप्लवते[1] स उपकल्पयते वस्त्रं च वाग्रां च कृष्णवलक्ष्यावूर्णास्तुके[1] उष्णीषं द्वे वाससी द्वे कृष्णाजिने सोमक्रयणीं सैषारुणा पिङ्गलैकहायनी भवति सोमवाहनावनड्वाहौ सोमवाहनमनः प्रक्षालितमुद्धृतफलकं रोहितं चर्मानडुहं दर्भमिथा बर्हिः कार्ष्मर्यमयान्परिधीनाश्ववालं प्रस्तरमैक्षवी विधृती स्वाक्तौ पञ्चरौमं ग्रुपरहणं हिरण्यमौदुम्बरीं राजासन्दीं तस्यै नाभिदघ्नाः पादा भवन्त्यरत्निमात्राणि शीर्षाण्यनूच्यानि[3] सा मौञ्जीभी रज्जुभिर्व्यूता भवत्येकसराभिर्मनाग्व्यधीयसीमिव मघाडासन्दीं यदि प्रवर्ग्यवान्सोमो भवत्यथाध्वर्युरपरराव आहृत्य संशास्ति निस्तनवते

---

१ एव om T.

२ This seems to be also the reading of Bh. and Keś, presented here and infra VI 14 init by all the MSS, also P, except F, which reads both times, and T which reads once : क्रयवलक्ष्या कर्णास्तुके ।

३ Thus all, also P Bh. and Keś, only B has : शीर्षाण्यनूच्यानि ; comp Baudh X. 12

दोहयतेति । प्रातरुदित आदित्ये विसृष्टायां वाच्यग्रेण शालां तिष्ठन्देवयजनमध्यवस्यति यदि पुरस्तादनध्यवसितं भवत्यथाहैहि यजमानेति । पूर्वया द्वारा शालां प्रपाद्य पश्चाꣳ स्तीर्णपः प्रणीयादित्यं चरुं प्रायणीयामिष्टिं निर्वपति । हविष्कृता वाचं विसृज्य गार्हपत्य आज्यं विलाप्योत्पूयाहवनीये स्रुवाहुतिं जुहोति कविर्यज्ञस्य वितनोति पन्थां नाकस्य पृष्ठे अधि रोचने दिवः । येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान्स्वाहेत्यथोपनिष्क्रम्य संप्रैषमाह सोमविक्रयिन्सोमꣳ शोधयोपरवाणां काले रोहिते चर्मण्यानडुहे उपामन्ते ब्राह्मणो दक्षिणत आस्तां ता गावो दूरं मा गुर्यासु सोमक्रयणी च सोमवाहनौ चानड्वाहौ[1] सोमवाहनमनः प्रक्षालयतोद्धृतफलकमिति । यथासंप्रैषं ते कुर्वन्त्यथैतेनैव यथेतमेत्याथैतं चरुꣳ श्रपयित्वाभिघार्योदक्समुदास्य पङ्क्रोत्वा प्रायणीयमासादयति । समानं कर्म प्रयाजेभ्यः । पञ्च प्रयाजानिष्ट्वोद्द्रुत्याक्रम्य सꣳस्रावेण पञ्चहलो ध्रुवामभिघार्य चरुमभिघारयत्युपस्तमन्ततो ऽथ चतुर आज्यस्य गृह्णान आह ॥ १० ॥

पथ्यायै स्वस्तय इत्युपाꣳश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह पथ्याꣳ स्वस्तिमित्युपाꣳशु यजेत्युच्चैर्वषट्कृते पूर्वार्धे जुहोत्यथ चतुर एवाज्यस्य गृह्णान आहाग्नय इत्युपाꣳश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याहाग्निमित्युपाꣳशु यजेत्युच्चैर्वषट्कृते दक्षिणार्धे जुहो-

---

१ च only read in HB, the Viv. and Keś do not cite the sampraiṣa to the end.

त्वथ चतुर एवाज्यस्य गृहीत्वाह सोमायेत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह सोममित्युपांशु यजेत्युच्चैर्वषट्कृते ऽपरार्धे जुहोत्यथ चतुर एवाज्यस्य गृहीत्वाह सवित्र इत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह सवितारमित्युपांशु यजेत्युच्चैर्वषट्कृत उत्तरार्धे जुहोत्यथोपस्तीर्य पूर्वार्धाच्चरोरवद्यत्याहादित्या इत्युपांश्वनुब्रूहीत्युच्चैः' पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्त्यत्याक्रम्याश्राव्याहादितिमित्युपांशु यजेत्युच्चैर्वषट्कृते मध्ये जुहोत्यथ वै भवत्यदितिमिद्वा मारुतीमृचमन्वाह मरुतो यद्ध वो दिव इत्यथोपस्तीर्योत्तरार्धाच्चरोरवद्यत्याहाग्नये स्विष्टकृते ऽनुब्रूहीत्यथ वै भवत्यष्टावत्तः स्विष्टकृद्द्वादशावत्तेडा' द्विरभिघारयति न प्रत्यनक्त्यथैतन्मेक्षणमधोऽधः स्रुचावग्नौ प्राप्योत्प्रयच्छत्याहातिवाल्पयतादेव मानुषहार्यैरित्यत्याक्रम्याश्राव्याहाग्निꣳ स्विष्टकृतं यजेति' वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यथैतन्मेक्षणमाहवनीये ऽतिवाह्याद्भिरभ्युक्ष्योत्तरतः सादयत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यत्युपह्वतायामिडायामग्नीध आदधाति षडवत्तं' प्राश्नन्ति' मार्जयन्ते' ॥ ११ ॥

अथ परिकर्मिणः सꣳस्रावस्त्वनुच्छिष्टीकुर्वन्त एतं चरुं व्युद्धृत्य प्राचीनायैतां चरुस्थालीꣳ सचामकायामेतन्मेक्षणमेतं वेदमेतद्बर्हिर्यत्तुष्यमुदयनीयाय निधत्तादिति' शंयवन्तः[1] प्राय-

1 Thus B, शंयवन्त. T (Grantha!), शंयुवंतः J, शंयुव. H, शंयवन्ता (प्रायणीया) F

णीयः संतिष्ठते । ऽथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथैतद्ध्रुवाज्यमाप्याय्य स्रुचि चतुर्गृहीतं गृहीत्वा सूत्रेण हिरण्यं निष्टर्क्यं बद्ध्वा दर्भनाड्यां प्रबध्य स्रुच्यवदधातीयं ते शुक्र तनूरिदं वर्चस्तया संभव भ्राजं गच्छेत्यथैतां दर्भनाडीꣳ स्रुग्दण्ड उपसंगृह्याहवनीये जुहोत्यन्वारब्धे यजमाने जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचति स्फ्यमुदपात्रं बर्हिर्हिरण्यमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानोऽनूची पत्नी स्थालीं पद्गुरणीमादाय पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्यजमानमाज्यमवेक्षयति शुक्रमस्यमृतमसि वैश्वदेवꣳ हविरित्यथैनꣳ हिरण्यमन्तर्धायादित्यमुदीक्षयति सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चितेत्यथैताꣳ सोमक्रयणीमग्रेण शालामुदीचीमतिविस्रयन्ति । तामनुमन्त्रयते चिदसि मनासीत्यान्तादनुवाकस्याथास्य दक्षिणस्येर्मस्य¹ सप्तमं पदं जोषयध्वमिति । तस्यै षट्पदान्यनुनिष्क्रामति ॥ १२ ॥

वस्व्यसि रुद्रास्यदितिरस्यादित्यासि शुक्रासि चन्द्रासीति । सप्तमं पदमभिगृह्णाति बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिराचिकेत्वित्यथैतस्मिन्पदे हिरण्यं निधाय संपरिस्तीर्याभिजुहोति पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडायाः पदे घृतवति स्वाहेत्यपोद्धृत्य हिरण्यꣳ स्फ्येन वा कृष्णविषाणया वा

---

१ Thus BJH, दक्षिणेर्मस्य T, F corrupt

पदं परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथैनत्स्फ्येनोपसंगृह्य याव-त्स्मूतं पद्गुरण्याꣳ संवपत्यस्मे रायो ऽस्मे राय इति त्रिस्त्वे राय इति यजमानाय प्रयच्छति। तोते राय इति यजमानः पत्न्या। अथ पत्नीꣳ सोमक्रयण्या समीक्षयति सं देवि देव्योर्वश्या पश्यस्वेत्यथ पत्नी यजमानमीक्षते त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशीत्यथ यजमानः सोम-क्रयणीमीक्षते माहꣳ रायस्पोषेण वियोषमित्यथैनद्धिरण्यमद्भिः[१] प्रक्षाल्य मध्यमायामङ्गुल्यौ बध्नीते। ऽथैनं[२] पदाश्रयमद्भिरुपसृज-त्युत्सृजन्ति[३] सोमक्रयणीं। नयन्ति पत्नीं। नि पदं दधति।
॥ १३ ॥ तृतीयः ॥

अथाग्रेण निधन्याचरति चन्द्रं च छागां च कृष्णवलक्षा-वूर्णास्तुके[४] उष्णीषं द्वे वाससी द्वे कृष्णाजिने सोमक्रयणीमित्यथ पृच्छति सोमविक्रयिन्क्रय्यस्ते सोमा३[५] इति। क्रय्य इतीतरः

---

१ Thus (with रमद्) all, also Keś.

२ Thus all, also, a copy of the Nivarana; Keś: अथैनं।

३ FH: उपसृज्य (or ज)तिनयंति सोम०; B: उपसृज्यत्युत्सृजंति सोम०; T: उपसृजत्युत्सृजन्तो सोम०; J: उपसृज्यति सोम०; P: उपसृजत्युत्सृजति; Keś has: अथैनं पदाश्रयं... उपसृजति। सोमक्रयणीमुत्सृजंति The Somaprayoga I O. 1202 has: पदं देवै श्रणो निनीयतिमदंति (thus!) सोमक्रयणीं। Are we to read: अतिनयन्ति instead of उत्सृजन्ति?

४ FT: ०वलक्षा वूर्णा०, the other MSS also P, ०क्षावू० comp. the note on page 166

५ The pluti sign is added in one of the MSS. only (H).

प्रत्याह ' सुविचितꣳ[1] राजानं पुरस्तात्प्रागभिरुपतिष्ठत एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्यथैतद्रोहितं चर्मानडुहमुत्तरलोमास्तीर्याथैतद्द्विगुणं[2] वासः प्राचीनदशमुत्तरार्धे चर्मण उपस्तृणात्यथ हिरण्यवता पाणिना राजानमभिमृशत्यꣳशुना ते अꣳशुः पृच्यतां परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतो ऽमात्यो ऽसि शुक्रस्ते ग्रह इत्यथैनमतिच्छन्दसर्चा मिमीत ' एकयैकयोत्सर्गं मिमीते ' ऽयातयाम्नियायातयाम्नियैवैनं मिमीते ' सर्वास्वङ्गुष्ठमुपनिगृह्णात्यभि त्यं देवꣳ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवसꣳ रत्नधामभि प्रियं मतिम् । ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा सुवरिति ' पञ्चकृत्वो यजुषा पञ्चकृत्वस्तूष्णीं ' दशकृत्वो मिमानो[3]ऽर्धवेलाꣳ राज्ञो मिमीते ' ऽयातिशिष्टꣳ राजानं प्रजाभ्यस्त्वेत्युपसमूहति ' समुच्चित्य वसनस्यान्तान्प्रदक्षिणमुष्णीषेणोपनह्यति प्राणाय त्वेति ' व्यानाय त्वेत्यनुसृजन्त्यथोपरिष्टाद्ग्रन्थ्यवकाशं कृत्वा यजमानमवेक्षयति प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्त्वित्यथैनं चर्मणि निदधाति ' तं ततः कौत्स आदत्ते ' ऽग्निरभ्युप्य

१ Thus HFP (comp. Padārthanirv p. 270, No 56); the other MSS. सवि॰ ।

२ The clause अथैतद्रोहित .. स्तीर्य om. PJTH. Keś. cites them

३ मिमाणो JT

चर्मेदूहत्यथोपोत्थाय पृच्छति सोमविक्रयिन्क्रय्यस्ते सोमा३[1] इति । क्रय्य इतीतरः प्रत्याह । मूजवता३[1] इति । मूजवतो हीतीतरः प्रत्याहाथैनं गवा पणते गवा ते क्रीणानीति । क्रीतः सोम इत्याह सोमविक्रयी वयाऽसि व्याचक्षेत्येषा ते सोमक्रयणी चन्द्रं ते छागा ते वस्त्रं त इत्यथैनऽ हिरण्येन पणते ॥ १४ ॥

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यवन्तमभिमातिषाहऽ शुक्रं ते शुक्रेण क्रीणामि चन्द्र चन्द्रेणामृतममृतेन संयत्ते[2] गोरित्युक्त्वास्मे चन्द्राणीति यजमानाय प्रयच्छत्यथैनं प्रतीचीन-ग्रीवयाजया पणते तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामीत्यस्मे ते बन्धुरिति यजमान-मीक्षते । मयि ते रायः श्रयन्तामित्यात्मानमथैनां प्रदक्षिण-मावर्त्याद्भिरभ्युक्ष्योदीचीमुत्सृजति[3] । सैषा क्रौत्सस्य भवत्यथ क्रौत्साद्राजानमादत्ते मित्रो न एहि सुमित्रधा इति । तं यजमानस्योरौ दक्षिण आसादयतीन्द्रस्योरुमाविश दक्षिणमुशन्नु-शन्तऽ स्योनः स्योनमित्यथैनं प्रत्यपोर्णुते यजमानो । ऽद्भिरभ्युक्ष्य क्रौत्साय वा परिकर्मिणे वोष्णीषं प्रयच्छत्यथ यजमानऽ शुक्रयोर्णास्तुकयाभ्यस्यत्यस्मे ज्योतिरित्यथैतां कृष्णामुपपश्यती-दमहऽ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीति । तया सोम-विक्रयिणं विध्यति सोमविक्रयिणि तम इत्यथ सोमक्रयणान-नुदिशति स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते

---

1. Here again only H and Keś. have the pluti sign.
2. Some MSS. have संयते the Mantramālā नयते ।
3. Most of the MSS. have चावत्स्य instead of चावर्त्य ।

धामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुराद्घच्छ्येनो भूत्वा परापत यजमानस्य नो गृहे देवैः सꣳस्कृतमिति । सदक्षिणꣳ राजानं परिवहन्त्यथैतावञ्जसोपसंक्रामतो ऽध्वर्युश्च यजमानश्च यजमानस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्तिगामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्वित्यथाग्रेण शालां तिष्ठन्नोह्यमानꣳ राजानं प्रतिमन्त्रयते नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसतेत्यथैतत्सोमवाहनमनो ऽग्रेण शालामुदग्रीवमुपस्थापयन्ति[1] । तदुपस्तभ्नोति वरुणस्य स्कम्भनमसीति । वरुणस्य स्कम्भसर्जनमसीति शम्यामुदूहत्युन्मुक्तो वरुणस्य पाश इति योक्त्रमथ वै भवति विमुक्तो ऽन्यो ऽनड्वान्भवत्यविमुक्तो ऽन्यो ऽथातिथ्यं गृह्णाति यज्ञस्य संतत्यै पत्न्यन्वारभत इति ब्राह्मणमथाहेहि यजमानेति । पूर्वया द्वारा शालां प्रपाद्य पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयातिथ्यं निर्वपत्यन्वारब्धायां पत्न्यामथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वा ॥ १६ ॥

अग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा सोमस्यातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वातिथेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वाग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा श्येनाय त्वा

1 Thus J, Kes, Padārthanirr.; the other MSS. °वपति।

सोमपते विष्णवे त्वा जुष्टं निर्वपामीति । पञ्चहस्तो यजुषा हविष्कृता वाचं विसृज्यैतयैवावृतोत्तरमग्न्यगारं विमुच्यायैते ब्राह्मणाश्चत्वार आसन्दीमाददते । ऽथ यजमानो मौञ्जाद्राजान-मादत्ते या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञमिति । पूर्व एवासन्द्या प्रतिपद्यन्ते । ऽन्वयाञ्चा यजमानो ऽन्वक्छूद्र[1] उदपाचेण । पूर्वया द्वारा शालां प्रपादयति गय-स्फानः प्रतरणः सुवीरो ऽवीरहा प्रचरा सोम दुर्यानित्यैता-मासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधति[2] । तस्यां कृष्णाजिनमास्तृणात्यदित्याः सदो ऽसीत्यदित्याः सद आसीदेति कृष्णाजिने राजानमथैनमुपतिष्ठते वरुणो ऽसि धृतव्रतो वारुण-मसीति । समुच्चित्य कृष्णाजिनस्यान्तानासन्द्या विषज्य बध्नी मयूखानि शंयोर्देवानाꣳ सख्यादित्यथापरावासन्दीपादावन्तरेण ब्राह्मणो ऽभिषिञ्चति शूद्रः प्रक्षालयति मा देवानामपम-श्छिकरमहीत्यथैनं वारुण्यर्चा परिचरति तत्त्वा यामि ब्रह्मणा वन्दमान इत्यथैनꣳ सꣳशास्ति मा राजानं चाहवनीयं चान्त-रेण कश्चन संचारीन्मैनꣳ सायुधो मा सदण्डो मा सच्छत्रो मा सोष्णीषी मा साधस्याधो ऽनुप्रपादीदित्यथास्मै मधुपर्कं च गां च प्राहृतामध्वर्युर्विशास्ति । ॥ १७ ॥ चतुर्थः ॥

अथ पत्न्येतमातिथ्यं वैष्णवं नवकपालं । तेन सह सदन्तीर-धिश्रयति । शिल्पवदेतदिभावर्हिरातिथ्यस्य भवति । कार्श्मर्यमयैः

१ शूद्र F, शद्र H; शूद्र PBJ, शुद्र P ( Grantha ? )

२ Thus only P, comp Keśava ( ब्राह्मणा एव निदधति ); निदधाति the other MSS

परिधिभिराश्ववालेन प्रस्तरेणैक्षवीभ्यां विधृतीभ्यां तेन शिल्पवत्सं पुरोडाशस्य ग्राहयित्वा श्रपयित्वाभिवास्य[1] प्राङेत्याग्नेयेभ्यो निनीय स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थं पूर्वं परिग्राहं परिगृह्णाति करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीत्योपनतासु प्रोक्षणीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचश्च संमार्ष्ट्याज्येनोदेत्याज्यं[2] च प्रोक्षणीश्चोत्पूय प्रसिद्धं चतुर्गृहीतानि वा पञ्चगृहीतानि वाज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति वेदिं प्रोक्षति बर्हिः प्रोक्षति बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णाति पञ्चविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्यैक्षवी विधृती तिरश्ची सादयति विधृत्योराश्ववालं प्रस्तरं प्रस्तरे जुहूं बर्हिषीतरे एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्याग्नेयं पुरोडाशमुपस्तीर्णाभिघारितमुद्वास्य च तुषैश्चातिथ्यमासादयत्यं च संभारान्व्याचष्टे ऽथ निर्मन्थ्यमाहृता निर्मन्थ्येन चरति प्रहृत्याभिहुत्येध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं न समिधं परिधिमनक्ति वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु

१ श्रपयित्वा om. HTB, read by PJF
२ उदेह्याज्य BJ, उदेत्याज्य the other MSS also P

स्रुवेणाघारमाघारयति । संमृष्टे स्रुग्भ्यामुत्तरमथासंस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य जुह्वा ध्रुवाꣳ समज्य सादयित्वा स्रुचौ प्रवरं प्रवृणीते । प्रसिद्धꣳ होतारं वृणीते । सीदति होता । प्रसवमाकाङ्क्षति । प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति । वषट्कृते जुहोति यज यजेति । चतुर्थं यत्समवैतदौपभृतमाज्यꣳ सर्वं एव जुह्वाꣳ समानयते । पञ्च प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य स्रुक्स्रावेण ध्रुवामभिघार्य पुरोडाशमभिघारयति नोपभृतमथाग्नये सोमायेत्याज्यभागाभ्यां चरत्युपांशु हविषा चरति विष्णवेऽनुब्रूहि[१] विष्णुं यजेत्यथ स्विष्टकृता चरतीडान्त आतिथ्यः संतिष्ठते । ऽथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथैतद्ध्रुवाज्यमाप्याय्य कꣳसं वा चमसं वा याचति । तमन्तर्वेदि निधाय तस्मिन्नेतत्तानूनप्त्रं गृह्णाति ॥ १८ ॥

आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शाक्वराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णामीति । स यावन्त ऋत्विजस्त एनत्समवमृशन्त्यनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यमिति । यजमानमतिवाचयत्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषꣳ सुविते मा धा इति । स यावन्त ऋत्विजस्तेषूपह्वमिष्ट्वा यजमान एव चिरवशिष्यति प्रजापतौ त्वा मनसि जुहोमीत्यथैनदद्भिरभ्युन्नीयोत्तरतः सिञ्चत्यथाहाग्नीन्मदन्त्यापा३[२] इति । मदन्ति देवीरमृता ऋतावृध इति । ताभिराद्रवेत्यथ

१ THF ins. इति ।　　२ only H has the pluti sign.

मदन्तीरुपस्पृश्योत्थाय विस्रस्य हिरण्यमवधाय राजानमाप्याययन्त्यꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति । यजमानमतिवाचयत्याप्यायय सखीन्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेत्यथाप उपस्पृश्य यथायतनमुपविशन्त्यथाध्वर्युर्वाजवतीभ्याꣳ स्रुचौ व्यूहति । विधृतीभ्यां प्रस्तरꣳ समुत्सुप्याप्रतिशृणꣳस्त्रेधानक्ति । न प्रस्तरायाश्रावयति । न बर्हिरनुप्रहरति । तं दक्षिणार्धे वेद्यै निधाय तस्मिन्दक्षिणोत्तरिणी निह्नुवत एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति । परिधिषु शकलानुपसंगृह्णाति प्रस्तरे बर्हिर्यावन्मात्रꣳ सन्धाय विपर्याहवनीये ऽतिवाल्याङ्गिरभ्युद्ध्योत्तरतः सादयत्यथ यजमानमवान्तरदीक्षामुपनयत्यग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानीत्यथैनꣳ सꣳशास्ति संतरां मेखलाꣳ समायच्छस्व संतरां मुष्टी कुरुष्व तप्तव्रत एधि मदन्तीभिर्मार्जयस्वोत्पूर्वं[1] व्रतनꣳ सृज या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनातो ऽधि व्रतयेति । स एवमेवैतत्सर्वं करोति । ॥ १९ ॥

अथ प्रवर्ग्यस्यावृता प्रवर्ग्येण चरत्यथ स्फ्यमाददान आग्नीध्रान्मदन्तीरधिश्रय हविरधिश्रयैह्युपसीदेत्यैतास्वेव मदन्तीषु भूयसीरप आनयत्याज्यमधिश्रयति । तद्धविरथैतस्यैव

1 Thus Keś., Mantramālā, पूर्वंमनवं the other MSS also P.

बर्हिष स्तीर्णस्य पर्यवलोपङ् साम्यजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं। चिर्यजुषा तूष्णीं चतुर्थं। पूर्वं परियाहं परिस्तृणाति। करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति। यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परियाहं परिगृह्य योयुपित्वा तिर्यञ्चङ् स्फ्यङ् स्तब्ध्वा संप्रैषमाह प्रदत्तीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचौ च संमृड्ढि हविषोदेहीत्याहृतास्त प्रदत्तीपूर्दस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचौ च संमार्ष्टि। हविषोदेति। हविश्च प्रदत्तीश्चोत्पूयाष्टौ हुत्वो शुक्रां गृह्णीते। चतुरुपभृत्याज्यस्थाल्यां तृतीयामुत्प्रदाय प्रदत्तीभिरुपोत्तिष्ठतीध्मं प्रोक्षति। वेदिं प्रोक्षति। बर्हिः प्रोक्षति। बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णात्येकविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य काश्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्येवौ विधृती तिरश्चौ सादयति। विधृत्योराश्ववालं प्रस्तरं। प्रस्तरे जुहूं। बर्हिषीतरे। एते असदतामिति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य जघनेन गार्हपत्यमुपविश्य देवपत्नीर्व्याचष्टे। ऽथैतेनैव यथेतमेत्याथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मङ् सकृदा चिर्वा। न समिधं परिशिनष्टि। वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति। संमृष्टे न स्रुग्भ्यामुत्तरमंय प्रवरं प्रवृणीते। ऽथाश्रावयत्यो श्रावयास्तु श्रौषट् सीद होतरित्येतावान्प्रवरः। सीदति होता। प्रसवमाकाङ्क्षति। प्रसूतः स्रुचावाददान आह ॥ २० ॥

अग्नय इत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याहाग्निमित्युपांशु यजेत्युच्चैर्वषट्कृते पूर्वार्धे ऽर्धवेलां[1] जुहोत्यथाचैव तिष्ठन्नाह सोमायेत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याह सोममित्युपांशु यजेत्युच्चैर्वषट्कृते मध्ये जुहोत्यथ समानयमान[2] आह विष्णव इत्युपांश्वनुब्रूहीत्युच्चैराश्राव्याह विष्णुमित्युपांशु यजेत्युच्चैर्वषट्कृते पश्चात्सर्वं जुहोत्यथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वाथाहाग्नीन्मदन्त्यापा३ इति । मदन्ति देवीरमृता ऋतावृध इति । ताभिराद्रवेत्यथ मदन्तीरुपस्पृश्योपोत्थाय विस्रस्य हिरण्यमवधाय राजानमाप्याययन्त्यंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति । यजमानमतिवाचयत्याप्यायय सखीन्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेत्यथाप उपस्पृश्य यथायतनमुपविशन्त्यथाध्वर्युर्वाजवतीभ्यां स्रुचौ व्यूहति । विधृतीभ्यां प्रस्तरं समुमुष्याप्रतिशृष्टं त्रेधानक्ति । न प्रस्तरायाश्रावयति । न बर्हिरनुप्रहरति । तं दक्षिणार्धे वेदेर्निधाय तस्मिन्दक्षिणोत्तरिणो निह्नुवत एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति । सव्ये पाणौ प्रस्तरं समादृत्याज्यस्थाल्याः स्रुवेणोपहत्य प्रथमामुपसदं जुहोति या ते अग्ने ऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहेति । परिधिषु प्रकाशानुपसंस्पृष्टानि प्रस्तरे

1 Thus HTF, ॰र्धवेलाया BJ

2 Thus J only, समावपमान HF; समावयमान B Ked.; समायमान T.

बर्हिर्यावन्मात्रꣳ स्यन्दाया विपथ्याहवनीये ऽतिवाह्याह्रिरभ्युद्योत्तरतः सादयत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय चित्तनव्रतं[1] प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां। चित्तनव्रतं प्रयच्छत्यथापराह्ण आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति। तयोः समानी पर्यैतावदेव नाना। सव्योत्तरिणी निह्नुवते। ऽथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय चित्तनव्रतं दोहयतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां। चित्तनव्रतं दोहयति। तदर्धरात्रे प्रयच्छति। ॥ २१ ॥ पञ्चमः ॥

अथाध्वर्युरपररात्र आहुत्य सꣳग्रास्ति द्वित्तनव्रतं दोहयतेति[2]। प्रातरुदित आदित्ये विसृष्टायां वाचि मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति। रजाग्रयामच जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्वित्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां। द्वित्तनव्रतं प्रयच्छति। स आहवनीयादेवाग्रे षट् प्राचः प्रक्रमान्प्रक्रामति। तच्छङ्कुं निहन्ति। स शालामुखीयः शङ्कुः। शालामुखीयाच्छङ्कोः षट्त्रिंशत्प्राचः प्रक्रमान्प्रक्रामति। तच्छङ्कुं निहन्ति। स यूपावटीयः शङ्कुः। शालामुखीयाच्छङ्कोः पञ्चदश दक्षिणा प्रक्रमान्प्रक्रामति पञ्चदशोदीचस्तच्छङ्कू निहन्ति। ते श्रोणी। यूपावटीयाच्छङ्कोर्द्वादश दक्षिणा प्रक्रमान्प्रक्रामति द्वादशोदीचस्तच्छङ्कू निहन्ति।

---

1 Here and elsewhere F and the Mantramālā write चित्तनं व्रतं, द्वित्तनं व्रतं etc.; all the other MSS and Keś. write *one* word

2 T ins. अथ।

तावन्मात्रयैनामन्यया मानेन प्रमाय समन्तँ स्पन्द्यया परितनोति । पृष्ठ्यामातनोति । यूपावटीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि क्षुद्रपदानि प्रक्रामति । तच्छङ्कुं निहन्ति । स मध्यम औत्तरवेदिकः शङ्कुर्मध्यमादौत्तरवेदिकाच्छङ्कोः पञ्च दक्षिणा क्षुद्रपदानि प्रक्रामति पञ्चोदञ्चि । तच्छङ्कू निहन्ति । ते श्रोणी । यूपावटीयाच्छङ्कोश्चत्वारि दक्षिणा क्षुद्रपदानि प्रक्रामति चत्वार्युदञ्चि । तच्छङ्कू निहन्ति । तावन्मात्रयैनामन्यया मानेन प्रमाय समन्तँ स्पन्द्यया परितनोति । पृष्ठ्यामातनोति[1] । मध्यमादौत्तरवेदिकाच्छङ्कोरनुस्पन्द्यँ षट् प्रतीचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं । तत्पद्यं निदधाति । स उपरवाणां काशो । ऽथ महावेद्या उत्तरादंसीयाच्छङ्कोर्विघन्तेन द्वादश प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं त्रयोदशं । तदाग्नीध्र उपसीदति । स उत्करस्य काशो । ऽथोपरवाणां कालात्तामयजुर्हरति । ॥ २२ ॥

इदमेव प्रसिद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपतीमां नराः कृणुत वेदिमेत्य वसुमतीँ रुद्रवतीमादित्यवतीं विश्वदेव्यावतीं वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येदित्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथार्धेन प्राणां तिष्ठन्संप्रैषमाह वेदिकारा वेदिं कल्पयत प्र स्थलानि भिन्दत प्रति निम्नान्पूरयत किंशारूणि निरस्यत प्राचीमुदीचीं प्रवणां निस्तिष्ठतेति । यथासंप्रैषं ते कुर्वन्त्यथ महावेद्या उत्तरादंसीयाच्छङ्कोर्विघन्तेन

[1] BJT om. these two words.

घौष्मतीचः प्रक्रमात्प्रक्रामत्युदङ्ङं चतुर्थं। तथात्वायास्यावृता चात्वालं परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरमाभि- मुखाधाय्यैनां प्रतिष्ठाप्यापराह्णिकीभ्यां¹ प्रवर्ग्योपसद्भ्यां प्रचर- त्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं दोहयतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां। द्विस्तनव्रतं दोहयति। तदर्धरात्रे प्रयच्छति। ॥ २३ ॥ षष्ठः ॥

अथाध्वर्युरपररात्र आहुत्य संभाष्यैकस्तनव्रतं दोहयतेति। प्रातरुदित आदित्ये विसृष्टायां वाच्युत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति। इरामयामच जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयार्धस्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्म- ण्यामर्धस्तनव्रतं प्रयच्छत्यथ तदानीमेवापराह्णिकौ² प्रवर्ग्योपसदौ समस्योपनिष्क्रम्य³ संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रति- प्रस्थातः प्रवर्ग्यस्यावृता प्रवर्ग्यꣳ संमादयोद्वासनायेति। चैवैतत्पदं कुर्वन्ति। गार्हपत्ये तृतीयमुपयमनीषु तृतीयं नि तृतीयं दधत्यथ प्रवर्ग्यस्यावृता प्रवर्ग्यमुद्वासयत्यग्नेरावृताग्निं प्रणयत्यग्नि- वत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादयेत्येतावान्प्रैषो। उभे- वैतद्बर्हिरनुसन्धायꣳ लुनाति सकृदेवैतदेवेध्माबर्हिरग्नीषोमीयाय पशवे परिग्रयीतेत्येक आहुरथास्यैते अनमौ सचालिते सपत्ने

---

१ After °त्वाद B ins चषाल।

२ °पराह्णिके BH Keś

३ Thus JF, Bh., Keś., समस्यात्यथोप° the other MSS.

तावꣳमावर्यैनामक्ष्णया मानेन प्रमाय समन्तꣳ स्पन्द्यया परितनोति। पृष्ठ्यामातनोति। यूपावटीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि क्षुद्रपदानि प्रक्रामति। तच्छङ्कुं निहन्ति। स मध्यम औत्तरवेदिकः शङ्कुर्मध्यमादौत्तरवेदिकाच्छङ्कोः पञ्च दक्षिणा क्षुद्रपदानि प्रक्रामति पञ्चोदञ्चि। तच्छङ्कू निहन्ति। ते श्रोणी। यूपावटीयाच्छङ्कोश्चत्वारि दक्षिणा क्षुद्रपदानि प्रक्रामति चत्वार्युदञ्चि। तच्छङ्कू निहन्ति। तावꣳमावर्यैनामक्ष्णया मानेन प्रमाय समन्तꣳ स्पन्द्यया परितनोति। पृष्ठ्यामातनोति[1]। मध्यमादौत्तरवेदिकाच्छङ्कोरनुस्पन्द्यꣳ षट् प्रतीचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं। तत्स्फ्यं निदधाति। स उपरवाणां कालो। ऽथ महावेद्या उत्तराद्ꣳसीयाच्छङ्कोर्विधन्तेन द्वादश प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं त्रयोदशं। तदाग्नीध्र उपसीदति। स उत्करस्य कालो। ऽथोपरवाणां कालात्स्तम्बयजुर्हरति। ॥ २२ ॥

इदमेव प्रसिद्धं पौरोडाशिकं। स्फियंशुया तूष्णीं चतुर्थं। पूर्वं परिग्राहं परिगृह्णाति। करणं जपतीमां नराः कृणुत वेदिमेत्य वसुमतीꣳ रुद्रवतीमादित्यवतीं विश्वदेव्यावतीं वर्षन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येदिति। द्वन्द्वमुद्धतादाग्नीध्रस्त्रिर्हरति। यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण शालां तिष्ठन्संप्रैषमाह वेदिकारा वेदिं कल्पयत प्र स्थलानि भिन्दत प्रति निम्नान्पूरयत किꣳशाखानि निरस्यत प्राचीमुदीचीं प्रवणां निस्तिष्ठतेति। यथासंप्रैषं ते कुर्वन्त्यथ महावेद्या उत्तराद्ꣳसीयाच्छङ्कोर्विधन्तेन

---

[1] DJT om. these two words.

वीन्प्रतीषः प्रक्रमान्प्रक्रामत्युदञ्चं चतुर्थं । तच्चात्वालस्याहृता चात्वालं परिलिखत्युत्तरवेदेराहृतोत्तरवेदिं निवपत्युत्तरमाभिमुत्साद्याथैनां प्रतिष्ठाप्यापराह्णिकीभ्यां[1] प्रवर्ग्योपसद्भ्यां प्रचरत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं दोहयतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां । द्विस्तनव्रतं दोहयति । तदर्धरात्रे प्रयच्छति । ॥ २३ ॥ षष्ठः ॥

अथाध्वर्युरपररात्र आद्रुत्य संप्रेष्यत्येकस्तनव्रतं दोहयतेति । प्रातरुदित आदित्ये विसृष्टायां वाच्युत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । हरामयामच जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयार्धस्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यामर्धस्तनव्रतं प्रयच्छत्यथ तदानीमेवापराह्णिकौ[2] प्रवर्ग्योपसदौ समस्योपनिष्क्रम्य[3] संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रतिप्रस्थातः प्रवर्ग्यस्याहृता प्रवर्ग्यꣳ संमादयोद्वासनायेति । येधैतत्पदं कुर्वन्ति । गार्हपत्ये तृतीयमुपयमनीषु तृतीयं नि तृतीयं दधत्यथ प्रवर्ग्यस्याहृता प्रवर्ग्यमुद्वासयत्यग्नेराहृताग्निं प्रणयत्यग्निवदुत्तरं परिधाहं परिगृह्य योयुपिता तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादयेत्येतावान्संप्रैषो । उभेवैतद्बर्हिरनुसन्धाय स्तृणाति मरुद्देवं तदेवेध्माबर्हिरग्नीषोमीयाय पशवे परिशयीतेत्येक आहुरयाश्रैते अनमौ प्रचालिते संपन्ने

---

१ After ॰च्चाय B ins चपराह।

२ ॰पराह्णिके BH Keś.

३ Thus JF, Bh., Keś., समस्यत्यथोप॰ the other MSS.

योऽग्यक्षते अभितः शालां तिष्ठतस्तयोर्दक्षिणं वर्षीय उत्तरꣳ ह्रसीय' उद्धृतफलकं दक्षिणमनुद्धृतफलकमुत्तरं' तयोर्यद्वक्षे बद्धं तदवस्यत्यथैने अन्तर्वेद्यभ्यावर्तयन्त्यग्रेण[1] शालामरत्निमात्रमभित स्यन्ताꣳ स्थापयित्वाथैने प्रोक्षति वैष्णवी विष्णवे शुन्धेयामित्यथाहैहि यजमानेति' पूर्वया द्वारा शालां प्रपाद्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये सावित्रं जुहोत्यन्वारब्धे यजमाने युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचत्याज्यस्थालीꣳ सस्रुवाꣳ स्फ्यमुदपात्रं बर्हिर्हिरण्यमित्येतत्समादायाहैहि यजमानेत्यन्वग्यजमानोऽनूची पत्नी पदहतीयमादाय पूर्वया द्वारोपनिष्क्रम्य दक्षिणस्य हविर्धानस्य पश्चादक्षमुपस्थाप्य दक्षिणस्यां वर्तन्याꣳ स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्याभिजुहोतीदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहेत्यथैतेषां पदपाꣳसूनामर्धान्पत्न्यञ्जलावावपत्यथैनाꣳस्त्रावेणाभिघारयति' सा प्राचोत्तानेन पाणिना दक्षिणमक्षधुरमुपानक्त्या नो वीरो जायतां कर्मण्यो यꣳ सर्वे ऽनुजीवाम यो बहूनामसद्वशीत्यपरं चतुर्गृहीतं गृहीत्वोत्तरस्य हविर्धानस्य पश्चादक्षमुपस्थाप्योत्तरस्यां वर्तन्याꣳ स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय

१ Thus TF, comp. xv. 22 (व्यावर्त०); the other MSS. अभ्यावर्तयंति।

संपरिस्तीर्याभिमुखोतौरावतौ[1] धेनुमतौ हि भूतम् सूयवसिनी मनवे यशस्ये। व्यस्कभ्नाद्रोदसी विष्णुरेते दधार पृथिवी-मभितो मयूखैः स्वाहेत्यथैतान्पदपांसूनुपवेश एव पल्यङ्गा-वावपत्यथैनान्त्सुवस्थावेणाभिघारयति स प्राचीनानेनैव पाणि-नोत्तरमवधुरमुपानक्ति समान उपाञ्जनो ऽथैतानि शस्त्राणि प्रतिप्रस्थाता उत्प्रयच्छति नयन्ति पत्नीं कयन्ति होतारमथैने संपरिगृह्य प्रैषमाह ॥ २४ ॥

प्रवर्त्यमानाभ्यामनुब्रूहीति त्रिरुक्तायां प्रव[illegible]तरेर्हि प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा ह्रुं स खर्नेय यचव उत्सर्जति सुवाग्देव दुर्यां आवदेत्येव यथा चोर्णि हावक्षमोपसंक्रामतो ऽध्वर्युश्च प्रतिप्रस्थाता चोत्तरेण हविर्धाने परीत्य पूर्वामुपानीत्य[2] मध्यमादौत्तरवेदिकाच्छद्धो-रन्तुसन्धं चौदग्रतीचः प्रक्रमान्प्रक्रामतस्तदेनयोर्नभ्यस्थयोर्युके रमयतो ऽत्र रमेथां वर्ष्मन्पृथिव्या इत्यथ दिवो वा विष्णवुत वा पृथिव्या इत्याशीःपदयर्चाध्वर्युर्दक्षिणस्य[3] हविर्धानस्य दक्षि-णतो मेथीं निहन्त्यथैनाम् सन्द्राथा सूपनिबद्धामुपनिबध्नाति विष्णोर्नु कं वीर्याणि प्रवोचमित्येवमेव प्रतिप्रस्थातोत्तरस्य

1 Thus BTJ, ॰स्तीर्यैवाभि॰ H, ॰स्तीर्यैवाभि॰ F

2 Thus BH; पूर्वामु॰ JF; T corrupt

3 Thus B; ॰चाशीर्वदय॰ HF; ॰चाशीर्वदय॰ J; ॰चाशिर्वदय॰ T (Grantha); ॰चाशीर्पदयर्चा also Hir. VII. 17, comp. Garbe in his ed. of past, Vol II, p 311

हविर्धानस्योत्तरतो मेथीं निहन्त्यथैनाꣳ स्यन्द्या सूपनिबद्धामुपनिबध्नात्येतेनैव मन्त्रेणाथाध्वर्युर्दक्षिणस्य[1] हविर्धानस्य कुबुकात्प्राञ्चमरत्निं मीत्वा लोकं[2] न्यस्य गर्तं खानयत्यथ दक्षिणायुगान्तात्प्राञ्चं बाहुं मीत्वा लोकं[2] न्यस्य गर्तं खानयति। तावुभावुत्तरेणान्यं गर्तं खानयत्येवमेव प्रतिप्रस्थातोत्तरतस्त्रीन्गर्तान्खानयत्येवमपरतस्तेषु प्राचीनकर्णाः स्थूणा उच्छ्रयन्ति। तासु द्वौ वꣳशौ प्रोहन्त्यथास्यन्ति पुरस्ताद्रराटीं विष्णो रराटमसीति। विष्णोः पृष्ठमसीति मध्यमं छदिर्वि दधाति। विष्णो श्नप्त्रे[3] स्थ इति ये अभितो भवतो। दक्षिणस्याꣳसेत्कारन्तस्य परिश्रयन्ति। प्राचीं च प्रतीचीं च दार्वाहौ संसूव्याꣳ य दक्षिणे दार्वाहौ कुशहस्तमुपनिगृह्य दर्भेणं प्रमानेत्यंन्वस्यं ध्रुवो विष्णोः स्यूरसीति। विष्णोर्ध्रुवमसीति ग्रन्थिं करोति[4]। तं तदानीमेव विस्रस्याहाकुर्वन्तो ग्रन्थीन्हस्तकौशलेनिस्तिष्ठतेत्दैवमेवोत्तरं दार्वाङ्गमेवमपरे[5] दार्वाङ्ग निस्तिष्ठत्यथैनदभिमृशति[6] वैष्णवमसि विष्णवे त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य

---

१ अध्वर्युर् om. JHF.

२ Thus all.

३ Thus BHF, Keś. (pr. m.); श्नप्त्रे T, Prayogamālā; the visarga of विष्णोः is omitted by all the MSS. exc H

४ ग्रन्थीकरोति B.

५ अपरे BTHJP; अपरो F.

६ Thus (॰ष्ठत्य॰ or ॰ष्ठंत्य॰) all, except B, which has निस्तिष्ठतो (comp. Keś. : कुर्वन्तः) — अथैनद॰ HF; अथैनम॰ BTJP (Bh, Keś. : अथैनदविर्धानमभिमृशति।)।

शालामुखीयाच्छङ्कोरनुसन्धाय षट् प्राचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं। तदभ्रिं निदधाति। स औदुम्बर्यै काले। औदुम्बर्यै कालादभ्रिमादत्ते ॥ २५ ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति। तयौदुम्बर्या अवटं[1] परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथोद्गातारमाहोद्गातरेहीममौदुम्बर्या अवटं[2] खन प्राक् पुरीषमुदुपतादिति। तꣳ स खनति वा खानयति वा। सो ऽत एव सदो विमिमीते। यथा त्रीणि छदींꣳषि तिर्यञ्च्येवं प्रकृप्तो। यथा त्रीणि छदींꣳष्यन्वञ्च्येवमुदक्प्रवो। ऽपि वा यथा द्वौ भागावुदक् सन्धायै स्यातामेको दक्षिणत इति। तस्य त्रिश्रेणिगर्तान्खानयति[3]। सो ऽत एव प्राङ् द्रुत्वा[4] दक्षिणस्य हविर्धानस्य पुरो ऽक्षमुपरवान्विमिमीते प्रादेशमुखान्प्रादेशान्तरालानथोन्नेतारमाहोन्नेतरेहीमानुपरवा-

---

1 Thus only B; all the other MSS., here and infra, l 9, औदुम्बर्यावटं, the second time also the Mantramālā

2 Comp. note 1

3 Uncertain reading त्रिश्रेणी॰ B; चीर्श्रेषि॰ H; चीचीश्रेषि॰ T, चीश्रि॰ JF; त्रिश्रेषि॰ P; comp. Padārthanirv p. 310 ( No 174. ). Keśavasvāmin glosses तस्य सदस. गर्तपङ्क्तीस्त्रिस्रः खानयति। Read: त्रीन्श्रेषि॰ ?

4 BH ins. अध्वर्युर; Keś. has not read the word, as he glosses · सो ऽध्वर्युः सदसः प्राग्गत्वा etc.

खन प्रादेशमुखान्प्रादेशान्तरालाद्ध्वाङ्क्षमात्रानवाचो ऽसंभिन्दन्परिष्टादधस्तात्संतृण्णानिति तांश्च खनति वा खानयति वाथैषां पुरीषं दक्षिणस्य हविर्धानस्यापरेणोपस्तम्भनं निवपति तं चतुरश्रं खरं करोत्यथैनꣳ सिकताभिराभाग्निनं करोत्यथोपरवाणां कात्स्न्यादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति तया यूपावटं परिलिखति यथान्तर्वेद्यर्धꣳ स्याद्बहिर्वेद्यर्धं परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथाग्नीध्रमाहाग्नीदेहीमं यूपावटं खनोपरसंमितं प्राक्पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमतिखनतादिति तꣳ स खनति वा खानयति वा यावदेवाचाध्वर्युरेष्टति तावदेव प्रतिप्रस्थातौदुम्बरीꣳ स्थूणां यजमानेन संमायाधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य याचति यवमतीः प्रोक्षणीर्बर्हिर्हंस्तमाज्यस्थालीꣳ स्रुवं मैत्रावरुणदण्डꣳ हिरण्यमुदपात्रमित्येतत्समादायाह्येहि यजमानेत्यौदुम्बर्येषा स्थूणा प्रचालिता प्रपन्ना प्रागवटादुपशेते तां परस्तादर्वाचीं[1] प्रोक्षति ॥ २६ ॥

दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेत्यवटे ऽपो ऽवनयति शुन्धतां लोकः पितृषदन इति यवान्प्रस्कन्दयति यवो ऽसि यवयास्मद्द्वेषो यवयारातीरिति बर्हिर्हंस्तं व्यतिषज्यावस्तृणाति

१ Thus only Keś, T नामपरस्ताद् (Grantha !), the other MSS. उरस्ताद् ।

पितॄणाꣳ सदनमसीत्यथैनद्धिरण्यमन्तर्धाय[1] स्रुवाहुत्याभिजुहोति पितृभ्यः स्वाहेत्यथैनामुच्छ्रयत्युद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीं दृꣳहेत्यथैनां प्राचीनकर्णां मिनोति द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणेत्यथैनां प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति । मैत्रावरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रꣳ दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेत्यथैन्यूनमनतिरिक्तं परिन्यस्योदपात्रमुपनिनीयाथास्यै विशाखे हिरण्यं निधाय स्रुवाहुत्याभिजुहोति घृतेन द्यावापृथिवी आपृणेथाꣳ स्वाहेत्यान्तमन्ववस्रावयत्यान्तमेव यजमानं तेजसानक्तीति ब्राह्मणमथैनामुद्गातृभ्यः प्राहुस्तांस्यां तचेष्टन्ति यत्ते विदुरेतस्या उच्छ्रयणमनु प्राचीनकर्णां स्थूणा उच्छ्रयन्ति । तासूदीचो वꣳशान्प्रोह्य मध्यमं छदिरिन्द्रस्य सदोऽसीति । विश्वजनस्य छायेति ये अभितो भवतो । नवच्छदि तेजस्कामस्य मिनुयादिति । त्रीणित्रीण्येव सर्वाणि भवन्ति[2] । दक्षिणान्युत्तराणि करोति । स दक्षिणानि[3] दक्षिणान्येवोत्तराणि करोत्यन्तर्वर्तान्करोति प्राहृत्या इति । सन्धिषु तृणशतान्प्रत्यस्यति[4] । ते ऽन्तर्वर्ताः । अथैनत्परिश्रयन्ति परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो

1 अथैन॰ all, also Ke4, except B. which has अथैतद॰, but comp. page 170,11.

2 Thus BT; करोति the other MSS also P

3 Thus BHJP; दक्षिणा TF.

4 प्रत्यस्यति or ॰त्यस्यति BJTH, प्रत्यस्यन्ति FP

वषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशꣳसाननुप्रकम्पयन्त्येतत्पात्रं नाराशꣳसा अन्वायन्त्यनुसवनभक्षो विश्वैर्देवैः पीतस्येति । होता चैवाध्वर्युश्चैतत्पात्रꣳ संभक्षयतो नराशꣳसपीतेन[१] नाराशꣳसा-नराशꣳसपीतस्य[१] सोम देव ते मतिविदः प्रातःसवनस्य गायत्र-च्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चम-सान्सर्वभक्षा मार्जयन्ते । ऽथाह प्रतिप्रस्थातरिमे चर्तुपात्रे एतच्च शुक्रपात्रं मार्जालीये मार्जयित्वा पात्रेष्वपिसृजेति । स तथा करोत्यथ प्राङायन्नाह ॥ १७ ॥

मैत्रावरुणस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति । मैत्रावरुणचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्त्समुन्नी-योत्तरवेद्याꣳ संसादयन्त्यथादत्त उक्थ्यस्थाल्या औपशयं पात्रं । तस्मिन्नेतस्य राज्ञस्तृतीयवेलां गृह्णाति य उक्थ्यस्थाल्यां भवत्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं[२] यज्ञस्यायुषे मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामीति । पुनर्हविर-सीत्युक्थ्यस्थालीं प्रत्यभिमृशति । परिमृज्य सादयत्येष ते योनिर्मित्रावरुणाभ्यां त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । मैत्रावरुणा-

---

[१] The various readings as supra, page 229,3, HJ om. the bhakṣaṇamantra

[२] Here and infra the MSS have sometimes उक्थेभ्य and उक्थायुवं ।

यैषोत्तमेति प्राङ्मैत्रावरुणस्य कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते मैत्रावरुणः । प्रत्याह्वयते ऽध्वर्युः । गृह्णाति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं यज्ञमनूद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसाञ्जुह्वत्यथ प्रदक्षिणमावृत्य मैत्रावरुणस्य चमसे ग्रहस्य संस्रावमवनयति ऋतं त्वा ऋते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वान्नैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षो मित्रावरुणाभ्यां पीतस्येति । मैत्रावरुणचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽथाह प्रतिप्रस्थातर्यद्धौ ते प्रचरेति । तच्छ्रुत्वा प्रतिप्रस्थाता प्राङायन्नाह ॥ १८ ॥

ब्राह्मणाच्छंसिनश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति । ब्राह्मणाच्छंसिनश्चमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्त्समुन्नीयोत्तरवेद्यां सादयन्त्यथादत्त उक्थ्यस्थाल्या औपशयं पात्रं । तस्मिन्नेतस्य राज्ञो ऽर्धवेलां गृह्णाति य उक्थ्यस्थाल्यां भवत्युपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्राय त्वा जुष्टं गृह्णामीति । पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । ब्राह्मणाच्छंसिन

एषोतमेति प्राङ्ब्राह्मणाच्छंसिनः कालात्पराङावर्तते प्रतिप्रस्थाताध्येनमाह्वयते ब्राह्मणाच्छंसी ' प्रत्याह्वयते प्रतिप्रस्थाता ' शंसति ' प्रतिगृणाति ' प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योपच्छृत एतं यद्दमनूपच्छन्ते चमसानेयाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति ' वषट्कृतानुवषट्कृते द्विर्जुहोति ' तथैव द्विर्द्विः सर्वांश्चमसानाजुह्वत्यथ प्रदक्षिणमावृत्य ब्राह्मणाच्छंसिनश्चमसे ग्रहस्य संस्रावमवनयति ऊतं त्वा ऊते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वा चैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यस्य आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति ' ब्राह्मणाच्छंसिनश्चमसमेवैते त्रयः समुपहूय भक्षयन्ति ' यथाचमसं चमसान्दिन्व स इत्यात्मानं प्रत्यभिमृशन्ते ' नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते ' ऽथ प्राङायन्नाह ॥ १९ ॥

अच्छावाकस्य चमसमनूनयध्वमुन्नेतः सर्वश एव राजानमुन्नय मातिरीरिचः प्रतिप्रस्थातरुपेतेन ग्रहेण एहि यजमानेति ' पूर्वया द्वारा हविर्धानं प्रपाद्यैतद्धर्म फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यज्ञ प्रतितिष्ठेति वा तूष्णीं वा ' तस्मिन्संस्रुताभ्याम्नः कृत्वा दक्षिणस्य हविर्धानस्यान्तरेणेषे राजानमुपावहरति हृदे त्वा मनसे त्वा सोम राजन्नेह्यवरोहेति द्वाभ्यामथैनमुद्गातृभ्यः प्राङ्मस्मिंस्तच्चेष्टन्ति यत्ते विदुरथो दुग्ध्याधवनीयमर्धं वसतीवरीणामवनयत्यर्धमेकधनानां ' पुरोऽर्धं वसतीवरीः सादयति ' पश्चादर्धमेकधनानच्छावाकचमसमेव प्रथममुन्नयन्ति ' यथोपपादमितरान्सर्वश एव राजानं

समुन्नीयोत्तरवेद्याः संसादयत्यथादत्त उक्थ्यस्थाल्या औपशयं पात्रं तस्मिन्नेतं सर्वत एव राजानं गृह्णाति य उक्थ्यस्थाल्यां भवत्युपयामगृहीतो ऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्य उक्थायुवं यज्ञस्यायुष इन्द्राग्निभ्यां त्वा जुष्टं गृह्णामीति । नात्र पुनर्हविरसीत्युक्थ्यस्थाल्यौ प्रत्यभिमृशति । दशाभिरेवैनां मृद्वा न्युब्जति । परिमृज्य सादयत्येष ते योनिरिन्द्राग्निभ्यां त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयम प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । ऽच्छावाकायैषोत्तमेति प्राङच्छावाकस्य कालात्पराङावर्तते प्रतिप्रस्थाताथैनमाह्वयते ऽच्छावाकः । प्रत्याह्वयते प्रतिप्रस्थाता । शंसति । प्रतिगृणाति । समिद्धमुक्थं प्रतिगीर्य प्राङेत्योदच्छत एतं यद्दर्मनूदच्छन्ते चमसानाथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहोत्यथ प्रदक्षिणमावृत्याच्छावाकस्य चमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वाथैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्राग्निभ्यां पीतस्येत्यच्छावाकचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसाञ्छिष्ट स इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽयोक्थशा इत्याह । प्रातःसवनं प्रतिगीर्य प्रशास्तः प्रसुहीति । सर्पतेत्याह प्रशास्ता । संतिष्ठते प्रातःसवनम् । ॥ २० ॥ पञ्चमः ॥

॥ इति सप्तमः प्रश्नः ॥

प्रसर्पन्ति माध्यंदिनाय सवनाय देवी द्वारावित्यत एवोर्ध्वेन । संप्रसृप्तान्विदित्वाध्वर्युः प्राङायन्नाहाभिषोतार एत[1] कथत[1] ग्रावस्तुतमेहि[2] यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य होतृचमसे वसतीवरीभ्यो ऽध्यपो निःषिच्य तासु तथैव निग्राभ्यासु यजमानं वाचयति । तास्तथैव यजमानाय संप्रदाय ग्रावाणमादत्ते ऽन्यत्सुपांशुसवनात्तं तथैव प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमभि मिमीत इन्द्राय त्वेन्द्राय त्वेति । पञ्चकृत्वो यजुषा पञ्चकृत्वस्तूष्णीं । दशकृत्वो मिमानः सर्वत्र एव राजानं मिमीते । अद्भिरभ्युक्ष्य ग्रावस्तुत उष्णीषं प्रयच्छत्यद्भिरेवाभ्युक्ष्याध्वर्योरावसथं वासो हरन्ति[3] । तथा मितꣳ राजानꣳ होतृचमसीयाभिरुपसृजति । तथा संप्रयौति । तथा तिरश्चर्मन्फलके अभिमृशति । तथा वृद्धीर्वाचयति । नाचाꣳशून्सचते । घोषवन्त एवाभिषुण्वन्तीहार् इहार् इहेति[4] । तदेव सद्विनयन्तीहार्[5] इह इहार् इह इहार् इहेत्यथ संभरणीये निष्क्रीडयन्तीहार् इहार् इहेत्ययैनꣳ सुसंभृतꣳ संभरण्याꣳ संभृत्योन्नेत्र उत्प्रयच्छति ।

---

१ Thus PB TH Mantramālā.

२ Thus PTFH Bh , Mantramālā, Padārthaniv , •स्तुतमेहि B. Keś.

३ Thus BHTP Bh , हरति F.

४ Here and l. 13, 14 BP have the pluti sign also after the las इह ( thus इहार् इति ).

५ Uncertain reading. BT तदेवसद्विनयती•, H तदेवसद्विद्वियंती•, F तदेत्यदेवद्विर्वंयती•, P तदेवसद्विनयत इह, Bh. and Keś. give no help ( विहृत्य नयन्ति. Bh )

तमुन्नेताधवनीये ऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीयस्तृतीयस्य तृतीये हृदुपयन्ति हृद्वृद्भृहृदित्यृजीषमन्ततो दशापवित्रेण परिवेष्ट्योन्नेत्र उत्प्रयच्छति तदुन्नेताधवनीये[1] विचाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपावहृत्य[2] चर्मणि निदधाति तस्मिंस्तथैव संमुखान्यावणः कृत्वा चतुर्धैतदृजीषं ग्रावमुखेभ्यो व्यपोहति तथोद्गाता[3] वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य प्राञ्चं ग्रावस्तु द्रोणकलशमध्यूहति तस्मिंस्तथैवोदीचीनदशं दशापवित्रं वितत्य प्रसिद्धं शुक्रामन्थिनौ ग्रहौ गृह्णात्यथर्तुपात्राभ्यां द्वौ मरुत्वतीयौ ग्रहौ गृह्णाति ॥ १ ॥

मरुत्वन्तं वृषभं वावृधानमिन्द्र मरुत्व इह पाहि सोममिति द्वाभ्यामथोपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति तं तथैव त्रिरभिहिङ्कृत्य परिमृज्य सादयति तथोक्थ्यं गृह्णात्युक्थ्येन राजानं परिदधाति तथोपर्यर्धे द्रोणकलशे परिप्लुपात्रं प्रास्य द्रप्साननुमन्त्रयते द्रप्सश्चस्कन्द यस्ते द्रप्सो यो द्रप्सो यस्ते द्रप्स इति तथोन्नेतारमाहातिरिक्तं पूतभृतं कुरु पवमानस्य ग्रहाग्रहीष्यामीति तथातिरिक्ते पूतभृति पवमानस्य ग्रहान्गृह्णात्युपयामगृहीतो ऽसीन्द्राय त्वेति द्रोणकलशमभिमृशतीन्द्राय त्वेत्याधवनीयमिन्द्राय त्वेति पूतभृतं तथोन्नेतरित्याह प्राञ्चं राजानं पूतभृतमभि संप्रवयतादृग्भिराधवनीयं सृष्ट्वा न्युब्जता-

---

१ Some MSS · तमुन्नेता· ।

२ उपाभिहृत्य F, उपावहृत्य BHP, comp p 208, 12.

३ अथोद्गाता H

दिति । स तथा करोति । तथाप उपस्पृश्य बर्हिषी आदायोपनिःसर्पति । तेषु तथैव समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति । विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः । आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ स्याम स्वाहेत्येतयाध्वर्यू जुहुतो । यथावेदमितरे जुह्वत्येव । सदक्षिणमावृत्य सदो ऽभि पवमानꣳ सर्पन्ति[1] । तथा[1] सदसि यथायतनमुपविशन्ति । तथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छत्यृक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वा । तथोपाकरणं जपति वायुर्हिंकर्तेति । स एष पञ्चदशो माध्यंदिनः पवमानो भवति । तस्याष्टम्यां प्रस्तुतायां वाचयति सुपर्णो ऽसि त्रिष्टुप्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यथ चतुर्होतारं व्याचष्ट । उद्गीते मार्जि संप्रैषमाहाग्नीदग्नीन्विहर बर्हि स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातर्दधिघर्माय दध्याहरेति । यथासंप्रैषं तौ कुरुतस्तथाप[2] उपस्पृश्याहेहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य तथा समस्तꣳ राजानमुपतिष्ठते । तथावकाशैश्चरति । तथा प्रचरण्यां सवहन्तौ गृह्णीते । तथैव आग्नीध्र आग्नीध्रीयाद्धिष्णियादनुपूर्वं[3] धिष्णियेष्वङ्गारान्विहरति । तथा पुरस्तात्प्रत्यङ्ङासीनो विहृतान्धिष्णियान्व्याघारयति । तथोत्तरस्य हविर्धानस्य चुबुके प्रचरणीꣳ

---

1 सर्पन्त्यथ BJ.

2 Thus BT, कुरुतोऽथाप the other MSS, J corrupt

3 Thus BJHP, आनपूर्वं F, आनुपूर्वं T

मादयति तथा सांकाशिनेन पथा पृष्ठ्याꣳ स्तृणाति संततां गार्हपत्यादाहवनीयात् ॥ २ ॥

अथान्तरेण हविर्धाने उपविश्य दधिघर्माय दधि याचति तदाहृतमवेक्षते ज्योतिरसि वैश्वानरं पृश्नियै दुग्धमिति बर्हिषी अन्तर्धाय कꣳसे वा चमसे वा गृह्णाति यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः। तावन्तमिन्द्र ते ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतमित्यपोद्धृत्य बर्हिषी अथैनꣳ श्रीणाति वाक् च त्वा मनश्च श्रीणीतां प्राणश्च त्वापानश्च श्रीणीतां चक्षुश्च त्वा श्रोत्रं च श्रीणीतां दक्षश्च त्वा बलं च श्रीणीतामोजश्च त्वा सहश्च श्रीणीतामायुश्च त्वा जरा च श्रीणीतामात्मा च त्वा तनूश्च श्रीणीताꣳ शृतो ऽसि शृतंकृतः शृताय त्वा शृतेभ्यस्त्वा शृतं हविरित्यथाह होतर्वदस्व यत्ते वाद्यमित्यथैनमादायोपोत्तिष्ठन्नाह श्रातꣳ हविरित्याक्रम्याश्राव्याह दधिघर्मस्य यजेति वषट्कृते जुहोति यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः। यो देवानां देवतमस्तपोजास्तस्मै त्वा तेभ्यस्त्वा स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षꣳ स यावन्तः प्रवर्ग्यस्यर्त्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति मयि त्यदिन्द्रियं महन्मयि दक्षो मयि क्रतुः। मयि धायि सुवीर्यं त्रिशुग्घर्मो विभातु मे॥ आकूत्या मनसा सह विराजा ज्योतिषा सह। यज्ञेन पयसा सह ब्रह्मणा तेजसा सह। क्षत्रेण यशसा सह सत्येन तपसा सह। तस्य दोहमशीमहि तस्य सुम्नमशीमहि। तस्य भक्षमशीमहि तस्य त इन्द्रेण पीतस्य मधुमत

उपहूतस्योपहूतो भक्षयामीति' निर्णिज्य पात्रं प्रयच्छति' तथा सवनीयान्पुरोडाशानाप्याययति' तेषां तथैव समवद्यन्ति' माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति' पूर्वार्धादवदायापरार्धादवदायाभिघारयति' प्रत्यनक्ति' तथोपभृति स्विष्टकृते सर्वेषां सकृत्सकृदुत्तरार्धादवद्यति' द्विरभिघारयति' न प्रत्यनक्त्यथाक्रम्याश्राव्याह माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानप्रस्थितान्प्रेष्येति' वषट्कृते जुहोति' तथा समानयमान आहाग्नये ऽनुब्रूहीत्योश्राव्याहाग्नये प्रेष्येति' वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोति' तथो-दङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा तथैव पात्र्यामिडां समवधाय सर्वेषः पुरोडाशानश्चिणोत्यनु हैके संयन्ति यथैव इडेति वदन्तो ऽथ साडायमाहोत्रीयमानेभ्यो ऽनुब्रूहि ॥ ३ ॥

होतृचमसमनूत्तपध्वमुभयतःशुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्यो ऽपि त्वमुन्नयस्व प्रतिप्रस्थातश्चतुर्भिर्मा सकलैः प्रोचितप्रोचितैः प्रत्युपतिष्ठस्वेति' यथाप्रैषं ते कुर्वन्ति' समानं कर्माश्रावणादाश्रावण एवं चैतदध्वर्युः' पुरस्तात्प्रत्यङ् तिष्ठन्नाश्रावयत्यो श्रावयास्तु श्रौषण्माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति' वषट्कृते सहोभौ जुहुतः स प्रथमः संकृतिर्विश्वकर्मेति'

---

1 Uncertain reading and interpunction, एवैत्यथा॰ BJ; एवै-त्यथा॰ T Keś, एव--त्यथा॰ F, एवैतिमथा॰ HP, Bhavasvāmin; एव चैति भियत इत्यर्थं A Prayoga एवयति भियत इत्यर्थः (Grantha).

वषट्कृतानुवषट्कृते द्विर्जुहोतस्तथैव द्विर्द्विः सर्वांश्चमसाञ्जुह्वति। तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मण इति। तथा[1] प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वा। तथा प्रतिप्रस्थातोत्तरार्धे आहवनीयस्य मन्थिनः संस्रावं जुहोति। तथाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च खरे यथायतनꣳ सादयति। यन्त्येते महर्त्विजां चमसास्तथैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तन्ते। तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति। वषट्कृतानुवषट्कृते द्विर्जुहोति। ब्राह्मणाच्छꣳसिन्यज पोतर्यज नेष्टर्यजाच्छावाक यजाग्नीध्रजेति। षड्ढोत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यापरेण होतारमुपविशत्यथाऽग्नीदिति। स भद्रमकरित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीति। तथाप उपस्पृश्य होत्र इडामुपोपह्वयन्त। उपह्वयमानायामिडायामुपप्रगृह्णन्ति चमसानुपहूतायामिडायामग्नीध आदधाति षडवत्तं। प्राश्नन्ति। मार्जयन्त। इडोपहूताꣳश्चमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनुद्रुत्य रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति। होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्त।

---

१ तथैव ख

आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सीदन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधो[1]-ऽधस्तृतीयाय मरुत्वतीयायैतस्मिन्काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यदग्ना स्यात्पत्नी पत्नीशाले ।

॥ ४ ॥ प्रथमः ॥

अथ दाक्षिणानि होष्यन्नाचत्वाज्यस्थालीꣳ सस्रुवाꣳ स्रुचं वाससश्चैतस्य वसनस्यान्तमायां दशायां हिरण्यशल्कः प्रग्रथितो भवत्यैतत्समादायाहैहि यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्य पूर्वया द्वारा शालां प्रपाद्य समन्वारब्धेष्वपिहितेषु संप्रच्छन्नेषु गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा वसनस्यान्तꣳ स्रुग्दण्ड[2] उपसंगृह्य सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्युदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यꣳ स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च स्वाहेत्यथाग्नीध्रे हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा वसनस्यैवान्तꣳ स्रुग्दण्ड उपसंगृह्य नयवत्यर्चाग्नीध्रे जुहोत्यग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहेत्यथ दिवं गच्छ सुवः पतेति हिरण्यꣳ कृत्वोद्गृह्णाति । सृज्यन्ते दक्षिणा दक्षिणापथेनान्तरेण

---

१ Thus all and P, except B, which has ॰स्यावालम्ब॰ ।

२ स्रुग्दण्डमुप॰ B.I.

सदश्च गार्हपत्यं चान्तरेण सदश्चाग्नीध्रं चान्तरेण चात्वालोत्करावेवमुदीच्यः प्रतिपद्यन्ते। ताः प्रदक्षिणं कृत्वाभ्यैति रूपेण वो रूपमभ्यैमि वयसा वय इत्यथैना विभजति तुथो वो विश्ववेदा विभजतु वर्षिष्ठे अधि नाक इत्यथ सदो ऽभ्यैत्येतत्ते[1] अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीरिति। ॥ ५ ॥

अथैष आत्रेयो ऽपेण सद आस्ते। तमभ्यैति[2] ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यꣳ सुधातुदक्षिणमित्यथैनमुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमितीतरः प्रत्याह। तं तथैव द्वितीयमुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमित्येवेतरः प्रत्याह। तं तथैव तृतीयमुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमित्येवेतरः प्रत्याह। तस्य पाणौ हिरण्यमादधाति चन्द्र[3] मꣳहेति यदु चान्यदुपकल्पते[4]। ऽथाग्नीध्रं द्रुत्वा हिरण्यमुखमग्नीधे ददात्यथ सद आगत्य ब्रह्मणे ददाति होत्र उद्गात्रे। ऽथ हविर्धानं द्रुत्वाध्वर्यवे ददाति य उ चैनमन्ये ऽभितो भवन्त्यथ सद आगत्य प्रस्तोत्रे ददाति प्रशास्त्रे ब्राह्मणाच्छꣳसिने ऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुर्ग्रावस्तुत उन्नेतुः सुब्रह्मण्यस्य प्रतिहर्तुरन्ततो। यथासमुदितं प्रसर्पकेभ्यो। ऽथाहैहि यजमानेत्याग्नीध्रं

---

१ Thus FHTP, Keś, अभ्यैति BJ

२ Thus TPH, अभ्येति the other MSS

३ चंद्र THF Mantramālā, चद्रं BP and a Prayoga, चद्रमꣳहेति Keś

४ उपकल्पयते the MSS

हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नीध्रे पञ्च वैश्वकर्मणानि जुहोति यज्ञपतिमृषय एनसाहुरित्येतानि कामानीमोवेश्वरत्यग्निना[1] देवेन ये देवा यज्ञहन इत्येताभ्यामनुवाकाभ्यामथ यजमानं प्राञ्चमीक्षयति वि सुवः पश्य व्यन्तरिक्षमित्यथैनꣳ सदस्युपवेशयति यतस्व सदस्यैरित्यथ दक्षिणाः समनुदिशत्यस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमाविशतानवहायास्मान्देवयानेन पथेत सुकृतां लोके सीदत तन्नः संस्कृतमिति ॥ ६ ॥

अथ प्राङायन्नाहेन्द्राय मरुत्वतेऽनुब्रूहीति तच्छ्रुत्वा प्रतिप्रस्थाता ग्रहावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्योर्ग्रहावादत्त उत्तरतस्तिष्ठते प्रतिप्रस्थात्रेऽन्यतरं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषडिन्द्राय मरुत्वते प्रेष्येति वषट्कृते सहोभौ जुहुतोऽथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयति तमाह प्रतिप्रस्थातरेतेन पात्रेण तृतीयं मरुत्वतीयं ग्रहं गृहाणेति तेन प्रतिप्रस्थाता तृतीयं मरुत्वतीयं ग्रहं गृह्णाति द्रोणकलशात्परिप्लुना पात्रेण मरुत्वाꣳ इन्द्र वृषभो रणायेत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा मरुत्वत इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रैतत्पात्रꣳ संभक्षयतीन्द्रेण मरुत्वता पीतस्येत्यथ निगृह्य पात्रं पराङावर्तत इडा देवहूरिति यावदेतस्य यजुषः पर्याप्नोति तावज्जपत्य-

---

१ यन्नीर्माये॰ TJHP Keś. (twice), यनिमो॰ BJ Keś. (once)

श्येनमाह्वयते होता' प्रत्याह्वयते ऽध्वर्युः' शꣳसति' प्रतिगृणाति' प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं तृतीयं मरुत्वतीयं ग्रहमनूद्यच्छन्ते नाराशꣳसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति' वषट्कृतानुवषट्कृते जुहोति' तथैव द्विर्द्विर्नाराशꣳसाननुप्रकम्पयन्त्यैतस्याचं नाराशꣳसा अन्वायत्तेनुसवनभक्ष इन्द्रेण मरुत्वता पीतस्येति' होता चैवाध्वर्युश्चैतस्यावꣳ संभक्षयतो नराशꣳसपीतेन नाराशꣳसान्नराशꣳसपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति' होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति' यथाचमसं चमसान्हिन्व स इत्यात्मानं प्रत्यभिमृशन्त' आप्याययन्ति चमसानाप्यायस्व समेतु त इति' सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो[1] माहेन्द्राय' ॥ ७ ॥

अथ प्राङेत्य शुक्रपात्रमाददान आहोन्नेतर्यदिमं माहेन्द्रं ग्रहं गृह्णास्यथोदञ्चꣳ राजानं पूतभृतमभि संपवयताद्दशाभिर्द्रोणकलशं सृष्ट्वा न्युब्जतादिति' स तथा करोति' स शुक्रपात्रेण माहेन्द्रं द्रोणकलशाद्गृह्णाति महाꣳ इन्द्रो य ओजसेत्यनुद्रुत्योपयामगृहीतोऽसि महेन्द्राय त्वा जुष्टं गृह्णामीति' परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति' स्तुवते माहेन्द्राय'

---

१ B [illegible]

हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नीध्रे पञ्च वैश्वकर्मणानि जुहोति यज्ञपतिमृषय एनसाऽहुरित्येयातिक्रामतीमो चेदुरत्यग्निना[1] देवेन ये देवा यज्ञमिम इत्येताभ्यामनुवाकाभ्यामथ यजमानं प्राङ्मोचयति वि स्वः पश्य व्यन्तरिक्षमित्यथैनꣳ सदस्युप-वेशयति यतस्व सदस्यैरित्यथ दक्षिणाः समनुदिशत्यस्मद्राता देवत्रा गच्छत मधुमतीः प्रदातारमाविशतानवहायास्मान्देव-यानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतमिति ॥ ६ ॥

·· अथ प्राङायन्नाग्नेऽहाय मरुत्वते ऽनुब्रूहीति तच्छुत्वा प्रतिप्रस्थाता यथावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्वषट्-कृते[1] उत्तरतस्तिष्ठते प्रतिप्रस्थाचे ऽन्यतरं प्रयच्छत्यथाश्राव-यत्यो श्रावयास्तु श्रौषडिन्द्राय मरुत्वते.. प्रेद्धेन्द्र सवनस्य चतुष्टुप्छन्दसः पिबपीतस्य मधुमत उपहूतस्योपहूतो भक्षया-मीति होतृचमसमेवैते चयः समुपह्वय भक्षयन्ति यथाचमसं चमसान्द्विन्व स इत्यात्मान प्रत्यभिमृशन्ते आप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते ऽथेन्द्राय त्वेन्द्राय त्वेत्येवं त्रिभिरुक्थ्यपर्यायैश्चरति[2] तं तथैवोत्तमे ऽतिग्राह्य आहाच्छा-वाकस्य चमसमनून्नयध्वमुन्नेतः सर्वत्र एव राजानमुन्नय मातिरी-रिचः प्रतिप्रस्थातरुपैतेन ग्रहेण रमैहि यजमानेति पूर्वया द्वारा हविर्धानं प्रपाद्याथोदुक्त्याधवनीयꣳ सर्वत्र एव वसती-वरीः पर्यस्यति सर्वत्र एवैकधनान्युरोऽन्तमेव वसतीवरीकलशं

१ चक्षप॰ all exc TP     २ इव om BJ.

श्येनमाह्वयते होता प्रत्याह्वयतेऽध्वर्युः शंसति प्रतिगृणाति प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्गच्छत एवं तृतीयं मरुत्वतीयं ग्रहमनूद्गच्छन्तो नाराशंसानेवाश्रावयत्याश्रावयास्तु श्रौषडुक्थशा यज सोमस्येति वषट्कृतानुवषट्कृते द्विर्जुहोति तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्त्येतस्यां च नाराशंसा अन्वायन्त्यनुसवनभक्ष इन्द्रेण मरुत्वता पीतस्येति होता चैवाध्वर्युश्चैतत्पात्रꣳ संभक्षयतो नराशंसपीतेन नाराशंसमाह्नराशंसपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति होतृचमसमेवैते चयः समुपहूय भक्षयन्ति यथाचमसं चममानति ...न् प्रत्यभिहरन्ति आप्याययन्ति चमसाꣳश्चः प्राप्तो भवति तं माध्यंदिनीये स्वजाप ऽपदृष्य चमसकं च[2] ग्रावाणमादायोन्नेतारमाहाहरोपहृजेत्युपहरत्युन्नेताधवनीयादुदचनेनापरिमितमभिपुत्यायैनꣳ सुसंभृतꣳ संभरत्यꣳसंस्त्योन्नेव उन्नयच्छति तमुन्नेताधवनीये ऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीय ऋजीषमन्ततो दशापवित्रेण परिवेष्ट्योन्नेव उन्नयच्छति तदुन्नेताधवनीये[4] विचाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणैव उपानिहत्य[5] नीड उत्सादयति परिश्रयन्ति पूर्वां द्वारमपरां चापादृत

१ सजवैरेन्द्र B, सजवेन्द्र T, PHF om वा, J corrupt
२ च्योत्स्यो JT.    ३ कथम BF    ४ तमुन्नेता॰ some MSS.
५ उपानिहत्य here all, also P.

आदित्यस्थाल्या औपशयं पात्रं। तस्मिन्नेतस्य राज्ञस्तृतीयवेलां गृह्णाति य आदित्यस्थाल्यां भवति कदा च न स्तरीरसीत्यनुद्रुत्योपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीति। बर्हिषी अन्तर्धाय शृतातङ्क्येन श्रीणाति कदा च न प्रयुच्छसीत्यनुद्रुत्योपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीत्यपोद्धृत्य बर्हिषी अर्धवेलाꣳ राज्ञो गृह्णाति यज्ञो देवानां प्रत्येति सुम्नमित्यनुद्रुत्योपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीत्यथैनꣳ स्वविमत उपांशुसवनेन श्रीणाति विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामीत्यथैनमुद्गृह्णात्यथ विज्ञानमुपैति यदि ताजक् प्रस्कन्दत्यपूर्ववर्षुकः[1] पर्जन्यो भवति। यदि चिरमवर्षुको। न सादयतीति ब्राह्मणमथैनमुपांशुसवनं दशापवित्रेण परिवेष्ट्य तेनाधमात्पात्रमुद्धन्न्यूर्मिकारमविपिबन्॥ ९ ॥

आ समुद्रादान्तरिक्षात्प्रजापतिरुदधिं च्यावयातीन्द्रः प्रस्नौतु मरुतो वर्षयन्तून्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः। उद्नो दिव्यस्य नो देह्यीशानो विसृजा दृतिमित्यथैनमुपांशुसवनं[2] दशापवित्रेण परिमृज्य ग्रावस्वपिसृजति। विवृहन्ति पूर्वां द्वारमपरां चाथैत[3] ग्रहं बर्हिर्भिस्तेनापिधायोपोत्तिष्ठस्वाहादित्येभ्यः[4]

---

१ Thus J only; ॰दत्यपूर्ववर्षुकः F, ॰ऽवर्षुकः HP, the other MSS. are still more corrupt.

२ अथैनमु॰ all except H, which has अथैनमु॰।

३ Thus PHJ Ked., अथैन the other MSS

४ ॰योपोत्तिष्ठस्व॰ TP ॰योपोत्तिष्ठस्व॰ J, ॰योपत्तिष्ठस्व॰ B, ॰योत्तिष्ठस्व॰ HF.

प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यो ऽनुष्टुभ्यो ऽत्याकम्याश्चाख्यादित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः प्रेष्येति' वषट्कृत ओषधीः प्राश्याग्नावादित्यं जुहोति सकृदेव' न कृत्वान्वीक्षते' पर्यावृत्तस्यैव प्रतिप्रस्थाता पात्रमादत्ते' एतस्मिन्काले प्रतिहर्ता पूतभृतो बिले पवित्रं वितत्य द्वौ वा त्रीन्वा राज्ञ उदचनानामथर्याणयेवाध्वर्युरादत्ते' आदित्यस्थाल्यौ प्रतिप्रस्थाता सोपयमाः संगृह्णाति' तासां तिसृणां चतसृणां वा[1] धाराणं [2]तयोपरिष्टादाद्यमानीयाधस्तादुपगृह्णाति' तं[3] तथैव निरभिधिद्धत्य परिमृज्य सादयत्यपोद्धृत्य पवित्रं बर्हिषी अन्तर्धायाग्निमवनयत्यन्वारब्धायां पत्न्यामस्मे देवासो वपुषे चिकित्सतेति चतसृभिरनुष्छन्दसमपोद्धृत्य बर्हिषी पूतभृतो बिले द्रप्सानतुमन्त्रयते' द्वौ पवमानस्य ग्रहौ गृह्णाति' तयोरितरित्याह प्राञ्चं राजानं पूतभृतमभि संपवयताद्ग्राभिराधवनीयं मृद्वा न्युब्जतादिति' स तथा करोति' तथाप उपस्पृश्य बर्हिषी आदायोपनिःसर्पति' तेषु तथैव समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति' ॥ १० ॥

इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त। ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु स्वाहेत्येतयाध्वर्यू जुहुतो' यथावेदमितरे जुह्वति' तथा

[1] च T. [2] तया om THF [3] om T

प्रदक्षिणमावृत्य सदो ऽभि पवमानꣳ सर्पन्ति । तथा सदसि यथायतनमुपविशन्ति । तथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छत्यृक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वा । तथोपाकरणं जपति वायुर्हिंकर्तेति । स एष सप्तदश आर्भवः पवमानो भवति । तस्य नवम्यां प्रस्तुतायां वाचयति सदसि जगतीच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यथैव पञ्चहोतारं व्याचष्ट । उद्गते सान्नि संप्रेष्यत्याहाग्नीच्छलाकान्विहर बर्हिः स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातः पशौ संवदस्वेति । यथासंप्रैषं तौ कुरुतस्तथाप उपस्पृश्याहेहि यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य तथा सममतꣳ राजानमुपतिष्ठते । नाचावकाशैश्चरति । तथा प्रचरण्यां नवकृत्वो गृह्णीते । तथैव आग्नीध्र आग्नीध्रीयाद्धिष्ण्यादनुपूर्वं[१] धिष्ण्येषु शलाकान्विहरति[२] । तथा पुरस्तात्प्रत्यङ्ङासीनो विहृताञ्छलाकान्व्याघारयति[२] । तथोत्तरस्य हविर्धानस्य चुबुके प्रचरणीꣳ सादयति । तथा सांकाशिनेन पथा पृष्ठ्याꣳ स्तृणाति संततां गार्हपत्यादाहवनीयात् । ॥ ११ ॥

अथ पशुना चरति मनोताप्रभृतिनेडान्तेन । तथा सवनीयान्पुरोडाशान्प्यचति । तेषां तथैव समवद्यस्याह तृतीयस्य

१ आनुपूर्वं T, अनुपव PBJ, अनुपूर्वा F, आन्‌पूर्व H.

२ शालाकान् PTJ, शलाकान् BHF, शकलान् and शलाकान् H

सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति ' पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति ' प्रत्यनक्ति ' तथोपभृति स्विष्टकृते सर्वेषाᳲ सकृत्सकृदुत्तरार्धादवद्यति ' द्विरभिघारयति ' न प्रत्यनक्त्याक्रम्याश्राव्याह तृतीयस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति ' वषट्कृते जुहोति ' तथा समावपमान आहाग्नये ऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति ' वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनᳲ स्रुचौ सादयित्वा तथैव पात्र्यामिडाᳲ समवधाय प्रतीचः पुरोडाशान्प्रहिणोत्यनु हैके संयन्ति पशव इडेति वदन्तो ऽथ प्राङायन्नाहोन्नीयमानेभ्यो ऽनुब्रूहि होतुश्चमसमनून्नयध्वं तीव्राᳲ आशीर्वतः कुरुध्वमुन्नेतः सोमं प्रभावयेति ' होतृचमसमेव प्रथममुन्नयन्ति ' यथोपपादमितरान्समुन्नीयोत्तरवेद्याᳲ सᳲसादयन्त्यथ प्राङेत्य होतृचमसमादायाश्राव्याह तृतीयस्य सवनस्यर्भुमतो विभुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राᳲ[1] आशीर्वत इन्द्राय सोमान् प्रस्थितान्प्रेष्येति ' वषट्कृते जुहोति श्येनाय पत्वने स्वाहेत्यनुवषट्कृते दम्पन्नाᳲ होत्रा मधोर्घृतस्य स्वाहेति ' वषट्कृतानुवषट्कृते द्विर्जुहोति ' तथैव द्विर्द्विः सर्वाᳲश्चमसाञ्जुह्वति ' तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्र सदस्यस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृदाशीर्वतो ऽभ्युन्नीयोपावर्तध्वमिति ' यन्त्येते सहर्त्विजां चमसाध्वर्यवो होत्र-

१ विश्वेदे॰ BT, Mantramalā, the other MSS, also P, have विश्वदे॰ ।

कार्णां चमसाध्वर्यवः सकृत्सकृदाशीर्वन्तो ऽभ्युन्नीयोपावर्तन्ते । तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति । वषट्कृते जुहोति विष्टम्भाय धर्मणे स्वाहेति । परिधये जनप्रथनायेति[1] ब्राह्मणाच्छꣳसिन । ऊर्जे होत्राणामिति पोतुः । पयसे होत्राणामिति नेष्टुः । प्रजापतये मनव इत्यच्छावाकस्यर्तस्तुतपाः सुवर्वाडित्यग्नीधस्य । मसं[2] चमसमेवानुवषट्करोति[3] त्वमन्ताꣳ होत्रा मधोर्घृतस्य स्वाहेति । सप्त होत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्याग्रेण होतारमुपविश्यत्ययाडग्नीदिति । स भक्षमकरित्याह होता यो नः सोमꣳ राजानं पाययिष्यतीति । तथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्ति । उपहूयमानायामिडायामुपप्रगृह्णन्ति चमसानुपहूतायामिडायामग्नीध आदधाति षडवत्तं । प्राश्नन्ति । मार्जयन्ते । इडोपहूताꣳश्चमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनुद्रुत्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसानाप्यायस्व समेतु त इति । सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽध[4]

---

1 BPP add स्वाहा also after •प्रथनाय ।

2 Thus, अग्नीधस्य• HPT अग्नीध्रस्य• or आ• BJ

3 Thus TFPH Bh चमसमेवानुवष• J , चमसेवानुवष• B Ke

4 B again •वाशंस• ।

उपासन्वन्तो वैश्वदेवाय । चमसाय चमसायैव त्रींस्त्रीन्पुरोडाशशकलानुपास्यति । नव होतृचमसे । तानत एवानुमन्त्रयतेऽत्र पितरो यथाभागं मन्दध्वमित्येतस्मिन्काले[1] आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यद्यग्ना स्यात्पत्नी पत्नीशाले ।

॥ १२ ॥ तृतीयः ॥

अथ प्राङायन्नाह देवाय सवित्रेऽनुब्रूहि प्रतिप्रस्थातरन्तर्यामपात्रेण सावित्रमाग्रयणाद्ग्रहं गृहीत्वोपास्स्व मा सीषद इति । तच्छ्रुत्वा प्रतिप्रस्थातान्तर्यामपात्रेण सावित्रमाग्रयणाद्ग्रहं गृह्णाति वाममद्य सवितरित्यनुद्रुत्योपयामगृहीतोऽसि देवाय त्वा सवित्रे जुष्टं गृह्णामीति । न सादयतीति ब्राह्मणमसादयित्वैवोपनिष्क्रम्याश्राव्याह देवाय सवित्रे प्रेष्येति । वषट्कृते जुहोत्यथ वै भवति सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सोमे सोममभिगृह्णातीति । स[2] सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सोमे सोममभिगृह्णात्युपयामगृहीतो[3]ऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नमो विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रा समीक्ष्य पराङावर्तत इडा देवहूरिति । यावदेतस्य यजुषः पर्याप्नोति तावत्त्वपर्यभ्येन-

---

१ After मन्दध्वमिति HF ins. उक्त्वा ।

२ स only in PH, F reads यत् ।

३ The words सोमे सोममभिगृह्णाति om B (*are* they interpolated ?); P also has them

आह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शंसति । प्रतिगृणात्यथ यत्र होतुरभिजानात्येकया च दशभिश्च स्वभूत इति तस्मिन्-प्रस्तुते द्विदेवत्यपात्राणि मार्जालीये मार्जयित्वा पात्रेष्वपि-सृजत्यथ यत्र होतुरभिजानाति प्र[1] द्यावा यज्ञैः पृथिवी ऋतावृधेति तदन्यतो-मदं प्रतिगृणात्योथा मोद इव मदा मोद इवेत्या व्याहावादथ यत्र होतुरभिजानाति तद्राधो अद्य सवितुर्वरेण्यमिति तदुभयतो-मदमेव[2] प्रतिगृणाति मदा[3] मोद इव मदा मोद इवेत्या व्याहावात्प्रसिद्धमुक्थं प्रतिगीर्य प्राङिद्योपच्छत एतं वैश्वदेवं ग्रहमनूद्यच्छन्ते नाराशंसानाप्याययन्त्यो श्रावयास्तु श्रौषड्वषड्यजा यत्र सोमस्येति । वषट्कृतानुवषट्कृते जुहोति । तथैव द्विर्द्वि-नाराशंसाननुप्रकम्पयन्त्यथैतत्पात्रं नाराशंसा अन्वायन्त्यनुमवन-भक्षो विश्वैर्देवैः पीतस्येति । होता चैवाध्वर्युश्चैतस्याचष्ट संभक्ष-यतो नराशंसपीतेन नाराशंसमाश्नराशंसपीतस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दसः पितृपीतस्य

---

१ The reading of the words commencing with प्र is not wholly certain. B om. from प्र द्यावा to अभिजानाति (incl., line 6); instead of व्याहावाद् (thus JP, l. 6) F has व्याहावात् ।

२ उभयतो॰ FP, अन्यतामद॰ BJ, but comp Padarthanirr. page 378 (n°121) and Āp srs XIII. 13 8.

३ मदा ... इवेति om. TJ; B मदामोदैवमोदामोदैवित्य॰ ; most of the MSS. contract the word इव with the preceding vowel; so HPBJ, but comp TS. III 2, 9, 5

मधुमत उपहूतस्योपहूतो भक्षयामीति ' होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति ' यथाचमसं चमसान्हिन्व स इत्यात्मानं प्रत्यभिमृशन्ते ' नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते '
॥ १३ ॥

अथ होतारं विपृच्छति परियक्ष्यामि सौम्यां३[1] न परियक्ष्यामी३[1] इति ' स यथैनꣳ होता प्रत्याह तच्छ्रुत्वामत्रꣳ सौम्यमागच्छत्यथ स्रुचि चतुर्गृहीतं गृहीत्वात्याक्रम्याश्राव्याह घृतस्य यजेति ' वषट्कृते जुहोत्यथोपस्तीर्य द्विस्सौरेवद्यति[2] ' पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति ' न[3] प्रत्यनक्त्यथाक्रम्याश्राव्याह सौम्यस्य[4] यजेति ' वषट्कृते दक्षिणार्धपूर्वार्धे प्राचीनावीती सौम्यं जुहोत्यथैनं वैष्णव्यर्चा स्रुवाकृत्याभिजुहोति विष्णो त्वं नो अन्तम इति ' यद्वै होताग्नावैष्णव्यर्चा परियजति संपन्नमिति नाद्रियेत ' तस्मिन्नाज्यमानीयावेक्षते ' पवित्रं वै सौम्य ' आत्मानमेव पवयन्ते ' य आत्मानं न परिपश्येदितासुः स्यादभिदर्दिं कृत्वावेक्षेतेति ' तस्मिन्भूय आज्यमानीयावेक्षते यन्मे मनः परागतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसीति ' मन एवात्मन्दधार न गतमना

१ Some of the MSS. om the pluti sign, F puts it both times behind the verb सौम्यान PBF, सौम्याम HJ.

२ Instead of अवद्यति B has, अवद्यत्याह सोमायानुब्रूहीति ।

३ om. HF.

४ सोमस्य BJ

भवतीति ब्राह्मणसंसर्गेनमुद्गृह्णाद्दभ्यो हरन्ति। तमिाङ्गस्तघेष्टनि
यत्ते विदुरथ प्राह्णायनाह प्रतिप्रस्थातरुपांशुपात्रेण पात्नीव-
तमाग्रयणाद्गृहं गृहीत्वोपास्य मा सीदत इति। तच्छ्रुत्वा
प्रतिप्रस्थातोपांशुपात्रेण पात्नीवतमाग्रयणाद्गृहं गृह्णात्युपया-
मगृहीतोऽसि बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं ९
ग्रहं गृह्णाम्यग्नाऽ३इ पत्नीवा३ इति। बर्हिषी अन्तर्धाय एतेन
श्रीणात्यहं परस्तादहमवस्तादहं ज्योतिषा वि तमो ववार ।
यदन्तरिक्षं तदु मे पिताभूदहꣳ सूर्यमुभयतो ददर्शाहं भूया-
समुत्तमः समानानामित्यपोद्धृत्य बर्हिषी न सादयतीति
ब्राह्मणसंपादयित्वोपनिष्क्रम्याग्नीध्राद्धार्योत्पात्नीवतस्य यजेति। १०
वषट्कृते जुहोति मरुद्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्युपांशु-
स्वनुवषट्कृते[1] हुत्वा हरन्ति भक्षम्। स यदग्नीधाग्नीध्र उपहव-
मिच्छत उपैवैनꣳ ह्वयते। नो त्वेव समभक्षयतो[2]। ऽथाहा-
ग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गातः संख्यापय
उपप्रवर्तयतादूरुणोपप्रवर्तयतादथ हस्तोरुमुपप्रवर्तयताद्धोतुश्चम- ११
समनूत्रयध्वमुक्तेः सर्वत्र एव राजानमुक्त्वा मातिरीरिचः
प्रतिप्रस्थातर्होतृचमसे ध्रुवायावकाशं कुरुतादेहि यजमानेति।
पूर्वया द्वारा हविर्धानं प्रपाद्य यजमानं ध्रुवमुपस्थापयति
भूतमसि भूते मा धा मुखमसि मुखं भूयासमिति। होतृचम-

---

१ करोति instead of हुत्वा T

२ Thus HJF, ॰यति TB

समैव प्रथममुन्नयन्ति । यथोपपादमितरान्सर्वत्र एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप[1] उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते यज्ञायज्ञियेनाथ सप्तहोतारं व्याचष्टे । प्रस्तुते साम्नि नेष्टा पत्नीमुद्गात्रा संख्याप्य वाचयति विश्वस्य ते विश्वावतो वृष्णियावतस्तवाग्ने वामीरनु संदृशि विश्वा रेताꣳसि धिषीयागन्देवान्यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमातिष्ठतानु वातस्य पत्मन्निड ईडिता इति । स यदेवैनामुद्गातोपमीवति[2] तदेषा[3] पत्न्यूरुणा पद्धेजनीरुपप्रवर्तयति । नग्नं कृत्वोरुमुपप्रवर्तयति ॥१४॥

होत्र एषोत्तमेति प्राक्होतुः कालात्परावर्तते ऽध्वर्युरथैनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शꣳसति । प्रतिगृणात्यथ यत्र होतुरभिजानाति स्वादुष्किलायं मधुमाꣳ उतायमिति तदुभयतो-मोदं प्रतिगृणाति मोदा मोद इव मदा मोद इवेत्या[4] व्याहावादथ यत्र होतुरभिजानाति तन्तुं तन्वन्रजसो भानुमन्विहीति तत्प्रतिप्रस्थाता ध्रुवं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्यथैनं प्रच्यावयति

---

१ सꣳ found in HT, is omitted in most of the MSS

२ °मीयति HJFP Bh. (one MS) Keś; °मीवति BT Bh. (another MS)

३ Thus HBTJP, तदैषा F (तदा एषा Keś)

४ मोदामोद इवेत्या B, मोदादैवेत्या T मोद इव मदा मोदे इवेत्या J, मोदा मोदे इव मोदा मोदे इवेत्या F; मोदा मोदेव मदा मोदेवेत्या HP, Bh and Keś.- अवच्छेदे मोदा मोद इवेति प्रणवे मदा मोद इवेति ।

विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्त्वित्यथैनमाहरति दिवि देवान्दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवानित्यथैनꣳ होतृचमसे ऽवनयति ध्रुवं ध्रुवेण हविषाव सोमं नयामसि । यथा नः सर्वमिज्जगदयक्ष्माꣳ सुमना असत् ॥ यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत् । यथा नः सर्वा इद्दिशो ऽस्माकं केवलीरसन्निति ' प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योपावहृत एतꣳ होतृचमसमनूपावहन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति ' वषट्कृतानुवषट्कृते दिर्जुहोति ' तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहुत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षो ऽग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति ' होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति ' यथाचमसं चमसान्दिन्न स इत्यात्मानं प्रत्यभिमृशन्ते ' नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते ' ऽथैताꣳश्चमसानद्भिः पूरयित्वोत्तरेणाहवनीयं प्राचो वोदीचो वा यातयति ' तेषु त्रीꣳस्त्रीꣳश्च दूर्वाग्रन्थीन्प्रास्यत्येकैकं च दर्भपुञ्जीलमथोक्थ्यं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य प्रशास्तः प्रसुहीति ' सर्पतेत्याह प्रशास्ता ' संतिष्ठते तृतीयसवनम् ' ॥ १५ ॥

चतुर्थः ॥

अथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्याहरन्त्येतानाग्नीध्रादौपयजानङ्गाराꣳस्तानग्रेण होतारं निवपत्युपसीदत्युपयष्टा गुदतृतीयेनाथाध्वर्युः पृषदाज्यं विहृत्य जुह्वाꣳ १

समानीयाच्छावाकस्याश्राव्याह देवेभ्यः प्रेष्येति । वषट्कृते जुहोति प्रैष प्रैषेत्येकादशानूयाजानिष्ट्वोद्गृह्याकस्य यथायतनꣳ स्रुचौ सादयित्वा वाजवतीभ्याꣳ स्रुचौ व्यूहति । शंयुना प्रस्तरपरिधि संस्रावं संस्राव्य स्रुचौ विमुच्योपैत्यारम्भणीयेनैतदृतं सचतेति । तच्छुनोषिता द्रोणकलशा आग्रयणस्थालीयी[1] ग्रहं गृह्णात्युपयामगृहीतो ऽसि हरिरसि हारियोजनो हर्योः स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामीति । बर्हिषी अन्तर्धाय धानाभिः श्रीणाति हरी स्थ हर्योर्धाना इत्यपोद्धृत्य बर्हिषी अपिगृह्यादायोपोत्तिष्ठत्याहेन्द्राय हरिवते धानासोमानामनुब्रूहीति । शीर्षन्नधिनिधाय विक्रम्याश्राव्याहेन्द्राय हरिवते धानासोमान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोति सहसोमा इन्द्राय स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षं । स यावन्त ऋत्विजस्तेभ्य उपहता धाना व्यावपति । त उपहतयुपहवमिष्टे-कैकामवघ्रन्ते । मनसा संबाधते ॥ १६ ॥

इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्यथैना निर्विध्योत्तरवेद्याꣳ संमिश्रपत्न्यापूर्या स्थ मा पूरयत प्रजया च धनेन चेति । निवपन्त्येव यजमानस्तिस्रो धानाः सचते । ऽथ यावति स्वयमुद्पात्रं बर्हिरित्येतत्समादायाएहि यजमानेति ।

---

१ आग्रयणस्थालीये B.

जघनेन दक्षिणेन हविर्धाने[1] परीत्य दक्षिणेन मार्जालीयं धिष्णियꣳ स्फ्येनोद्धत्यावोक्ष्य दक्षिणाग्रं बर्हि स्तीर्त्वाञ्जलिभिर्मार्जयति मार्जयन्तां पितरो मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहा इत्यथ तिस्रो धाना ददात्येतत्ते ततासौ ये च त्वामन्वेतत्ते पितामहासौ ये च त्वामन्वेतत्ते प्रपितामहासौ ये च त्वामन्वित्यृच[2] पितरो यथाभागं मन्दध्वमित्युक्त्वोदङ् पर्यावृत्याच यज्ञोतारं व्याचष्टे ऽथाभिपर्यावृत्य तथैवाञ्जलिभिर्मार्जयित्वैतेनैव यथेतमेत्याग्नीध्रीये द्वे स्रुवाहुती जुहोति यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वाभ्यामथाहवनीये शाकलैश्चरन्ति देवकृतस्यैनसो ऽवयजनमसि स्वाहा मनुष्यकृतस्यैनसो ऽवयजनमसि स्वाहा पितृकृतस्यैनसो ऽवयजनमसि स्वाहेत्यथाप्सु सोमान्पर्युपविश्यावघ्रेण भक्षयन्त्यप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोषनिस्तस्य ते पितृभिर्भक्षकृतस्योपहूतस्योपहूतो भक्षयामीत्यथैना निनीयोपोत्थायादित्यमुपतिष्ठन्ते ॥ १७ ॥

अपाम सोममृता अभूमादर्श्म ज्योतिरविदाम देवान्। किमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्येति यद्ध वा अस्तमित आदित्यो भवत्याहवनीयस्यैवैतेन यजुषोपतिष्ठन्ते ऽथाग्नीध्रं हुत्वाग्नीध्रे दधिद्रप्सान्भक्षयन्ति दधिक्राव्णो अका-

१ हविर्धाने PHBT; हविर्धानं JF.

२ इति om. HFP.

रिषमित्यथ सत्यवैमर्जनं जपन्त्युभा[1] कवी युवाना सत्या ता धर्मणस्पती । सत्यस्य धर्मणस्पते वि सख्यानि सृजामह इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य षड्ग्मियाणि जुहोति धाता रातिः सवितेदं जुषन्तामिति चीणि यजूंषि यज्ञ यज्ञं गच्छैष ते यज्ञो यज्ञपते देवा गातुविद इत्यथ स्रुचि चतुर्गृहीतं गृहीत्वायुर्दा दशमीं जुहोत्यायुर्दा अग्ने हविषो जुषाण इत्येतस्मिन्काले चात्वाले यजमानः कृष्णविषाणां प्रास्यतीन्द्रस्य योनिरसि यज्ञस्य त्वा योनौ सादयामीति वा तूष्णीं वाथ प्रतिप्रस्थाता पत्नीमुदानयति सा चात्वाले शङ्कु प्रास्यति तूष्णीम् ॥ १८ ॥ पञ्चमः ॥

अथैतमवभृथं[2] सम्भादयन्त्यपेणामीषमुच्छ्राय्यां[3] वा धर्मणि वा पत्नीशालादाददते वारुणमुपस्तीर्णाभिघारितमाज्यस्थालीं स्रुवां स्रुचं बर्हिः प्रतिवसनीये वाससी औदुम्बरीं राजासन्दीं सदस औदुम्बरीं स्थूणां मैत्रावरुणदण्डं हविर्धानाभ्यां पूतभृदाधवनीयौ चमसानधिषवणं चर्माधिषवणे फलके षट् छद्मन्यावणो वायव्यानि स्थालीर्द्रोणकलशं[4] दशापवित्रं ऋजीषमित्येतत्सह कृष्णाजिनेन यत्किञ्चित्सोमलिप्तं भवत्यथ वै भवति परा स्थालीरस्यन्त्युदायव्यानि हरन्तीत्येतत्समादाय

---

१ जपत्यु॰ all except PBE and Bh , Keś. · जपति सर्वे ।

२ अथैतदव॰ JT.

३ Thus (or उच्छ्रायां) BP Bh Keś , उच्छ्रायां T, उच्चाया JF, उर्वायां H.

४ स्थाली HJTF; स्थाली BP; स्थालीर Keś.

प्रस्तोतारमाह प्रस्तोतः साम[1] गायेति । साम्ना प्रस्तोतान्वेति । त्रिर्निधनमुपैति । पुरुषःपुरुषो निधनमुपैतीति ब्राह्मणमेवान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामन्त्युरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवे ऽकरुतापवक्ता हृदयाविधश्चिदिति । विषुवति द्वितीयं निधनमुपयन्त्यपः परास्याथ वाचयति शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु । बाधस्व द्वेषो निरृतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मदित्युदकान्ते तृतीयं निधनमुपयन्त्यपामन्तमभितिष्ठन्त्यभिष्ठितो वरुणस्य पाश इत्यथाप्सु बर्हिः प्रास्यत्यग्नेरनीकमप आविवेश । अपां नपात्प्रतिरक्षन्नसुर्यं दमेदमे समिधं यक्ष्यग्न इत्यथैनत्स्रुवाहुत्याभिजुहोति प्रति ते जिह्वा घृतमुच्चरण्येत्स्वाहेत्यथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषश्चतुरः प्रयाजान्यजत्यथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथोपस्तीर्य पूर्वार्धात्पुरोडाशस्यावद्यन्नाह ॥ १९ ॥

वरुणायानुब्रूहीति । पूर्वार्धादवदायापरार्धादवदायाभिघारयति । [2]प्रत्यनक्त्यत्याक्रम्याश्राव्याह[3] वरुणं यजेति । वषट्कृते जुहोत्यथोपस्तीर्य सर्वत एव वारुणमवद्यदाहाग्नीवरुणाभ्याꣳ स्विष्टकृद्भ्यामनुब्रूहीति । द्विरभिघारयत्याश्राव्याहाग्नीवरुणौ

---

1 Thus HTP Bh Keś, सामानि BJ Mantramālā

2 F ins स ।

3 Instead of अत्याक्रम्य (thus TP) B has आक्रम्य; F om. the words अत्याक्रम्य ... द्विरभिघारयति ।

स्विष्टकृतौ यजेति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषौ द्वावनूयाजौ यजत्यथाप्सु स्रुचं प्रतिष्ठापयति समुद्रे ते हृदयमप्स्वन्तरित्यथैनामद्भिः पूरयति सं त्वा विशन्त्वोषधीरुताप इत्यथैतेनापो जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमोवाके विधेम स्वाहेत्यथैनमवभृथꣳ संप्रकिरन्ति यत्किंचित्सोमलिप्तं भवत्यवभृथ निचंकुण निचेरुरसि निचंकुणाव देवैर्देवकृतमेनो ऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहीत्यथाञ्जलिनाप उपघ्नन्ति सुमित्रा न आप ओषधयः सन्त्विति । तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्याथैतदृजीषं प्लावयन्ति[1] सह कृष्णाजिनेन देवीराप एष वो गर्भस्तं वः सुप्रीतꣳ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतादिति । बिन्दूनुपैव स्पृशति । न भक्षयत्यथानुपमज्जन्तावन्योन्यस्य पृष्ठे धावयतो[2] विसृज्य मेखले प्रतिवसनीये वाससी परिधायोन्नेतारमाहोन्नेतरुन्नो नयेति । तिसृभिरुद्वतीभिरुदायन्त्युद्वयं तमसस्पर्युदु त्यं चित्रमित्यथापामन्तं प्रत्यैति प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश इत्यथाप्रतीक्षमायन्ति । वरुणस्यान्तर्हित्यै । प्रपथे समिधः कुर्वत एधो

१ °यंति HBF Keś, °यति TP

२ Thus HJFP Bh, धावयित्वा BT Keś

ऽस्येधिषीमहीत्येत्याहवनीये[1] ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो ऽन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेति । व्यवच्छिन्दन्ति परिश्रयणानि । विवर्तयन्ति[1] हविर्धाने दक्षिणेन दक्षिणमुत्तरेणोत्तरम् । ॥ २० ॥

यावदेवाचाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता प्रायणीयस्य निष्काम उदयनीयमभिनिर्वपत्येष एव वेद एतन्मेक्षणमेतद्बर्हिर्येतौ चरुस्थालीꣳ सवामकाषामुत्सृज्य[1] निर्णिज्य तयोदयनीयꣳ श्रपयति । तस्मिꣳस्तथैव श्रप्यमाणे जघनेन गार्हपत्यमोपसद्यायां वेद्याꣳ स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं । चिषंजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धतादायोभिमन्त्रिर्हरति ।[2] समानं कर्म यथा प्रायणीयस्यैतावदेव नाना । पथ्यामनु स्वस्तिं प्रथमां यजति तामिहोपोत्तमां यजति । नो तु द्विगग्यवन्तो[1] । ऽथ पुरस्तात्स्विष्टकृतः स्रुवाहुतिमुपजुहोति यास्ते विश्वाः समिधः सन्त्यग्न इत्युपस्तरणाभिघारणाभ्यामेवैतद्बुवाच्यं विच्छिन्दन्ति[1] । समि-

ष्टयजुर्हैके जुह्वति। संस्थित उदयनीयः संतिष्ठते। ऽथैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथ पृषदाज्यवन्त्याज्यानि गृहीत्वा मैत्रावरुणीं वशामुपाकरोति। तस्यै प्रसिद्धं वपया चरित्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते। नखानि निकृन्तते। सर्वसंस्थां[1] पशोः कुर्वन्त्यथ यदि वशां न लभते मैत्रावरुणीमामिक्षां गार्हपत्ये श्रपयित्वा तयाहवनीये प्रचरति। साज्यभागप्रतिपत्त्येडान्ता[2] संतिष्ठते। ॥ २१ ॥

[3]अथारण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्याग्नेयमष्टाकपालमुदवसानीयामिष्टिं निर्वपति। श्रपयित्वासादयति। तस्याः पञ्चदश सामिधेन्यः। पञ्च प्रयाजाः[4]। वार्त्रघ्नावाज्यभागावथ हविषो ऽग्ने तमद्याधा ह्यग्न इति। त्रिष्टुभौ संयाज्ये। अन्वाहार्यमामाधानद्वार्हं ददाति। सा प्रसिद्धेष्टिः संतिष्ठते। ऽथारण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्य[5] पूर्वाणि देविकाहवींषि निर्वपत्यनुमत्यै चरुं राकायै चरुं धात्रे

---

१ सस्थां TP, सर्वसंस्था the other MSS, संस्थाः H.

२ Thus only J, ०प्रतिपत्त्ये० B, प्रचरत्याज्यभागाभ्यां प्रभृतीडान्ता F; T altogether corrupt, प्रचरत्याज्यभागप्रभृतीडान्ता H.

३ This Khanda is given according to PBJT; HF differ materially, these MSS. treat firstly of the devikāhavīṃsi, then of the udavasānīyā iṣṭi

४ प्रयाजानिष्ट्वा TJP

५ Instead of थारण्योर ... विहृत्य P has: यथैतदाग्नीनेव इष्टाङ्गश्रीत्वापः प्रयोय।

पुरोडाशं द्वादशकपालमित्यन्वाहार्यमासाद्य वत्सतरीं[1] ददाति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ तदानीमेव पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयोत्तराणि देविकाहवींष्यपि निर्वपति सिनीवाल्यै चरुं कुह्वै चरुं धात्रे पुरोडाशं द्वादशकपालमित्यन्वाहार्यमासाद्य वत्सतरं[2] ददाति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथारण्योरग्नीन्समारोह्य स्वान्स्वान्यायतनान्यध्यवसाय मथित्वाग्नीन्विहृत्य सायंप्रातरग्निहोत्रे प्रतिजुहोति । संतिष्ठते ऽग्निष्टोमः संतिष्ठते ऽग्निष्टोमः । ॥ २२ ॥ षष्ठः ॥

॥ इत्यष्टमः प्रश्नः ॥

---

1 Thus TJPBh., °तरं BF

2 Thus TBh., °तरीं PBJF.

प्रवर्ग्यꣳ संभरिष्यन्नुपकल्पयते खादिरीमौदुम्बरीं वैल्वीं वैकङ्कतीं वाभ्रिं व्याममात्रीं वारत्निमात्रीं वोभयतःक्ष्णूं मृदं च भावितां करणीयां कृष्णाजिनं वराहविहतं वल्मीकवपामूतीकस्तम्बं वादारस्तम्बं वा छागापयो ऽर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि सूनामधिकरणीं कर्तारं कुशलं वेणुकाण्डं मदन्तीरित्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वा पूर्वाꣳ शान्तिमुपयन्ति नमो वाच इत्यथायेण शालां धनुर्मात्रे वेद्यै गर्तं खानयति' तद्भावितां मृदमवलेपयति' समां बिलेन करोति' तदुपसादयति वराहविहतं वल्मीकवपामूतीकस्तम्बं वादारस्तम्बं वा स्थाले छागापय इत्यथोत्तरतः पार्श्वतः संभाराणां प्राचीनाग्राणि तृणानि संस्तीर्य तेषूपरि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणात्यथोत्तरꣳ शालाखण्डमग्रेण[1] स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति' तं परिमण्डलं खरं करोत्यथैनꣳ सिकताभिराभ्राग्निं करोति' तं कुशतृणकैर्दूर्वाग्रन्थिभिरिति संप्रच्छाद्याथैनं परिश्रयन्ति' तस्योदीचीं द्वारं कुर्वन्ति' तदुपसादयत्यर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि सूनामधिकरणीं कर्तारं कुशलं वेणुकाण्डमित्यथ गार्हपत्ये मदन्तीरपो ऽधिश्रयत्यन्तर्वेद्यर्षिं निदधाति' परिश्रयन्ति द्वाराणि' पत्नीशाले पत्नीं परिश्रयन्ति'

---

1 Thus all except B, which has शालामद्धमग्र॰।

परिस्तृणन्ति' दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथ पूर्वाꣳ शान्तिमुपयन्ति येषामनुपेता भवत्यथ[1] गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये सावित्रं जुहोत्यन्वारब्धे यजमाने ॥ १ ॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहेति' जुहोत्यदीक्षितस्य' जपति दीक्षितस्याथाभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरस्यध्वरकृद्देवेभ्य इत्यथैनामादायोपोत्तिष्ठत्युत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचेति' प्रैति प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु न इत्यथ भावितां मृदमुपतिष्ठते देवी द्यावापृथिवी अनु मे ऽमꣳसाथामित्यभ्रिया प्रहरत्यृध्यासमद्य मखस्य शिर इति' मखाय त्वेति हरति' मखस्य त्वा शीर्ष्ण इत्युत्तरतः कृष्णाजिने निवपत्युद्ध्योपस्थानमेवमेव द्वितीयꣳ हरत्येवं तृतीयं' तूष्णीं चतुर्थं' पर्येतस्यै शिनध्यथ वराहविहतमुपतिष्ठत इयत्यग्र आसीरित्यभ्रिया प्रहरत्यृध्यासमद्य मखस्य शिर इति' मखाय त्वेति हरति' मखस्य त्वा शीर्ष्ण इत्युत्तरतः कृष्णाजिने निवपत्युद्ध्योपस्थानमेवमेव

---

१ Thus I only. the other MSS भवत्यथ, PH. om. the passag[e] यथ ... भवति ।

द्वितीयꣳ हरत्येवं तृतीयं' तूष्णीं चतुर्थं' पर्येतस्य शिनष्ट्यथ वल्मीकवपामुपतिष्ठते देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीरित्यभिप्रिया महरत्यृध्यासमद्य मखस्य शिर इति' मखाय त्वेति हरति' मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने निवपत्युद्गृह्योपस्थानमेवमेव द्वितीयꣳ हरत्येवं तृतीयं' तूष्णीं चतुर्थं' पर्येतस्यै शिनष्ट्यथोतीकस्तम्बं वादारस्तम्बं वोपतिष्ठत इन्द्रस्यौजो ऽसीत्यभिप्रिया महरत्यृध्यासमद्य मखस्य शिर इति' मखाय त्वेति हरति' मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने निवपत्युद्गृह्योपस्थानमेवमेव द्वितीयꣳ हरत्येवं तृतीयं' तूष्णीं चतुर्थं' पर्येतस्य शिनष्ट्यथ छागापय उपतिष्ठते ऽग्निजा असि प्रजापते रेत इत्यभिमन्त्रदधात्यृध्यासमद्य मखस्य शिर इति' मखाय त्वेति हरति' मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने हृदि प्रश्चोतयत्युद्गृह्योपस्थानमेवमेव द्वितीयं प्रश्चोतयत्येवं तृतीयं' तूष्णीं चतुर्थं' चतुर्थेन सह सर्वम एवैतच्छागापय स्थालेन हृदि परिषिञ्चत्यथैतानतिशिष्टानपो ऽभ्यवहरन्त्यथैव वा प्रकिरन्ति' प्रायश्चित्ताय वा परिशाययन्ति[1]'
॥ २ ॥

अथ प्रवर्ग्यमाददते ऽवनाभ्य मुखान्यनभिप्रश्वसन्तो' न प्रवर्ग्यं चादित्यं चान्तर्दधति' बहवो हरन्तीति विज्ञायते' ऽथैनमानयन्त्येतु ब्रह्मणस्पतिरा देव्येतु सूनृता। अच्छा वीरं

---

१ परिशाययन्ति ।

नयँ पङ्क्तिराधसं देवा यज्ञं नयन्तु न इत्यथैनं खर उपावहरन्नायुर्धेहि प्राणं धेह्यपानं धेहि व्यानं धेहि चक्षुर्धेहि श्रोत्रं धेहि मनो धेहि वाचं धेह्यात्मानं धेहि प्रतिष्ठां धेहि मां धेहि मयि धेहीत्यथैनमश्मकपाले. शर्कराभिरवाञ्जनपिष्टाभिरजलोमैः कृष्णाजिनलोमैरिति संसृज्य मदन्तीभिरुपसृजति मधु त्वा मधुला करोत्विति । पिण्डं करोति मखस्य शिरो ऽसीति । यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यामुपनिगृह्णात्यथ तृतीयं मृदो ऽपच्छिद्य त्रीन्पिण्डान्करोति । तेषामेकं कर्त्रे प्रयच्छति गायत्रो ऽसीति । तेनास्य बुध्नं करोति गायत्रेण त्वा छन्दसा करोमीत्यथैतच्छिष्टायै मृदो ऽर्धं प्रयच्छति त्रैष्टुभो ऽसीति । तेनास्य मध्यं करोति त्रैष्टुभेन त्वा छन्दसा करोमीति । सर्वामन्ततो मृदं प्रयच्छति जागतो ऽसीति । तेनास्य बिलं करोति जागतेन त्वा छन्दसा करोमीति । तं प्रादेशमात्रं पृथुबुध्नं मध्ये लग्नं करोत्यथास्य वेणुकाण्डेन द्विभागमवविध्यति । तदस्य पिन्वनं भवत्यथास्य त्र्यङ्गुले वा चतुरङ्गुले वा रास्नां पर्यस्यति मखस्य रास्नासीत्यथास्य बिलं गृह्णात्यदितिष्टे बिलं गृह्णातु पाङ्क्तेन छन्दसेत्यथैनमादित्येनाभितपति सूर्यस्य हरसा श्रायेत्यथैनं खरे निदधाति । निहितमनुमन्त्रयते मखो ऽसीत्येवमेव द्वितीयं महावीरं करोत्येवं तृतीयं । तूष्णीं पिन्वने रौहिणकपाले चाज्यस्थालीं चाथ या मृदतिशिष्यते तया प्रवाते प्रतिलेपमुपवातयति । तेषूपवातेषूपकल्पयत एकविंशतिं कृष्णो ऽश्वस्य शकृत्पिण्डानभिमथ्य पचनमित्यथाश्मकमादीप्य मुखं महा-

वीरं धूपयति वृष्णो अश्वस्य निष्पदसि वरुणस्त्वा धृतव्रत आधूपयतु मित्रावरुणयोर्ध्रुवेण धर्मणेत्यन्तरतश्च बाह्यतश्च सुधूपितं कृत्वा निदधात्येवमेव द्वितीयं महावीरं धूपयत्येवं तृतीयं तूष्णीं पिन्वने रौहिणकपाले चाज्यस्थालीं चाथोत्तरेण शालामुखबिलमिवावटं खानयति तं पचनेनावस्तीर्य तस्मिन्प्राचो वोदीचो वा महावीरानायातयति पुरस्तात्पिन्वने पश्चाद्रौहिणकपाले चाज्यस्थालीं चाथैनान्पचनेनोपरिष्टात्संप्रच्छाद्य मृदावलिम्पति चतुरङ्गुलमनुद्विग्नमादीपनायाति शिनष्ट्यथोपोषति ॥ ३ ॥

अर्चिषे त्वेति पुरस्ताच्छोचिषे त्वेति दक्षिणतो ज्योतिषे त्वेति पश्चात्तपसे त्वेत्युत्तरतस्तेऽह्ना वा रात्र्या वा पच्यन्ते यदि प्रातरुपोषति सायमुपैति यदि सायं प्रातस्तेषु पक्वेषूपकल्पयते गोपयश्छागापयो धृष्टिमश्मसंदानꣳ[1] शतꣳ संदꣳशं खारीꣳ शिक्यं कृष्णाजिनमित्यथैतत्समादायाभ्यैत्यभीमं[2] महिना दिवं मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् ॥ मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तममित्यथ धृष्टिमादत्ते सिद्ध्यै त्वेति तया सुष्यान्महावीरादङ्गारानुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्येत्यथैनमुच्छ्रयत्युत्तिष्ठ बृहन्भवोर्ध्वस्तिष्ठ ध्रुवस्त्वमित्यथैनमाग्नये प्रति-

---

१ Thus all MSS., the word occurs also elsewhere, Bh. Keś. write संधर्षं ।

२ भ्यैति BT Keś., भ्येति HHFP.

गृहीत्वा दक्षिणेऽवान्तरदेशे हिरण्यं निधाय संपरिस्तीर्याभिजुहोति जिघर्म्यग्निं मनसा घृतेनेत्यथापरं चतुर्गृहीतं गृहीत्वोत्तरेऽवान्तरदेशे हिरण्यं निधाय संपरिस्तीर्यैवाभिजुहोत्या त्वा जिघर्मि वचसा घृतेनेत्यथापोद्धृत्य हिरण्यमभ्रिमादाय पदं परिलिखति परि वाजपतिः कविः परि त्वाग्ने पुरं वयं त्वमग्ने द्युभिरिति तिसृभिः खनति देवस्य त्वा सवितुः प्रसवे ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमिति द्वाभ्यामथोत्तरतः पार्श्वतः संभाराणां प्राचीनाग्राणि तृणानि संस्तीर्य तेषूपरि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणात्यथापां पृष्ठमसीति पुष्करपर्णमाहरति तदुपरिष्टात्कृष्णाजिने निधायाथैने संमृशति शर्म च स्थः संवसाथामिति द्वाभ्यामथापोद्धृत्य पुष्करपर्णमष्टाभिर्मृदꣳ हरति ॥ ३ ॥

पुरीष्योऽसि विश्वभरा इति तासां चतस्रो गायत्र्यश्चतस्रस्त्रिष्टुभः स पिण्डंपिण्डं वैवर्चा हरत्यपि वाष्टाभिरेकमेव पिण्डꣳ हरत्यथैतमवटं[1] विश्वलोपेन पूरयित्वाद्भिरुपसृजति सं ते वायुर्मातरिश्वा दधातूत्तानायै हृदयं यद्विलिष्टम् । देवानां यश्चरति प्राणथेन तस्मै च देवि वषडस्तु तुभ्यमित्यथोपरिष्टात्पुष्करपर्णं मृदि निधाय समुद्गृह्य कृष्णाजिनस्यान्तान्योक्त्रेणोपनह्यति सुजातो ज्योतिषा सह शर्म वरूथमासदः स्वः । वासो अग्ने विश्वरूपꣳ संव्ययस्व विभावसो इत्यथैन-

---

१ Thus only M Bhār, अथैतमवटं all the other MSS

मादायोपोत्तिष्ठत्युद्' तिष्ठ स्वध्वरोर्ध्वं ऊ षु ण ऊतय इति द्वाभ्यामथैनमाहरति स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु। चित्रः शिशुः परि तमांस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गा इत्यथैनं गर्दभ आसादयति स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन्। पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहन इत्यथैनमुपतिष्ठते शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः। मा द्यावापृथिवी अभिशूशुचो मान्तरिक्षं मा वनस्पतीनित्यश्वं पूर्वं नयन्ति' तमनुमन्त्रयते प्रैतु वाजी कनिक्रददित्यन्वञ्चं गर्दभं नानदद्रासभः पत्वा। भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा॥ रासभो वां कनिक्रदत्सुयुक्तो वृषणा रथे। स वामग्निं पुरीष्यमाशुर्दूतो वहादितः॥ वृषाग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियम्। अग्न आयाहि वीतय इत्यथेमे समीचत ऋतꣳ सत्यमृतꣳ सत्यमिति' प्रदक्षिणो वेशं कुर्वते' वैश्यः पृच्छति 'पुरुषाः किं भरथेत्यग्निं पुरीष्यमङ्गिरस्वद्भराम इतीतरे प्रत्याहुरथैनं खर उपावहरन्त्योषधयः[१] प्रतिगृभ्णीताग्निमेतमोषधयः प्रतिमोदध्वमेनमिति द्वाभ्यामद्भिरभ्युक्ष्याश्वगर्दभावुत्सृजन्त्यपो रमने अभ्यवहरन्त्यपि वाद्भिरभ्युक्ष्य भुञ्जते' ॥ ४ ॥ प्रथमः ॥

अथैनं विस्रꣳसयति वि पाजसा पृथुना शोशुचान इत्य-

---

१ Thus M Tr U, अप om HB Ms ˚षेधिष˚ Bs.

२ उपावहरन्त्य˚ B Be

थैनमद्भिरुपसृजत्यापो[1] हि ष्ठा मयोभुव इति तिसृभिरनुष्टुप्छन्दसमथैनमर्मकपालैः शर्कराभिरश्मपिष्टाभिरजलोमैः कृष्णाजिनलोमैरिति संसृजति मित्रः संसृज्य पृथिवीमयच्छाय त्वा संसृजामीति द्वाभ्यामथैनं संभरति रुद्राः संभृत्य पृथिवीमिति। पिण्डं करोति मखस्य शिरोऽसीति। यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यामुपनिगृह्णात्यथ तृतीयं मृदोऽपच्छिद्य त्रीन्पिण्डान्करोति। तेषामेकमुखायै प्रयच्छति संसृष्टां वसुभी रुद्रैरित्यनुमन्त्रयते वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसेत्यतिशिष्टायै मृदोऽर्धं प्रयच्छति सिनीवाली सुकपर्देत्यनुमन्त्रयते रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसेति। सर्वामन्ततो मृदं प्रयच्छत्युखां करोतु शक्त्येत्यनुमन्त्रयत आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसा विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसेत्यथ वै भवति प्रान्याभिर्यच्छत्यन्वन्यैर्मन्त्रयते मिथुनत्वाय। त्र्युद्धिं करोतीति। स यदेव निर्हरति निरनुलिम्पति तेन त्र्युद्धिस्तां प्रादेशमात्रीमूर्ध्वामपरिमितां तिरश्चीं करोत्यथास्यै त्र्यङ्गुले वा चतुरङ्गुले वा रास्नां पर्यस्यत्यदित्यै रास्नासीत्यथास्या अनुदिशमष्टावश्रीरुन्नयति। रास्नासन्धिषु चाश्रिसन्धिषु चाष्टौ स्तनान्करोति। नवाश्रिमभिचरतः कुर्यादिति ब्राह्मणमस्तनां नवमीं करोत्यथास्यै बिलं गृह्णात्यदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसेत्यथैनां खरे निदधाति कृत्वाय

१ Thus M Be Tr HU (pr m), Bhav, उपावसृजत्य॰ BU (sec m) Ms

या मह्यीमुखामित्यान्तादनुवाकस्यैवमेव द्वितीयां करोत्येवं तृतीयां तूष्णीं पञ्च चर्षभाङ्क्तिसश्च[1] मण्डलेष्टकाः। ॥ ५ ॥

अथ या मृदतिशिष्यते तया प्रवाते प्रतिलेपमुपवातयति। तासूपवातासूपकल्पयत एकविंशतिं वृष्णो अश्वस्य शकृत्पिण्डानभिमग्निं पचनमित्यथाश्वशकमादीप्य मुख्यामुखां धूपयति वसवस्त्वा धूपयन्तु गायत्रेण छन्दसेति प्रतिपद्य वरुणस्त्वा धूपयत्वित्यातो ऽन्ततश्च वाह्यतश्च। सुधूपितां कृत्वा निदधात्येवमेव द्वितीयां धूपयत्येवं तृतीयां तूष्णीं पञ्च चर्षभाङ्क्तिसश्च मण्डलेष्टका। अथोत्तरेण शालामुखविलमिवावटं खानयत्यदितिस्त्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थे ऽङ्गिरस्वत्खनत्ववटेति। तं पचनेनावस्तीर्य तस्मिन्मुख्यामुखां प्रदणक्ति देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे ऽङ्गिरस्वद्दधतूख इत्येवमेव द्वितीयां प्रदणक्त्येवं तृतीयां तूष्णीं पञ्च चर्षभाङ्क्तिसश्च मण्डलेष्टकास्ताः प्राचीर्वोदीचीर्वायातयत्यथैनाः पचनेनोपरिष्टात्संप्रच्छाद्य मृदावलिम्पति[2]। चतुरङ्गुलमनुदिग्धमादीपनायातिशिनष्ट्यथोपोषति[3] ॥ ६ ॥

धिषणास्त्वेति पुरस्ताद् ग्नास्त्वेति दक्षिणतो वरूत्रयस्त्वेति

---

१ Here and infra some of the MSS. present the fem. ॰चर्षभाङ्क्तिः॰ (or च चर्षभाङ्क्तिः॰); again some of the MSS om. the first च।

२ Thus (cp Vol I 269, 8) MUH Be, अभिलिम्पति B Bu Tr Ms Keś.

३ Before चतुर॰ Be B Bu Tr U (see m) Ms ins ताम्।

पश्चाज्जनयस्त्वेत्युत्तरतो ' ऽथैनाः परिददाति मित्रैतामुखां पचैषा मा भेद्येतां ते परिददाम्यभित्त्या इति ' ता अङ्गा वा राज्ञा वा पच्यन्ते ' यदि प्रातरुपोषति सायमुपैति यदि सायं प्रातस्तांस्तु पश्चादुपकल्पयते गोपयश्छागापयो धृष्टिमश्मसंदावꣳ सतꣳ संदꣳशं खारीꣳ शिक्यं कृष्णाजिनमित्यैतस्मादायाभ्यैत्यभीमां महिना दिवं मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् ॥ मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तममित्यथ धृष्टिमादाय मुख्याया उखाया अङ्गारानुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्येत्यथैनामुच्छ्रयत्युत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमित्यथैनामाग्नेये प्रतिष्ठापयत्यपद्यमाना पृथिव्याशा दिश आपृणेत्यथैनाꣳ संदꣳशेन परिगृह्य सते ऽवधाय छागापयसाच्छृणत्ति ॥ ७ ॥

वसवस्त्वाच्छृन्दन्तु गायत्रेण छन्दसेति प्रतिपद्य विश्वे त्वा देवा वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन छन्दसेत्याततो ऽन्तरतश्च बाह्यतश्च ' स्वाच्छृणां कृत्वा गोपयसाभिविष्यन्दयत्येवमेव द्वितीयामाच्छृणत्त्येवं तृतीयां तूष्णीं पञ्च घर्मभाꣳस्तिसृ मण्डलेष्टका ' अथ यदि विधुर्वा प्रदरो वा जायते ऽश्मचूर्णानि छागापयसि संप्रकीर्य तैः प्रत्युच्योल्मुकेनाभितपति ' सꣳ हैव रोहति ' यद्यु वै सर्वश एव भिद्यत[1] एतान्येव[1] कपालान्य-

---

१ भिद्येत सान्येव Bc, भिद्येतैसान्येव U Tr (but cp Vol I 270, 14).

वाञ्जनं पिष्ट्वा यैषा न्यग्रोधायश्चित्ताय परिश्रेते तया संसृज्य
कृत्वा पश्चात्कृत्य निदधाति। तासां यदा प्रसव उपर-
मत्यथैनाः खार्याᳬ समवधाय कृष्णाजिनेनोपरिष्टात्संप्रच्छा-
द्योत्तरे शालाखण्डे शिक्य आसजति। ता आ काला-
त्परिशेरे॥ ८ ॥ द्वितीयः॥ १

अथैतस्मिन्नेव पूर्वपक्षे वायव्येन पशुना यजते। तस्य तदुप-
क्लृप्तं भवति यत्पशुना यक्ष्यमाणस्य संयामे हनयोरश्वस्य च वैश्यस्य
च शिरसी। दीव्यन्त ऋषभं पचन्ते। वृष्णिं च बस्तं चाहर-
न्त्येतत्सर्पशिरो। ऽयास्यैषा पूर्वेद्युरेव पाशुबन्धिकी वेदिर्विमिता
भवति। तां परिस्तीर्य सम्भयजुर्हरतीदमेव प्रसिद्धं पौरो- १०
डाशिकं निर्वपणं तूष्णीं चतुर्थं। पूर्वं परियाद्यं परिस्तृणाति।
करणं जपत्युद्धन्त्युद्धृतादाग्नीध्रश्चिर्हरति। यदाग्नीध्रश्चिर्हरत्यथ
चात्वालस्थारता चात्वालं परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं
निवपत्युत्तरमाभिमुखाघाग्नेराहृताग्निं प्रणयंत्यग्निवत्युत्तरं परि-
याद्यं परिगृह्य योयुपिला निर्यक्षᳬ स्फ्यᳬ ध्यात्वा संप्रैषमाह ११
प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवᳬ स्वधितिᳬ स्रुचश्च
संमृड्ढि तूष्णीं पृषदाज्यवहणीं पत्नीᳬ संनह्याज्येन च दध्ना
चोदेहि प्रतिप्रस्थातः पशुश्रीर्पाणि विद्धीत्यध्वर्युरेव प्रसिद्धं
पाशुबन्धिकं कर्म चेष्टत्यथ प्रतिप्रस्थाता याचत्येकविंशति

---

१ Some of the MSS ins च after स्रुवं and after स्वधितिं, some only after स्रुवं. M om स्वधितिं and has स्रुवं स्रुचश्च; cp Vol I. 112, 7.

प्राक्पर्णशाखां मृत्पिण्डमुदपात्रमुत्कुषीꣳ[1] सप्तधा विहितां वल्मीकवपाꣳ संदꣳशमित्येतत्समादाय पशुशीर्षाण्यभ्येति दक्षिणत एतत्पुरुषशिर उपशेते ऽथैतेतराण्यथ प्राचीनावीतं कृत्वा सप्तभिर्माषैः पुरुषशिरः परिकीर्य चिरपक्वैः पर्णशाखया परिकर्षति ॥ ९ ॥

अहरहर्नयमानो गामश्वं पुरुषं जगत् । वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यम इत्यपरैः सप्तभिः परिकीर्यैव परिकर्षति वैवस्वते विविच्यन्ते यमे राजनि ते जनाः । ये चेह सत्येनेच्छन्ते य उ चानृतवादिन इत्यपरैः सप्तभिः परिकीर्यैव परिकर्षति ते राजन्निह विविच्यन्ते ऽथा यन्ति त्वामुप । देवाꣳश्च ये नमस्यन्ति ब्राह्मणाꣳश्चापचित्यतीत्यथादत्ते दक्षिणेन वल्मीकवपाꣳ सव्येन संदꣳशेन पुरुषशिरः प्राणैः प्राणान्संनिधायाग्नये वल्मीकवपां निदधात्यथैतत्पुरुषशिरो ऽभ्युद्योत्कुष्य[2] प्रक्षाल्य मृदाभिलिम्पत्यनभिलिम्पन्प्राणानथैतराणि त्रये-

---

१ Thus (उत्कुषीꣳ or °षीं) Tr Be H Bu U Bhav (MS Burnell), Ms and Msc (both the Burnell MS and the MS of Tubingen); उत्कर्षीं Bhav (Cidambara MS), उत्कर्षिं B, M उत्कुषीं or उत्कुषीं। According to the Bhāsya it is सुमंबद्धा इष्टैवका; Msc · उत्का इषैः समाबद्धा दीर्घाकारोत्कुषी भवेदिति गोपालः।

२ Thus U (pr m) Bhav, अभ्युद्योत्कुष्य Tr; अभ्युत्कुष्य Be U (sec m), अभ्युत्कुष्य B Ms, अभ्युद्य only M; Bu is corr and in H this whole chapter is missing

ण्येव निष्ठितमनभ्युत्कुथ्यैव[1] प्रक्षाल्य मृदाभिलिम्पन्ननभिलिम्पन्तः प्राणानेवैनान्यद्भिः प्रोक्षयतो[2] निदधाति । तान्या कालात्परिशेरे[3] । ॥ १० ॥

अथ पशोः सामिधेनीकल्पः । प्र वो वाजा अभिद्यव इत्येकादश । समास्त्वाग्न ऋतवो वर्धयन्त्विति द्वे । तासां ज्योतिष्मतीमपोद्धृत्य नव धाय्यालोके दधात्यथ पृथुपाजवत्यौ धाय्ये दधात्यथ युक्ष्वा हि देवहूतमानित्येतां दधाति । ताः पराचीरनूच्यमानाश्चतुर्विंशतिः संपद्यन्ते । ज्योतिष्मतीं त्वेवोत्तमामन्वाहाथ हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयत्यथात आप्रीणामेव सौमापौष्ण्या अस्य समिधो भवन्तीति द्वादश । तासां तानूनपातीमपोद्धृत्य नाराशंसीं वसिष्ठानां[4] दधात्यपो-

---

1 Thus only BU (sec. m.); Ms again अभ्युत्कुथ्यैव; thus also Bu with var. r. अभ्युत्कुथ्यैव; अभ्युत्थैव M Tr.; Bhav., अथैव संधापयति तापयित्वा प्रक्षाल्य मृदाभिलिम्पति; as Bhav. has explained उत्कूय, supra p. 9, l. 14, by प्रताप्य शोषयित्वा perhaps here simply उत्कुथ्यैव without अभि is to be read.

2 Thus M only in accordance with Bhav (अद्भिः प्रोक्षयतः पशोः प्रोक्षणेन सह यथा प्रोक्ष्यते तथा निदधाति); प्रोक्षन्दक्षिणतो Ms and Msc. (but the commentary runs . अद्भिः प्रोक्षणाय दक्षिणतो निदधाति। पशुप्रोक्षणेन यथा प्रोक्षितानि भवन्ति तथा दक्षिणतः पशोर्निदधातीति यावत्); प्रोक्षन्दक्षिणतो U; प्रोक्ष दक्षिणतो Bu Tr B Be; H om. the whole chapter.

3 The last sentence is omitted by M Tr U, is it commented upon by Bhav and Ms

4 वासिष्ठानां some of the MSS

इत्य नाराशंसीं तानूनपातीमन्येषां गोत्राणामथ पीवो ऽन्नाँ रायें ऽनु यमिति वपायै यः प्राणतो य आत्मदा इति पशुपुरोडाशस्य प्र वायुमच्छा नो नियुद्भिरिति हविष । इति[1] नु यदि मिश्रो भवति । यद्यु वै सर्ववायव्य[2] एव भवति पीवो ऽन्नाँ रायें ऽनु यमित्येतासां द्वे वपायै द्वे पशुपुरोडाशस्य द्वे हविषो । ऽथ यदि सर्वप्राजापत्य[3] एव भवति यः प्राणतो य आत्मदा इत्येतासां द्वे वपायै द्वे पशुपुरोडाशस्य[4] द्वे हविषः । सर्वसंस्थां पशोः कुर्वन्त्यथैतानि पशुशीर्षाण्यभिपर्यग्निकृतान्युत्तरे शालाखण्डे शिक्येष्वासजत्यथैनत्सदंशिर स्यन्द्यया विग्रथ्य शिक्यपाशे प्रबध्नाति । तान्या कालात्परिशेरे । ॥ ११ ॥ तृतीयः ॥

अथापरपक्षः प्रतिधीयते । स उपकल्पयत इष्टकाश्चाग्निदक्षिणाश्च [5]यदि रात्रिशतं चेष्यमाणो भवति । यद्यु वै संवत्सरशतं दीर्घो ऽध्वाजिरिति नाद्रियेत । स उपकल्पयत औदुम्बरीमुख्यासन्दीं तस्याः प्रादेशमात्राः पादा भवन्त्यरत्निमात्राणि शीर्षाण्यनूच्यानि सा मौञ्जीभी रज्जुभिर्व्यूता भव-

---

१ om B Be U Ms

२ Thus M, all the other MSS सर्वे वा॰, but cp xvi 11 and 19.

३ Thus again only M, सर्वः प्रा॰ the other MSS

४ पशु॰ fails in some of the MSS

५ All the MSS exc B and Ms insert अथ before यदि; but the clause यदि रात्रिशतं चे॰ भ॰ seems to be the protasis of the foregoing स उपक॰ इष्ट॰; Msc ॰ग्निदक्षिणाश्चोपकल्पयत इति पूर्वेणान्वयः ।

त्र्येकशराभिः शलाकाभिस्तीर्णां मृदावलिप्ता[1] षडुद्यामं द्वादशो-
द्यामं वा मौञ्जꣳ शिक्यं मुञ्जकुलायं क्रुमुकमाज्यसंयुतं वैक-
ङ्कतीं च शमीमयीं च समिधौ सप्तौदुम्बरीः समिधस्तिस्रो
नानावृक्ष्या एकविꣳशतिनिर्बाधꣳ रुक्मं । सज्ञाता आग्निष्टो-
मिकाः संभारा । जुष्टे देवयजने शाला कारिता भवत्यथेमं
तीर्थादानीय पवयित्वा चित्रवियमग्निदीक्षणीयामिष्टिं निर्वप-
त्याग्नावैष्णवमेकादशकपालमदित्यै घृते चरुं वैश्वानरं द्वादश-
कपालमिति । तस्मै तावन्त्युत्यौदन्ति यावन्ति दीक्षणीयाया ।
अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य
ध्रुवामाप्याय्याज्यस्थाल्यां प्रत्यवनीयाज्यस्थाल्याः स्रुवेणोपघात- १
मग्निदीक्षाकृतीर्जुहोति ॥ १२ ॥

आकूतिमग्निं प्रयुजꣳ स्वाहा मनो मेधामग्निं प्रयुजꣳ
स्वाहा चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहा वाचो विधृतिमग्निं
प्रयुजꣳ स्वाहा प्रजापतये मनवे स्वाहाग्नये वैश्वानराय स्वाहे-
त्यथ स्रुचि चतुर्गृहीतं गृहीत्वाज्यस्य पूर्णाꣳ स्रुचमौद्ग्रहणं[2] १
जुहोति विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषु-
ध्यसि द्युम्नं वृणीत पुष्यसे स्वाहेत्यथैतत्पूर्णपात्रमन्तर्वेदि निनय-
त्यथापरेणाहवनीयं पर्याहृत्य यजमानाय प्रयच्छत्यथ मुख्या-

---

१ Thus MH Bhav., मृदाभिलि॰ B Be U Ms Msc.

२ Thus M Tr Bo Bu U Ms; the other MSS. चौद्गृह॰ ; but cp. TS vi 1 2 4

उखां याचति। तस्याꣳ शकृत्पिण्डान्पूतितृणानीति संप्रकीर्याव्यसुवं प्रत्यस्याहवनीयस्यान्तमेष्वङ्गारेषु प्रदहति मा सु भित्था दृꣳहस्वेति द्वाभ्यामथैनां परिददाति मित्रैतामुखां तपैषा मा भेद्येतां ते परिददाम्यभित्त्या इत्यथ वै भवति यदि भिद्येत तैरेव कपालैः सꣳसृजेदिति। सा यदि भिद्येत[1] एतान्येव[1] कपालान्यवाञ्जनं पिष्ट्वा यैषा मृत्प्रायश्चित्ताय परिशेते तया सꣳसृज्य कृत्वा पक्त्वाप्सु निदधात्यथान्यां प्रदहत्यथ वै भवत्यम्बरीषादन्नकामस्यावदध्यादित्यथ वै भवति यं कामयेत यजमानं भ्रातृव्यमस्मै जनयेयमित्यन्यतस्तस्याहृत्यावदध्यादित्यथ वै भवति यो गतश्रीः स्यान्मथित्वा तस्यावदध्यादित्यथ वै भवति यो भूतिकामः स्याद्य उखायै संभवेत्स एव तस्य स्यादिति। स य एवैष उखायै संतापाज्जायते तस्मिन्मुञ्जकुलायमवदधाति या ते अग्न ओजस्विनी तनूरोषधीषु प्रविष्टा तां त एतेनावयजे स्वाहेत्यथ क्रुमुकमाज्यसंयुतमवदधाति द्रप्सः सर्पिरासुतिरित्यथ वैकङ्कतीं च शमीमयीं च समिधावादधाति परस्या अधि संवत इति वैकङ्कतीं परमस्याः परावत इति शमीमयीमथ सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुपतिष्ठते। ऽथ पञ्चौदुम्बरीः समिध आदधाति ॥ १३ ॥

---

१ भिद्येतैतान्येव U Bo Ms, the others (exc B which is corrupt and Ba, which is incomplete) भिद्यत एतान्येव; cp supra p 7, 20

यदग्ने यानि कानि च यदत्त्युपजिह्विका राचिङ्गराचिमप्यावं नाभा पृथिव्या याः सेना अभीत्वरीरित्यथैनं पञ्चर्चेन राचोघ्नेनोपतिष्ठते कृणुष्व पाजः प्रसितिं न पृथ्वीमित्यथ तिस्रो नानावृक्ष्याः समिधो ऽभ्यादधाति दंष्ट्राभ्यां मलिम्लूनित्याश्वत्थीं ये जनेषु मलिम्लव इति वैकङ्कतीं यो अस्मभ्यमरातीयादिति शमीमयीमथ संशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तरे औदुम्बरी वाचयन्नेवाभ्यादधात्यथ कृष्णाजिने यजमानं वाचयति ' मुष्टी चैव न करोति वाचं च न यच्छत्यथैतामासन्दीं व्यत्तशिक्यपाशां जघनेनाहवनीयं निदधाति ' तस्यामिण्ड्वाभ्यां परिगृह्योख्यमासादयति ॥ १४ ॥

मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनौ बिभर्तुखा । तां विश्वैर्देवैरृतुभिः संविदानः प्रजापतिर्विश्वकर्मा युनक्त्वित्यथासीन उत्तरनिर्बाधꣳ रुक्मं प्रतिमुञ्चते दृशानो रुक्म इत्यथ शिक्यपाशं प्रतिमुञ्चते विश्वा रूपाणि प्रतिमुञ्चते कविर्नक्तोषासेति द्वाभ्यां ' तूष्णीं कृष्णाजिनमुत्तरमथैनमवेक्षते सुपर्णो ऽसि गरुत्मान्त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं[1] पुच्छं छन्दाꣳस्यङ्गानि धिष्णियाः शफा यजूꣳषि नामेत्यथैनमुद्गृह्णाति सुपर्णो ऽसि गरुत्मान्दिवं गच्छ सुवः पतेति ' पुरस्तादेवासीनो

---

१ यज्ञायज्ञीय T. H., M abbreviates

दीर्घाः शिक्यपाशाः[1] कारिता भवन्ति । सो[2] ऽच[2] नैव[2] सक्ति[2] क्रमते ऽपि वैनमुपोदच्छते ॥ १५ ॥

विष्णोः क्रमो ऽस्यभिमातिहा गायत्रं छन्द आरोह पृथिवीमनुविक्रमस्व निर्भक्तः स यं द्विष्म इति चतुर्भिरनुच्छन्दसं । तृतीये चतुर्थमनुवर्तयति । न चतुर्थाय प्रक्रामति । नाहवनीयमुपात्येत्यथाक्रन्ददित्येतामन्वाहाय दक्षिणमꣳसमभि पर्यावर्तते ऽग्ने ऽभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सह रय्येति चतसृभिरथोदङ् पर्यावृत्य कृष्णाजिनमुन्मुच्य शिक्यपाशमुन्मुञ्चत उदुत्तमं वरुण पाशमस्मदित्यथैनमाहरत्या त्वाहार्षमग्ने बृहन्नुषसामूर्ध्वो अस्थादिति द्वाभ्यामेव यं कामयेत राजन्यꣳ राष्ट्रꣳ स्यादिति तं मनसा ध्यायेद्राष्ट्रमेव भवतीति ब्राह्मणमथैनं यथाहृतं प्रतिपर्याहृत्यान्तर्वेद्यासादयति सीद त्वं मातुरस्या उपस्थ इति चतसृभिः सहꣳसाभिश्च सुष्टी च करोति वाचं च यच्छत्यथास्मै व्रतं प्रदायाग्नपतीयाꣳ समिधमभ्यादधाति वा जपति वाचस्पते ऽन्नस्य नो देहीत्यथोख्यमुपसमिन्द्धे येन देवा ज्योतिषोर्ध्वा उदायन्निति । स यावत्सत्वो ऽस्मै व्रतं प्रदास्यन्भवत्येवमेवाग्नपतीयाꣳ समिधमभ्यादधाति वा जपति वैवमुख्यमुपसमिन्द्धे । ऽथ प्रातरुदित

---

1 Thus M Tr Be BHU (sec. m.). ॰पाशः Ms. U (pr. m.) Bhav

2 Thus M (only सर्वो) Be BHU Ba Ms Bhav (one MS); सोऽपैव-सक्ति Tr Bhav (another MS) Kes., according to Msc. the words are: सो त्व वा एव सति (sc. ऽत्र)।

आदित्ये विसृष्टायां वाचि वात्सप्रेणोपतिष्ठते दिवस्परि प्रथमं जज्ञे अग्निरित्येतेनैकादशर्चेन ' स एवमेव पूर्वेद्युः प्रक्रामत्युत्तरेद्युरुपतिष्ठते । ऽथास्योपवसथीये ऽहन्यात्मन्संपद्यते ' ॥ १६ ॥ चतुर्थः ॥

अथातः प्रयाणस्यैव मीमांसा ' दीक्षितं वायोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षते संसृजन्ति प्रते ' संवपन्ति प्रतदुभयोर्वत्सावादधति यदाधेयं भवति नीडे गार्हपत्यं प्रउग आहवनीयमित्यंयोरुपचक्षत[1] उद् त्वा विश्वे देवा इत्यग्नेन मनसः प्रउग आसादयति सीद त्वं मातुरस्या उपस्थ इति चतसृभिः सहस्राभिरेतानासन्दीपादाभ्याकेषु यथासुत विनिदधन्ति ' मध्यमे वंशे शिक्यपाशं प्रपद्यन्त्यपि वारण्योरग्नीन्समारोह्य प्रयाति भद्रादभि श्रेयः प्रेहि प्रेदग्ने ज्योतिष्मान्याहीति इत्यामंथ यत्र च उत्सर्जत्यक्रन्ददित्येतामन्वाहोषावसिते एतानुषिकाः समिधमभ्यादधाति समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन स्वाहेति गायत्र्या ब्राह्मणस्य प्रपायामग्निर्भरतस्य शृण्व इति त्रिष्टुभा राजन्यस्य ' स यावत्तत्त्वः प्रयास्यन्भवत्येवमेवैतत्सर्वं करोति ' ॥ १७ ॥

अथातो भक्षन एवातिष्टहस्य मीमांसा ' भक्ष चेदतिवर्धते स उपकल्पयते सतमयोर्द्वौ संदंशमित्येतत्समादाय

---

१ After आहवनीयम् M Tr H Bu om इति; Msc : दक्षिणतो दक्षिणाग्निं स्थापयन्तीति इतिशब्द सूचयति; in the collateral passage (Vol I, p 165, 11) however, no इति is found

यथापस्तृणन्ति सोख्या । अथैतमग्निꣳ संदंशेन परिगृह्य मतेऽवधायायोदर्याप्सु भस्म प्रवेशयत्यापो देवीः प्रतिगृह्णीत भस्मैतदप्स्वग्ने सधिष्टव गर्भो ऽस्योषधीनामिति तिसृभिरनुष्टुप्छन्दसमथैनं ज्योतिष्मतीभ्यां प्रत्यवदधाति प्रसद्य भस्मना योनिं पुनरासद्य सदनमपश्चेति द्वाभ्यामथ पुनरूर्जा सह रय्येति द्वाभ्यां पुनरुदैत्यथोख्यमुपसमिन्द्धे[1] पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्यथैनं यथाहृतं प्रतिपर्याहृत्य यजमानायतने तिष्ठन्नुपतिष्ठते बोधा स बोधीत्यान्तादनुवाकस्य । स यावत्कालो भस्मातिवर्धत एवमेवैतत्सर्वं करोत्यथातः कालायैवोपशेते संभारेभ्यः । ॥ १८ ॥ पञ्चमः ॥

अथातः क्रयस्यैवोपवसथः पर्यास्रवते । स उपकल्पयते पञ्चशतमिष्टका अपरिमिता अपस्या नैर्ऋतीः कृष्णास्तिस्रस्तुषपक्वा भस्म पुरीषमूषान्सिकता इत्यथोपवसथीयेऽहन्देवयजनमध्यवस्यतीदमगन्मापेतेति द्वाभ्यामथ महावेदिं विमिमीत एतानेव व्यायामः प्रक्रमान्प्रक्रम्यारत्न्या मानेन प्रमाय समन्ताꣳ रज्ज्वा परितनोति । पृष्ठ्यामातनोत्यथैतमग्निं प्रत्यञ्चं यूपावटीयाच्छङ्कोर्विमिमीते पुरुषमात्रेण वेणुना[2] समपक्षपुच्छमरत्निना[2] पक्षौ द्राघीयांसौ भवतः । षड्विधं वा सप्तविधं वा द्वादशविधं वा यावद्विधं वा चेष्यमाणो भवत्यथैनमरत्न्या

---

१ उदैति only MH, cp TS ४ 2 2 5, उदेति all the other MSS

२ वेणुमात्रपक्ष॰ and अरत्निना वा M

मानेन प्रमाय समन्तꣳ स्फ्यया परितनोत्यनुस्फ्यं लेखां लिखत्यपोद्धृत्य स्फ्यां कर्षूः खानयन्त्युच्छ्रयन्त्यपरस्याः दक्षिणतश्च पश्चाच्च वर्षीयसीः कुर्वन्त्येतावदेवैतदहः कर्म क्रियते वसन्त्येताꣳ रात्रिमथाध्वर्युरपररात्र आहुत्य सꣳशास्ति चितन-मतं दोहयतेत्यथैतमग्निꣳ मते यमुष्य दक्षिणतो ज्वलयन्त आसते ऽथैतदग्न्यायतनꣳ शकृत्पिण्डेन परिलेपयति तस्मिꣳस्ततः प्राचीरिष्टका आयातयति द्वे पुरस्तात्समीची द्वे पश्चात्समीची अथैनं प्रदक्षिणं चयोदगभिरिष्टकाभिः परिचिनोत्यन्विष्टकं लेखां लिखत्यपोद्धृत्येष्टकाः कर्षूः खानयन्त्युच्छ्रयन्त्यपरस्याः दक्षिणतश्च पश्चाच्च वर्षीयसीः कुर्वन्ति ॥ १९ ॥

अथ साम्यामात्मन्यग्निं[1] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति श्वेतमश्वमभिमृश्यान्तःशर्करमिमामुपदधाति प्रजापतिष्ट्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ संभारान्निवपत्यग्नेर्भस्मासीति भस्माग्नेः पुरीषमसीति पुरीषꣳ संज्ञानमसि कामधरणमित्यूषान्मयि ते कामधरणं भूयादिति सिकता अथैनान्संप्रयौति सं या वः प्रियास्तनुवः सं प्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो ममेत्यथैनान्कल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः । कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रता इत्यथोर्ध्वचित उप-

1 Thus MB Bo U Tr, Bhav.; साम्यग्निं H.

दधाति चित स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया देवतयाङ्गिरस्वद्ध्रुवाः सीदतेत्यथानुव्यूहत्याप्यायस्वेति गायत्र्या ब्राह्मणस्य सं ते पयाꣳसीति त्रिष्टुभा राजन्यस्य ' यथासुष्टु यथाशर्करमनुव्यूहति ' तस्मिꣳश्चतस्रः प्राचीर्याजुषीरुपदधाति ॥ २० ॥

अयꣳ सो अग्निरग्ने दिवो अर्णमच्छा जिगास्यग्ने यत्ते दिवि वर्चः पृथिव्यां पुरीष्यासो अग्नय इति ' द्वे पुरस्तात्समीची इडामग्न इति दक्षिणामयं ते योनिर्ऋत्विय इत्युत्तरां ' द्वे पश्चात्समीची चिदसीति दक्षिणां परिचिदसीत्युत्तरामथैनं प्रदक्षिणं त्रयोदशभिर्लोकंपृणाभिः परिचिनोति लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निति ' तयादेवतं करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इत्यथावद्रुत्य कृष्णमश्वमभिमृश्य तनुपुरीषमुपदधाति पृष्ठो दिवीति ' तथादेवतं कृत्वा सूददोहसं करोतीति न्वा इयं प्रथमा चितिर्निष्ठीयत ' एवमेव द्वितीया निष्ठीयत एवं तृतीयैवं चतुर्थ्येवं पञ्चमी ' तान्यदि[1] चेय्यत आदित्यो ऽभ्युदियाद्वाचंयमो ऽध्वर्यु यजमानो ऽन्वारभत ' उख्यमेवाध्वर्युरादत्ते प्रतिसमेधनीयं प्रतिप्रस्थाता ' तौ पुरस्तात्प्रत्यञ्चौ समितमिति चतसृभिः संनिवपतो ' ऽथ शिक्यादुखां निरूहति ॥ २१ ॥

---

१ Thus (तान्) M Tr H Bhav. (तानध्वर्युब्रह्मयजमानान् according to Bhav.), ता यदि B Be Bu U M4 (ताः पञ्च चितीः according to Msc)

मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा। तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चत्विति। तां नावेक्षेतेत्याहुः शुचत्येव हि भवतीति। तस्मान्न्यत्रावेक्षमाणो[1] दधिद्रप्सानभ्यस्यत्यमुं[2] ते शुचि दधामीति वा तूष्णीं वा थैनाꣳ सिकताभिः पूरयित्वा दर्भोपरिष्टात्संप्रच्छाद्योत्तरे शालाखण्डे निदधात्येवमेव द्वितीयां पूरयत्येवं तृतीयां। ता अा कालात्परिशेरे। ऽथ नैर्ऋतीं शिक्यमादत्ते यदस्य पारे रजसः शुक्रं ज्योतिरजायत। तन्नः पर्षदति द्विषस्त्यथ यावति नैर्ऋतीः कृष्णास्तिस्रस्तुषपक्का अासन्दीꣳ[3] रुक्मञ्च प्रबन्धनमुद्पात्रमित्येतन्समादाय दक्षिणया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणꣳ स्यात् भवति प्रदरो वा। तदेतत्पराचीनपाशꣳ शिक्यं न्यस्यत्यग्ने[4] वैश्वानर स्वाहेति। शिक्यपाशमनु पराचीर्नैर्ऋतीरुपदधाति नमः सु ते निर्ऋते विश्वरूपे यत्ते देवी निर्ऋतिराबबन्ध यस्यास्ते अस्याः क्रूर अासञ्जुहोमीत्युपास्यत्यासन्दीꣳ रुक्मञ्च प्रबन्धनमभ्योपनिदधाते ऽसुन्वन्तमयजमानमिच्छ देवीमहं निर्ऋतिं वन्दमान इति द्वाभ्यामथापो व्यतिषिच्य पराञ्च पाप्मानमवेक्षमाणा

१ अन्यमैवावेक्ष° Bhav., अन्यमवेक्ष° Tr.

२ °म्यस्तम् U (sec. m.) Ms, Dvaidha and probably also M; ह्यं Bo H Tr U (pr. m.). Bhav., Kes.

३ M ins., perhaps rightly, शिक्यं।

४ Thus Tr Bu U (sec. m.) Ms Bhav.; निदधाति M H D B... (pr. m.)

आयन्ति । हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्य गार्हपत्यमुपतिष्ठन्ते निवेशनः संगमनो वसूनामित्याहवनीयमु हैक उपतिष्ठन्ते ऽयमितो ऽधि गार्हपत्यो भविष्यतीति । ॥ २२ ॥ षष्ठः ॥

अथ प्रायणीयेन चरति । प्रायणीयेन चरित्वा पदेन चरति । पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्य प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथोपनिष्क्रम्य[1] संप्रेष्यमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय त्रिवत्सव्रतं प्रयच्छेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां । त्रिवत्सव्रतं प्रयच्छति[1] । स पुच्छादेवाचे चतुरः प्रतीचः प्रक्रमान्प्रक्रामति दक्षिणा पञ्चमं । तत्शङ्कुं निदधाति । स उपरवाणां कालो । ऽथ महावेद्या उत्तराद्वंसीयाच्छङ्कोर्वेद्यन्तेन द्वादश प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं त्रयोदशं । तदाग्नीध्र उपसीदति । स उत्करस्य कालो । ऽथोपरवाणां कालात्स्तम्बयजुर्हरतीदमेव मयिद्गं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण शालां तिष्ठन्संप्रेष्यमाह वेदिकारा वेदिं कल्पयतेति । यथासंप्रैषं ते कुर्वन्त्यथ कार्ष्णाजिनीरुपानह उपमुञ्चन्ते चिते त्वेत्यध्वर्युरचिते त्वेति प्रतिप्रस्थाता सनश्चिते त्वेति ब्रह्मा तपश्चिते त्वेति यजमानश्चिते त्वा चिते त्वेत्येव वा सर्वे । अपि वा तूष्णीमेवाथ याचति धनुर्बाणवस्तुरो ऽसन् ऐन्द्रीमिष्टकां विभक्तिमुदपात्रं दर्भस्तम्बं दूर्वामाज्यस्थालीं सस्रुवामित्येत-

1 The clause अथोपनिष्क्रम्य ..प्रयच्छति is not found in M Tr H

स्तमादायोत्तरे श्रोण्यन्ते संसादयन्त्यथ[1] द्वाभ्यामात्मन्नग्निं[2] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति श्वेतमश्वमभिमृश्यान्तःशर्करमिमामुपदधाति प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथादत्ते धनुर्बाणवच्चतुरो ऽस्मन इत्येतत्समादाय जघनेन दक्षिणेनाग्निं परीत्यापरेण यूपावटीयं शङ्कुं तिष्ठन्धनुरधिज्यं कृत्वायत्यान्तःशर्करमिषुं निहन्ति ॥ २३ ॥

इन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पश इत्याहृत्याश्मानमुपदधाति यो नः पुरस्तादघायुरभिदासत्येतं सो ऽश्मानमृच्छत्वित्यथ दक्षिणस्य पक्षस्य दक्षिणे पक्षोपस्नव[3] आयत्यान्तःशर्करमिषुं निहन्त्याहृत्याश्मानमुपदधाति[4] यो नो दक्षिणत इत्यथ पुच्छस्यापरे पुच्छोपस्नव[3] आयत्यान्तःशर्करमिषुं निहन्त्याहृत्याश्मानमुपदधाति यो नः पश्चादित्यथोत्तरस्य पक्षस्योत्तरे पक्षोपस्नव[3] आयत्यान्तःशर्करमिषुं निहन्त्याहृत्याश्मानमुप-

---

1 Thus (plural) Tr U Be B Ms (sc. परिकर्मिणः according to Mse); °सादयत्यथ MH.

2 Thus M Tr Be Ms; आत्मन्न° H; आत्मं° B.

3 Instead of उपस्नव (cf. Sulba-sūtra 6, where, however, the var. r. उपप्लव and उपसव, cp Lāty. I. 5.7, Drāhy. II. 1.10, are found) the MSS have mostly उपप्लव or उपस्नव ।

4 Here Bu breaks off; here and infra M Tr U (pr. m.) every time निहत्याहृत्या° ।

दधाति यो न उत्तरत इति ' द्विरुपदधातीति ब्राह्मणं ' तथादेवतं कृत्वा सूददोहसः[1] करोत्यथैतामैन्द्रीमिष्टकामाक्रमणं प्रत्युपदधाति स इं पाहि य ऋजीषी तरुत्रो यः शिप्रवान्वृषभो यो मतीनाम् । यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः स इन्द्र चित्राꣳ अभितृन्धि वाजानिति ' तथादेवतं कृत्वा सूददोहसं करोत्यथ[2] दक्षिणतो विभक्तिमुपदधात्यग्न आयाहि वीतय इति ' तथादेवतं कृत्वा सूददोहसं करोत्यथाधिद्रुत्य[2] स्वयमातृण्णायाꣳ शङ्कुमुद्धत्योदपात्रमुपनिनीय दर्भस्तम्बमुपदधाति वाक्या समुद्र उपदधात्विति वा तूष्णीं वाथैनꣳ स्रुवाहुतिभिरभिजुहोति यजूरब्दो ऽपावभिरिति पञ्चभिरथ दूर्वामुपदधात्यायने ते परायणे दूर्वा रोहन्तु पुष्पिणीः । उत्सो वा तत्र जायतां ह्रदो वा पुण्डरीकवानिति[3] ' तथादेवतं कृत्वा सूददोहसौ करोत्यथास्यैतत्पुरस्तादेवौदुम्बरं युगलाङ्गलं कारितं भवति ॥ २४ ॥

[4]षड्गवं वा द्वादशगवं वा ' तस्य वरत्राः संसृजति सं वरत्रा दधातन निष्कृताहावमवटमिति द्वाभ्यां ' युनक्ति सीरा

---

1 ०दोहसं M Tr H.

2 Thus B Bhav. Ms., the passage अथ दक्षिणतो…करोति (l 7) is inserted by M Tr BHU infra l. 13 after ०दोहसौ करोति; but cp. the order, in which supra p 21, 20 the substances are enumerated.

3 cp Ath. V. vi, 106 1

4 cp Pitṛmedhasūtra p 22, 5 sqq

युञ्जन्ति कवयो युगा युनक्त सीरेति द्वाभ्यां कृषति लाङ्गलं पवीरवꣳ शुनं नः फाला इति द्वाभ्याꣳ सीतां प्रत्यवेक्षते कामं कामदुघे धुक्ष्व घृतेन सीतेति द्वाभ्याꣳ स पुच्छादेवाग्रे तिस्रः प्राचीः सीताः कृषत्युत्तरार्धे श्रोणेर्दक्षिणमꣳसमभि तिस्रो दक्षिणार्धे श्रोणेरुत्तरमꣳसमभि[1] तिस्रो दक्षिणात्पक्षादुत्तरं पक्षमभि तिस्रोऽथैतान्विमुच्य प्रदक्षिणमावर्त्याद्भिरभ्युक्ष्योदीच उत्सृजति[2] त एतेऽध्वर्योर्भवन्ति यदि दक्षिणावता यजते क्षुधं वै क्षत्त्रियो[3]ऽग्निर्यथागवं व्युदचन्ति[4] यत्रैवानड्वाहस्य युगलाङ्गलमथास्यैतत्पुरस्तादेवौदुम्बरे द्रोणे सर्वौषधं दध्नाज्येन समुदायुतं भवति स पुच्छादेवाग्रे तिस्रः प्राचीः सीता वपति या जाता ओषधय इति तिसृभिरनुच्छन्दसमुत्तरार्धे श्रोणेर्दक्षिणमꣳसमभि तिसृभिर्दक्षिणार्धे श्रोणेरुत्तरमꣳसमभि[5] तिसृभिर्दक्षिणात्पक्षादुत्तरं[6] पक्षमभि पञ्चभिश्चतुर्दशभिर्वपतीति ब्राह्मणमथ दिग्भ्यो लोष्टान्समस्यति सोऽत एव प्राङ् द्रुत्वा बहिःशर्कराल्लोष्टमादत्ते तमन्तःशर्करं न्यस्यति ॥ २५ ॥

---

१ Thus MT Ms; श्रोणेरोत्तर° all the other MSS.

२ Thus M Tr UHB Be Keś. (the MS. of the India Office has twice उत्सृजंति, both times corrected into singular); उत्सृजंति Msc; cp. TS. v. 2 5,3.

३ Thus (or क्षत्रियो) all exc. MB Keś., which have क्षत्रियो।

४ Thus B; व्यादचन्ति Ms; व्युदंचंति M Tr Be U (pr. m); व्युदचंति U (sec m).

५ Thus M (pr m) and Ms; the other MSS श्रोणेरोत्तर°।

६ Thus Ms only, all the other MSS पक्षादोत्तरं।

मा नो हिꣳसीज्जनिता यः पृथिव्या इत्यथ दक्षिणं पक्षमनुद्रुत्य बहिःशर्कराल्लोष्टमादत्ते । तमन्तःशर्करं न्यस्यत्यभ्यावर्तस्व पृथिवीत्यथ पुच्छमनुद्रुत्य बहिःशर्कराल्लोष्टमादत्ते । तमन्तःशर्करं न्यस्यत्यग्ने यत्ते शुक्रं यच्चन्द्रमित्यथोत्तरं पक्षमनुद्रुत्य बहिःशर्कराद्द्वौ लोष्टावादत्त इषमूर्जमहमित आदद इति । तयोरन्यतरमन्तःशर्करं न्यस्यत्या नो गोषु विशत्वौषधीष्विति । तां दिशमितरं निरस्यति यस्यामस्य दिशि द्वेष्यो भवति जहामि सेदिमनिराममीवामित्याददान एवैतां दिशमभि संपादयेदित्येतदेकं । यजुषा[1] यजुर्विपरिहरेदित्येतदपरमथ महावेद्या उत्तरादꣳसीयाच्छ्रोणिवेद्यन्तेन त्रीन्प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं चतुर्थं । तच्चात्वालमक्षाहता चात्वालं परिलिख्युत्तरवेदेरायतोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्य सिकता निवपत्यग्ने तव श्रवो वय इति षड्भिरनुच्छन्दसमथोर्ध्वचित उपदधाति चित स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया देवतयाङ्गिरस्वद्ध्रुवाः सीदतेत्यथानुव्यूहत्याप्यायस्वेति गायत्र्या ब्राह्मणस्य सं ते पयाꣳसीति त्रिष्टुभा राजन्यस्य । यथायजु यथाशर्करमनुव्यूहति । ॥ २९ ॥ सप्तमः ॥

अथैतां महाचितिꣳ सꣳसादयन्नयेषु[2] शालामुख्याभ्यां वा

---

१ MB Be Tr U Me ins. वा; H om. this word as also the Dvaidhasūtra.

२ संसादयन्- H Tr Bhav

4

सर्वाणि वा द्वाविंशतिं[1] च[1] दर्भपुञ्जीलानि पयःपोषं चाज्यपोषं चाग्नं चौत्तरवेदिकांश्च संभारान्सार्द्धमण्ययचयोद्धार्या[2] कुम्भेष्टकास्तावत एव हिरण्यशकलाञ्छतं[3] चोदकुम्भं च पुष्करपर्णं च रुक्मं च हिरण्मयं च पुरुषं स्रुचौ च सर्पशिरश्च सर्वं च स्वयमातृण्णा निक्रीतं दश च स्कन्ध्या अवकाश्या या च चान्या उपधास्यन्भवति ता दधि च मधुमिश्रं कूर्मं चौदुम्बरं चोलूखलमुसलं सर्वौषधं चोखाश्च पशुशीर्षाणि चेति । द्वाविंशतिं[4] दर्भपुञ्जीलानि पयःपोषे ऽवधाय तैः पोषयाम्यग्नीन्यो ऽग्निभ्यो जुष्टान्पोषयामीति वा तूष्णीं वाग्निनाग्निः समिध्यत इत्याज्यपोषेणाथ संप्रैषमाहाग्निभ्यः प्रणीयमानेभ्यो ऽनुब्रूहीति । यदि होता न कामयते यजमान एव पुरीष्यासो अग्नय इत्येतामेकां त्रिरन्वाहाथाग्निप्रथमाः[5] प्रतिपद्यन्ते[6] । ऽथैतेनाश्वेन प्राचाधिद्रवति ॥ २७ ॥

अभ्यस्थाद्विश्वाः पृतना अरातीरित्यश्वं दक्षिणमंसमभ्यवक्रामन्तमनुमन्त्रयते यदक्रन्दः प्रथमं जायमान इत्युत्तरे

---

१ om. BM; च only found in U (sec. m) and Ms.

२ Thus TB Be U (sec. m); सार्धमत्यं चयो° HU (pr. m.); सार्धसत्यचर्यं चयो° M.

३ Thus (°शकला°) M Tr. Be U Ms; °शकला° Be.; शलका° HU (pr. m).

४ Most of the MSS ins. च ।

५ अथाग्न्यप्रथमा MH.

श्रोण्यन्ते संसादयन्त्यथ[1] द्वाभ्यामात्मन्नग्निं[2] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्यामथ पुष्करसदौ चात्मसदौ च घृतं निदधात्यथोदकुम्भं[3] पर्यस्यत्योदन्ते दक्षिणेन कुम्भꣳ सव्येन कुम्भीꣳ सताम्पूरयित्वा हिरण्यशल्कौ प्रत्यस्य या एता दक्षिणादꣳसात्स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुसीतमुपदधाति ॥ २८ ॥

हिरण्यवर्णाः शुचयः पावका यासाꣳ राजा वरुणो याति मध्य इति द्वाभ्यामेवमेव पूरयित्वैवं प्रत्यस्य या एता उत्तरायै श्रोणेः स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुसीतमुपदधाति तृतीयया च चतुर्थ्या चैवमेव पूरयित्वैवं प्रत्यस्य या एता दक्षिणायै श्रोणेः स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुसीतमुपदधाति पञ्चम्या च षष्ठ्या चैवमेव पूरयित्वैवं प्रत्यस्य या एता उत्तरादꣳसात्स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुसीतमुपदधाति सप्तम्या चाष्टम्या चैवमेव पूरयित्वैवं प्रत्यस्य या एता दक्षिणात्पश्चात्स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुसीतमुपदधाति नवम्या च दशम्या चैवमेव पूरयित्वैवं प्रत्यस्य या एता उत्तरात्पश्चात्स्वयमातृण्णामभ्याद्रवन्ति तासु

---

१ °सादयंत्य° Tr Bo BU Ms, °सादयत्य° MH.

२ Thus M Tr Bo U Ms, °त्मन° BH

३ निधाय instead of निदधाति M Tr HU, omitting the following अथ।

विषुवत्यनुषीतमुपदधात्येकादश्या च द्वादश्या च तासां बार्हस्पत्यं मध्य[1] उपदधाति दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या संभव ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेत्यनुषीतमुपदधातीति ब्राह्मणं तयादेवतं कृत्वा सूददोहसः करोति ॥ २९ ॥

अथोत्तरवेदेरावृतोत्तरवेदिमलङ्करोत्यथोत्तरवेद्यामपां पृष्ठमसीति पुष्करपर्णमुपदधाति तयादेवतं कृत्वा सूददोहसं करोत्यथोत्तरवेद्यामेवोत्तरनिर्बाधꣳ रुक्ममुपदधाति ब्रह्म जज्ञानमित्यथैनमक्ष्णया पञ्चगृहीतेन व्याघारयति कृणुष्व पाजः प्रसितिं न पृथ्वीमित्यथ दक्षिणतः प्राञ्चꣳ हिरण्मयं पुरुषमुपदधाति हिरण्यगर्भः समवर्तताग्र इत्यथैनमभिमृशति द्रप्सश्चस्कन्देति तयादेवतं कृत्वा सूददोहसौ करोत्यथोत्तरतः प्रक्रमवेलायाꣳ स्रुचावुपदधात्याज्यस्य पूर्णां कार्ष्मर्यमयीं दध्नः पूर्णामौदुम्बरीं दक्षिणां कार्ष्मर्यमयीमुत्तरामौदुम्बरीमियमसीति कार्ष्मर्यमयीमभावसीत्यौदुम्बरीं मनसैव तयादेवतं कृत्वा सूददोहसौ करोत्यथ दक्षिणे प्रललाटे सर्पशिर उपदधाति नमो अस्तु सर्पेभ्य इति तिसृभिरनुष्टुप्छन्दसमपि वा यतउच्चारं जनपदस्य जन्यं भयं मन्यते तयादेवतं कृत्वा सूददोहसं करोति ॥ ३० ॥ अष्टमः ॥

अथ स्वयमातृण्णां यजुषा करोति ध्रुवासि धरुणास्तृता विश्वकर्मणा सुकृता। मा त्वा समुद्र उद्वधीन्मा सुपर्णो व्यथ-

[1] मध्यत M only

माना पृथिवीं दृꣳहेत्यथैनामश्वमवघ्राप्य विदुषा ब्राह्मणेन महाधिद्रुत्योपदधाति यथैतस्य पुरुषस्य प्राणैः प्राणाः संनिधीयेरन्नापिधीयेरन्नः प्रजापतिस्त्वा सादयत्वित्यनुद्रुत्याग्निस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यनुप्राण्यात्प्रथमाꣳ स्वयमातृण्णामुपधायेत्यनुप्राणित्यैव ब्राह्मणो वरं ददात्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्वयमातृण्णावकाशे जुहोति चित्तिं जुहोमि मनसा घृतेनेत्यथ हुत्वाभ्यामन्वारभ्याभ्यारोहं वाचयति पृथिवीमाक्रमिषं प्राणो मा मा हासीदित्यपरे बिले हिरण्येष्टकामुपदधाति तेजोऽसि तेजो मे यच्छ पृथिवीं यच्छ पृथिव्यै मा पाहीति ' तां जघनेन प्रक्रमवेलायां मण्डलेष्टकामुपदधाति पृथिव्युदपुरमन्नेन विष्टेति ' दक्षिणतो रेतःसिचमुपदधाति पृथिवी रेतःसिक्सा मे रेतो दधातु या मे रेतः प्रजनयत्विति ' तयादेवतं कृत्वा सूददोहसः करोति ' ॥ ३१ ॥

अथैता दश स्तम्भ्याः प्राचीरायातयति द्वे ऋतव्ये द्वे द्वियजुषी विराजं च विश्वज्योतिषं च मधुजं चाषाढां च द्वे संयान्यावृतव्ये उपदधाति मधुश्च माधवश्चेत्यथैतामुपदधात्यग्नेर्योनिरसीत्यथ द्वियजुषी उपदधाति काण्डात्काण्डात्प्ररोहन्ती या शतेन प्रतनोषीति ताभ्यां दूर्वेष्टकामथ हिरण्यगर्भामुपदधाति यास्ते अग्ने सूर्ये रुचो या वो देवाः सूर्ये रुच इति ' विराजं च विश्वज्योतिषं च विराड् ज्योतिरधारयद्बृहस्पतिस्त्वा सादयत्वित्युत्तरामथ मधुजमुपदधातीन्द्राग्निभ्यां मा मधुजा

मारण्यमनु ते दिशामीति ऋचमनूत्सृजति । ललाटे हिरण्येष्टकामुपदधाति वरुणो दिशां पतिरित्यथोत्तरतो दक्षिणामुख उपविश्यान्तरात्मन्नस्य शिर उपदधाति यो अग्निरग्नेस्तपसो ऽधि जात इत्यनुद्रुत्याजा ह्यग्नेरजनिष्ट गर्भादिति । शरभमारण्यमनु ते दिशामीति ऋचमनूत्सृजति । ललाटे हिरण्येष्टकामुपदधात्यग्निर्दिशां पतिरित्यन्तेषु तस्य मृद्ध्योपदध्यादिति ब्राह्मणं । तथादेवतं कृत्वा सूददोहसः करोति । ॥ ३४ ॥ नवमः ॥

अथापस्या उपदधात्यपां त्वेमन्त्सादयामीति पञ्च पुरस्तात्प्रतीचीरुपदधाति पञ्च दक्षिणतः पञ्च पश्चात्प्राचीः पञ्चोत्तरतश्छन्दस्यास्तथादेवतं कृत्वा सूददोहसः करोत्यथ प्राणभृत उपदधात्ययं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्र्यै गायत्रं गायत्रादुपांशुरुपांशोस्त्रिवृत्त्रिवृतो रथंतरꣳ रथंतराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्य इति । दश प्राचीरायातयति स्वयमातृण्णाया अयं दक्षिणा विश्वकर्मेति । दश दक्षिणा आयातयति स्वयमातृण्णाया अयं पश्चाद्विश्वव्यचा इति । दश प्रतीचीरायातयति स्वयमातृण्णाया इदमुत्तरात्स्वरिति । दशोदीचीरायातयति स्वयमातृण्णाया इयमुपरि मतिरिति । दशभिरपरिशयमदक्षिणं परिचिनोत्यंहण्योपदधातीति ब्राह्मणं । तथादेवतं कृत्वा सूददोहसः करोत्यथ संयत उपदधात्यायुषः प्राणꣳ संतन्विति द्वादश तिरश्चीर्दिक्षु न मध्ये । तथा-

देवतं कृत्वा सूददोहसः करोत्यथापानभृत उपदधाति प्राची दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं त्रिवृत्स्तोमः स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः सानग ऋषिरिति। वाचयति पितरः पितामहा इति। दक्षिणेन प्राणभृतो दश प्रतीचीरायातयति स्वयमातृण्णामभि दक्षिणा दिशामिति। जघनेन प्राणभृतो दशोदीचीरायातयति स्वयमातृण्णामभि प्रतीची दिशामित्युत्तरेण प्राणभृतो दश प्राचीरायातयति[1] स्वयमातृण्णामभ्युदीची दिशामित्यग्रेण प्राणभृतो दश दक्षिणा आयातयति स्वयमातृण्णामभ्यूर्ध्वा दिशामिति। बाह्येन प्राणभृतो दशभिरुपरिष्टादपमलैः परिचिनोति। विषूचीरुपदधातीति ब्राह्मणसंपानभृद्भिश्चितिराप्यते। तथादेवतं कृत्वा सूददोहसः करोत्यथाग्निं सर्वतोमुखं चिनुते[2]। ॥ ३५ ॥

गायत्रीं पुरस्तादुपदधाति त्रिष्टुभं दक्षिणतो जगतीं पश्चादनुष्टुभमुत्तरतः पङ्क्तिं मध्ये[3]। तथादेवतं कृत्वा सूददोहसः करोत्यथाग्नेरङ्गान्युपदधाति प्राच्या त्वा दिशा सादयामि गायत्रेण छन्दसाग्निना देवतयाग्नेः शीर्ष्णाग्नेः शिर उपदधामि दक्षिणया त्वा दिशा सादयामि प्रतीच्या त्वा दिशा सादयाम्युदीच्या त्वा दिशा सादयाम्यूर्ध्वया त्वा दिशा सादयामि पाङ्क्तेन छन्दसेति। तथादेवतं कृत्वा सूददोहसः करोत्यथोत्त-

---

1 Thus Tr HBU Ms; प्रतीचीर॰ M Be

2 Thus Tr Be BU Ms, चिनोति MH

3 मध्य इति M.

युजा युनज्मीत्यथाषाढां आलिखितामुत्तरलक्ष्माणमुपदधात्यषाढासि सहमानेत्यथ संयान्यावुपदधात्यग्नेर्यान्यसि देवानामग्नेयान्यसीति । तथादैवतं कृत्वा सूददोहसः करोति । ॥ ३२ ॥

अथोत्तरेण आलिखितामुपविश्य याचति दधि च मधुमिश्रं कूर्मं च । तं दध्ना मधुमिश्रेणाभ्यनक्ति मधु वाता ऋतायत इति तिसृभिरनुष्छन्दसमथैनमवकाभारेण परिवेष्ट्य पुरस्तात्प्रत्यञ्चमुपदधाति मही द्यौः पृथिवी च नश्चतस्र आशाः प्रचरन्त्वग्नय इति द्वाभ्यामथैनं शङ्कुभिः परिच्छिन्दन्त्यभितो ऽनवसर्पणाय । तथादैवतं कृत्वा सूददोहसं करोत्यथाचैव तिष्ठन्याचत्यौदुम्बरं चोलूखलमुसलं सर्वौषधं च । तदेतत्प्रादेशमात्रमुलूखलं भवत्यरत्निमात्रं मुसलं । तस्मिन्सर्वौषधमवहत्यूर्जो भागो ऽसूर्जः पवित्रमूर्गसमभ्यायायेत्यथैनदुत्तरतः[1] प्रक्रमवेलायामुपदधाति तद्विष्णोः परमं पदमिति । लोकंपृणामुत्तरतो मुसलं करोति । तथादैवतं कृत्वा सूददोहसौ करोत्यथ मुख्यामुखां याचति । तस्यामन्तरवस्राविणी द्वे स्रुवाहुती जुहोत्यग्ने युक्ष्वा हि ये तवेति दक्षिणे पित्ते जुहोति युक्ष्वा हि देवहूतमानित्युत्तरे । अथैनामुत्तरतः प्रक्रमवेलायामुपदधाति ध्रुवासि पृथिवि सहस्व पृतन्यत इति । लोकंपृणे उत्तरत इतरे करोति । तथादैवतं कृत्वा सूददोहसः करोत्यथैतत्पुरुषशिरो याचति । तस्य प्राणेषु हिरण्यशल्कान्प्रत्यस्यति

---

१ Thus U (sec. m) and Ms (इमन् सर्वौषधेन पूर्णमुलूखलम् Msc.); °थैनमु° all the other MSS and U (pr m)

द्रप्सश्चस्कन्देत्याग्ने ऽभ्युद्दिदं विश्वस्य भुवनस्य वाजिनमिति दक्षिणस्यां नासिकायामग्नेर्वैश्वानरस्य चेत्युत्तरस्यामग्निर्ज्योतिषा ज्योतिष्मानिति दक्षिणे ऽक्षिण रुक्मो वर्चसा वर्चस्वानित्युत्तर स्वचे सेति दक्षिणे कर्णे सुचे सेत्युत्तरे' ऽथ स्रुचि चतुर्गृहीतं गृहीत्वा दक्षिणे ऽक्षिण जुहोति चित्रं देवानामुदगादनीकमित्यपरं चतुर्गृहीतं गृहीत्वोत्तरे ऽक्षिण जुहोति चित्रं देवानामिति' समान्या जुहोतीति माह्मणमथैनद्दध्ना मधुमिश्रेण पूरयति समित्स्रवन्ति सरितो न धेना इत्यान्तादनुवाकस्याथैनत्प्राचीनमुत्तानमुखायामुपदधाति ॥ ३३ ॥

आदित्यं गर्भं पयसा समङ्ग्धित्यनुद्रुत्येमं मा हिꣳसीर्द्विपादं पशूनामिति' मयुमारण्यमनु ते दिशामीति शुचमनूत्सृजति' ललाटे हिरण्येष्टकामुपदधाति विश्वकर्मा दिशां पतिरित्यथ पुरस्तात्प्रत्यङ्मुख उपविश्यान्तरात्मनश्वस्य शिर उपदधाति वातस्य ध्राजिं वरुणस्य नाभिमित्यनुद्रुत्येमं मा हिꣳसीरेकशफं पशूनामिति' गौरमारण्यमनु ते दिशामीति शुचमनूत्सृजति' ललाटे हिरण्येष्टकामुपदधाति प्रजापतिर्दिशां पतिरित्यथ पश्चात्प्राङ्मुख उपविश्यान्तरात्मदृषभस्य शिर उपदधात्यजस्रमिन्दुमरुषं भुरण्युमित्यनुद्रुत्येमꣳ समुद्रꣳ शतधारमुत्समिति' गवयमारण्यमनु ते दिशामीति शुचमनूत्सृजति' ललाटे हिरण्येष्टकामुपदधाति रुद्रो दिशां पतिरित्यथ दक्षिणत उदङ्मुख उपविश्यान्तरात्मन्वृष्णेः शिर उपदधाति वरूत्रिं त्वष्टुर्वरुणस्य नाभिमित्यनुद्रुत्येमामूर्णायुं वरुणस्य मायामित्युष्ट्र-

एतः प्राजापत्यामुपदधाति संवत्सरस्य प्रतिमामिति । तां जघनेन प्रक्रमत्रेतायां प्राञ्चमृषभमुपदधाति त्वामग्ने वृषभं चेकितानमिति । तयादेवतं कृत्वा सूददोहसौ करोत्यथ लोकंपृणा उपदधाति लोकं पृण छिद्रं पृणाथ सीद ध्रुवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निति । तयादेवतं[1] करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इति । आग्नीध्र लोकंपृणया असौ-त्यग्निं प्राचीभिः संप्रच्छादयन्ति । संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ चितिमृक्षाभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या गायत्र्यैतां चितिमभिमृश्य द्वाभ्यामवद्रवति वाङ्मा आसन्प्राणदा इत्यथापराह्णिकीभ्यां[2] प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते वसन्त्येतां रात्रिम् । ॥ ३६ ॥ दशमः ॥

अथ द्वितीयेऽहन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरत्यथ कार्ष्णाजिनौ[3] उपानहावुपमुञ्चते[3] अध्वर्युश्च यजमानश्चाथ द्वाभ्यामात्मन्नग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि

---

1 Thus M Tr. Ms, the other MSS. abbreviate the following passage.

2 °थापराह्ण (or ह्ल) आपराह्णि° Be U Ms.

3 So M Tr U Ms; °जिनौवुपा° B; °जिनिवपा° H; Be defect.

धामेति । कृष्णमश्वमभिमृश्य तनुपुरीषमुपदधाति पृष्ठो दिवीति । तथादेवतं कृत्वा सूददोहसं करोत्यथापराह्णिकीभ्यां[1] प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते । वसन्त्येताᳫ रात्रिमथ तृतीये ऽहन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति । सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चन्ते । ऽथ यावत्याज्यस्थालीᳫ सस्रुवां विभक्तिमुदपात्रं पञ्च च स्कन्ध्या अवकाशं याश्च यान्या उपधास्यन्भवति ताः । एतत्समादायोत्तरे ऽोप्यन्त मङ्गमादयन्त्यथ द्वाभ्यामात्मन्नग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्यामथाधिद्रुत्य प्रथमे संचिताहुती जुहोत्यग्न उदधे तत्त्वा यामीति । दक्षिणतो विभक्तिमुपदधात्यग्निं दूतं वृणीमह इति । तथादेवतं कृत्वा सूददोहसं करोति । ॥ ३७ ॥

अथैताः पञ्च स्कन्ध्याः प्राचीरायातयति द्वे ऋतव्ये द्वे सयुजावेकाᳫ संयानीमृतव्ये उपदधाति शुक्रश्च शुचिश्चेत्येवकामनूपदधात्यग्नेर्योनिरसीत्यथ सयुजावुपदधात्याधाराभ्यां त्वा सयुजा युजा युनज्मि तेजसा त्वा सयुजा युजा युनज्मीत्यथ संयानीमुपदधाति वायोर्याम्यसीति । तथादेवतं कृत्वा सूददोहसः करोत्यथाश्विनीरुपदधाति ध्रुवचितिर्ध्रुवयोनिरिति पञ्चैकैकां दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करो-

---

१ अथापराह्ण आप॰ Be UH Ms

यथर्तव्या उपदधाति सजूर्ऋतुभिः सजूर्विधाभिरिति पञ्चैकैकां दिश्येकां मध्ये । समानप्रभृतयो भवन्ति समानोदर्का इति ब्राह्मणं । तथादेवतं कृत्वा सूददोहसः करोत्यथ प्राणभृत उपदधाति प्राणं मे पाह्यपानं मे पाहीति पञ्चैकैकां दिश्येकां मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ वृष्टिमतीरुपदधात्यपःपिन्वौषधीर्जिन्वेति पञ्चैकैकां दिश्येकां मध्ये । ऽसुपरिहारं सादयतीति ब्राह्मणं । तथादेवतं कृत्वा सूददोहसः करोत्यथ मूर्धन्वतीरुपदधाति विष्टम्भो वय इति चतस्रः पुरस्ताद्दृंहपातिनीस्तथादेवतं[1] कृत्वा सूददोहसः करोत्यथ वयस्या उपदधाति । अविर्वय इति पञ्च दक्षिणायाꣳ श्रोण्यामुपदधाति पष्ठवाद्वय इति पञ्चोत्तरस्यां । बस्तो वय इति दक्षिणेंऽस उपदधाति । वृष्णिर्वय इत्युत्तरे । व्याघ्रो वय इति दक्षिणे पक्ष उपदधाति । सिꣳहो वय इत्युत्तरे । पुरुषो वय इति मध्ये । पुरुषेण चितिराप्यते । तथादेवतं कृत्वा सूददोहसः करोत्यथाग्निꣳ सर्वतोमुखं चिनुते ऽग्नेरङ्गानि प्राजापत्यामृषभं लोकंपृणा । उदीच्याच लोकंपृणया प्रत्येत्यग्निमुदीचीभिः संप्रच्छादयन्ति । संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ चितिक्लृप्ताभिमृशति चित्ति-

---

१ Thus (°पातिनीस्) MBU Bhar. (one MS), पातीनीस् De; °पादिनीस् Tr H Bhar (another MS), Kes. (twice), Ma. (but Msc. °ꣳहपतनवत् मध्यया मध्या चाधेया, and यथा मध्ये दृंहपातिन्य इति गोपाल.)।

सचित्तिं चिनवद्वि विद्वानित्याग्नेय्या त्रिष्टुभैतां चितिमभिमृश्य द्वाभ्यामवद्रवति वाङ्म आसन्प्राणदा इत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते' वसन्त्येताꣳ रात्रिम्' ॥ ३८ ॥ एकादशः ॥

अथ चतुर्थेऽहन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति' समानं पुरीषस्योपधानमथ पञ्चमेऽहन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति' सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चन्तेऽथ याचत्वाज्यस्थालीꣳ सस्रुवां विभक्तिमुदपात्रꣳ सर्वं च स्वयमातृण्णानिकोतं दर्भ च स्कन्ध्या अवकाश्य या उ चान्या उपधास्यन्भवति ता' एतत्समादायोत्तरे श्रोण्यन्ते सꣳसादयन्त्यथ द्वाभ्यामात्मन्नग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति' स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति' श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्यामथाधिद्रुत्य द्वितीये संचिताकृतौ जुहोत्यग्ने दुभ्र तत्त्वा यामीति' दक्षिणतो विभक्तिमुपदधात्यग्निनाग्निः समिध्यत इति' तयादेवतं कृत्वा सूददोहसं करोत्यथ स्वयमातृण्णामश्वमवघ्राप्याविदुषा ब्राह्मणेन सहाधिद्रुत्योपदधाति ध्रुव इन्द्राग्नी अव्यथमानामित्यनुद्रुत्य वायुस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति' व्यन्याद्वितीयामुपधायेति' प्राणापानिति' स व्यानो' ऽथैष ब्राह्मणो वरं ददात्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्वयमातृण्णावकाशे जुहोति चित्तिं जुहोमि मनसा[illegible]त्यङ्गुष्ठाभ्यामन्वारभ्या-

न्यारोहं नाकस्यान्तरिक्षमाक्रमिषं प्रजा मा मा हासीदित्यपरे बिले हिरण्येष्टकामुपदधाति ज्योतिरसि ज्योतिर्मे यच्छान्तरिक्षं यच्छान्तरिक्षान्मा पाहीति तां जघनेन प्रकसवेलायां मण्डलेष्टकामुपदधात्यधिद्यौरन्तरिक्षं ब्रह्मणा विष्टेति दक्षिणतो रेतःसिचमुपदधात्यन्तरिक्षᳪ रेतःसिगग्ने रेतो दधातु तन्मे रेतः प्रजनयत्विति मनसैव तथादेवतं कृत्वा सूददोहसः करोति ॥ ३९ ॥

अथैता दश स्कन्ध्याः प्राचीरायातयति चतस्र उत्तराः सम्राजं च विश्वज्योतिषं च द्वे सयुजौ द्वे संयान्यावृतव्या उपदधाति नभश्च नभस्यश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीतीष ऊर्जश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीति सम्राजं च विश्वज्योतिषं च सम्राड् ज्योतिरधारयद्विश्वकर्मा त्वा सादयत्वित्युत्तरामेव सयुजावुपदधाति वर्चसा त्वा सयुजा युजा युनज्म्युक्थेभिस्त्वा सयुजा युजा युनज्मीत्यथ संयान्यावुपदधाति देवानां वायोऽयान्यन्तरिक्षस्य यान्त्सीति तथादेवतं कृत्वा सूददोहसः करोत्यथ दिश्या उपदधाति राज्ञ्यसि प्राची दिगिति पञ्चैकैकां दिक्ष्वेकां मध्ये तथादेवतं कृत्वा सूददोहसः करोत्यथ प्राणभृत उपदधात्यायुर्मे पाहि प्राणं मे पाहीति दश पुरस्तात्प्राचीस्तासां ज्योतिष्मतीमुत्तमामुपदधाति तथादेवतं कृत्वा सूददोहसः करोत्यथ छन्दसीरुपदधाति मा छन्द इति द्वादश दक्षिणतः पृथिवी छन्द इति द्वादश पश्चादग्निर्देवतेति द्वादशोत्तरतस्तथादेवतं कृत्वा सूददोहसः

करोत्यथ वालखिल्या उपदधाति ' मूर्धासि राडिति सप्त पुरस्तात्प्रतीचीरुपदधाति यन्त्री राडिति सप्त पश्चात्प्राचीर्वालखिल्याभिश्चितिराप्यते ' तथादेवतं कृत्वा सूददोहसः करोत्यथाग्निꣳ सर्वतोमुखं चिनुते ऽग्नेरङ्गानि प्राजापत्यामृषभं लोकंपृणाः ' प्राच्याच लोकंपृणया प्रसौत्यपि प्राचीभिः संप्रच्छादयन्ति ' संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ चितिक्लृप्ताभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या जगत्यैतां चितिमभिमृश्य द्वाभ्यामवद्रवति वाश्च आसन्प्राणदा इत्यथापराह्णिकौभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते ' वमन्त्येताꣳ रात्रिम् ' ॥ ४० ॥ द्वादशः ॥

अथ षष्ठे ऽभ्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति ' समानं पुरीषस्योपधानमथ सप्तमे ऽभ्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति ' सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चन्ते ' ऽथ यावत्याज्यस्थालीꣳ सस्रुवां विभक्तिमुदपात्रं पञ्च च स्कन्ध्या अवकाश्य या उ चान्या उपधास्यन्भवति ता ' एतत्समादायोत्तरे श्रोण्यन्ते संꣳसादयन्त्यथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति ' स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति ' श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्यामथाधिद्रुत्य तृतीये संचिताहुती जुहोत्यग्ने गह्व तत्त्वा यामीति ' दक्षिणतो विभक्तिमुपदधात्यग्निर्देवताग्नि जगन्वदिति ' तथादेवतं कृत्वा सूददोहसं करोत्यथैताः पञ्च [illegible]

सयुजावेकां संयानीमन्तत्ये उपदधाति सहश्च सहस्यश्चेत्येवं-कामनूपदधात्यग्नेर्योनिरसीत्यथ सयुजावुपदधाति स्तोमैभिस्त्वा सयुजा युजा युनज्मि छन्दोभिस्त्वा सयुजा युजा युनज्मीत्यथ संयानीमुपदधाति देवानामन्तरिक्षयान्यसीति। तथादेवतं हत्वा सूददोहसः करोति। ॥ ४१ ॥

अथांस्त्रयास्तोमीया उपदधात्याशुस्त्रिवृदिति पुरस्तादुपदधाति व्योम सप्तदश इति दक्षिणतो धरुण एकविंशश इति पश्चाद्भान्तः पञ्चदश इत्युत्तरतः। प्रतूर्तिरष्टादश इति पुरस्तादुपदधात्यभिवर्तः सविंशश इति दक्षिणतो वर्चो द्वाविंशश इति पश्चात्तपो नवदश इत्युत्तरतो। योनिश्चतुर्विंशश इति पुरस्तादुपदधाति गर्भाः पञ्चविंशश इति दक्षिणत ओजस्त्रिणव इति पश्चात्संभरणस्त्रयोविंशश इत्युत्तरतः। क्रतुरेकत्रिंशश इति पुरस्तादुपदधाति सध्रस्य विष्टपं चतुस्त्रिंशश इति दक्षिणतः प्रतिष्ठा त्रयस्त्रिंशश इति पश्चान्नाकः षट्त्रिंशश इत्युत्तरतो। ऽग्नेर्भागो ऽसीति पुरस्तादुपदधाति नृचक्षसां भागो ऽसीति दक्षिणतो मित्रस्य भागो ऽसीति पश्चादिन्द्रस्य भागो ऽसीत्युत्तरतो। वसूनां भागो ऽसीति पुरस्तादुपदधात्या-दित्यानां भागो ऽसीति दक्षिणतो ऽदित्यै भागो ऽसीति पश्चाद्देवस्य सवितुर्भागो ऽसीत्युत्तरतो। धर्त्रश्चतुष्टोम इति पुरस्तादुपदधाति यावानां भागो ऽसीति दक्षिणत ऋभूणां भागो ऽसीति पश्चाद्विवर्तो ऽष्टाचत्वारिंशश इत्युत्तरतो। ऽन्यथानूच्यान्यथोपदधातीति ब्राह्मणं। तथादेवतं हत्वा सूददो-

हसः करोत्यथ सृष्टीरुपदधात्येकयास्तुवत प्रजा अधीयन्तेति सप्तदश । चतस्रो दक्षिणे ऽꣳस उपदधात्यथ तिस्रो ऽथ तिस्रो ऽथ तिस्रो ऽथ चतस्रो । दक्षिणादꣳसाद्दक्षिणाꣳ श्रोणिमभ्यायातयति[1] । तयादेवतं कृत्वा सूददोहसः करोत्यथ व्युष्टीरुपदधातीयमेव सा या प्रथमा व्यौच्छदिति पञ्चदश । तिस्रस्तिस्रो दिक्षु तिस्रो मध्ये । व्युष्टीभिश्चितिं राध्यते[2] । तयादेवतं कृत्वा सूददोहसः करोति । ॥ ४२ ॥

अथाग्निꣳ सर्वतोमुखं चिनुते ऽग्नेरङ्गानि प्राजापत्यामृषभं लोकंपृणा । उदीच्यात्र लोकंपृणया प्रसौत्यग्निमुदीचीभिः संप्रच्छादयन्ति । संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ चितिक्लृप्ताभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्यानुष्टुभैतां चितिमभिमृश्य द्वाभ्यामवद्रवति वाङ्म आसन्प्राणदा इत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते । वसन्त्येताꣳ रात्रिम् । ॥ ४३ ॥ त्रयोदशः ॥

अथाष्टमे ऽभ्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति । समानं पुरीषस्योपधानमथ नवमे ऽभ्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति । सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चन्ते । ऽथ यावत्यध्यस्तासीꣳ सक्तुवां विभक्तिमुदपात्रꣳ सर्वं च क्षयमादृषानिकीतꣳ सप्त च स्कन्ध्या अवकाश्य या उ चान्या

1 व्यौच्छ० some of the MSS

2 व्युष्टिभि० H Ms

उपधास्यन्भवति ता ' एतस्मादादायोत्तरे श्रोणन्ते संसादयत्यथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति ' स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति ' श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्व इति द्वाभ्यामथाधिद्रुत्य चतुर्थे संचिताहुती जुहोत्यग्ने किऽशिल तत्त्वा यामीति ' दक्षिणतो विभक्तिमुपदधात्यग्ने स्तोमं मनामह इति ' तथादेवतं कृत्वा सूददोहसं करोत्यथैताः अत्र स्कन्ध्याः प्राचीरायातयति द्वे ऋतव्ये स्वराजं च विश्वज्योतिषं चैकाऽ सयुजं द्वे संयान्यावृतव्ये उपदधाति तपश्च तपस्यश्चेत्यथैकामनूपदधात्यग्नेर्यानिरसीति स्वराजं च विश्वज्योतिषं च स्वराट् ज्योतिरधारयत्प्रजापतिस्त्वा सादयत्वित्युत्तरामथ सयुजमुपदधाति रय्यै पोषाय सजातानां मध्यमस्थेयाय मया त्वा सयुजा युजा युनज्मीत्यथ संयान्यावुपदधात्यन्तरिक्षमस्यन्तरिक्षाय त्वेति ' तथादेवतं कृत्वा सूददोहसः करोति ' ॥ ४४ ॥

अथासपत्ना उपदधात्यग्ने जातान्प्रणुदा नः सपत्नानिति पुरस्तादुपदधाति सहसा जातानिति पश्चाच्चतुश्चत्वारिऽश स्तोम इति दक्षिणतः षोडश स्तोम इत्युत्तरतस्तासां पुरीषवतीं मध्य उपदधाति पृथिव्याः पुरीषमस्यप्सो नामेति ' तथादेवतं कृत्वा सूददोहसः करोत्यथ विराज उपदधात्येवश्छन्दो वरिवश्छन्द इति चत्वारिऽशतं दशदश दिक्षु न मध्ये ' उल्लणयोपदधातीति ब्राह्मणं ' तथादेवतं कृत्वा सूददोहसः करो-

त्यथ सोमभागा उपदधाति रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्येकविꣳशतिꣳ सप्तसप्त दिक्षु तिस्रो मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ नाकसद उपदधाति राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतय इति पञ्चैकैकां दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ पञ्चचोडा उपरिष्टान्नाकसदामुपदधात्ययं पुरो हरिकेशः सूर्यरश्मिरिति पञ्चैकैकां दिक्ष्वेकां मध्ये । तासां पश्चात्प्राचीमुत्तमामुपदधात्यथ यं यजमानो द्वेष्टि तं मनसा ध्यायति । तथादेवतं कृत्वा सूददोहसः करोत्यथ छन्दाꣳस्युपदधात्यग्निर्मूर्धा दिव इत्येतस्यानुवाकस्य तिस्रस्तिस्रो यथाम्नातं । गायत्रीः पुरस्तादुपदधाति त्रिष्टुभो दक्षिणतो जगतीः पश्चादनुष्टुभ उत्तरतो बृहतीर्मध्य । उष्णिहः पुरस्तादुपदधाति पङ्क्तीर्दक्षिणतोऽक्षरपङ्क्तीः पश्चादतिच्छन्दसमुत्तरतो द्विपदा मध्ये । अपि वातिच्छन्दसं मध्ये द्विपदा उत्तरतस्तथादेवतं कृत्वा सूददोहसः करोत्यथ दक्षिणेऽꣳसे कृत्तिका उपदधात्यम्बा नामासि दुला नामासीति सप्त गुल्मकृतास्तथादेवतं कृत्वा सूददोहसः करोत्यथ वृष्टिसनीरुपदधाति पुरोवातसनिरस्यभ्रसनिरसीति पञ्चैकैकां दिक्ष्वेकां मध्ये । अनुपरिहारꣳ सादयतीति ब्राह्मणं । तथादेवतं कृत्वा सूददोहसः करोत्यथादित्येष्टका उपदधाति सलिलाय त्वा सर्णीकाय त्वेत्यष्टौ द्वे द्वे दिक्षु न मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ घृतेष्टका उपदधात्यृचे त्वा रुचे त्वेति पञ्चैकैकां दिक्ष्वेकां मध्ये । अनुपरिहारꣳ सादयतीति ब्राह्मणं ।

तथादेवतं कृत्वा सूददोहसः करोत्यथ यशोदा उपदधाति यशोदां त्वा यशसि सादयामीति पञ्चैकैकां दिक्ष्वेकां मध्ये' तथादेवतं कृत्वा सूददोहसः करोत्यथ भूयस्कृत उपदधाति भूयस्कृदसि वरिवस्कृदसीति पञ्चैकैकां दिक्ष्वेकां मध्ये' तथादेवतं कृत्वा सूददोहसः करोत्यथाप्सुषद उपदधात्यप्सुषदसि श्येनसदसीति पञ्चैकैकां दिक्ष्वेकां मध्ये' तथादेवतं कृत्वा सूददोहसः करोत्यथ द्रविणोदा उपदधाति पृथिव्यास्त्वा द्रविणे सादयामीति पञ्चैकैकां दिक्ष्वेकां मध्ये' तथादेवतं कृत्वा सूददोहसः करोत्यथायुष्या उपदधाति प्राणं मे पाह्यपानं मे पाहीति सप्तैकैकां दिक्षु तिस्रो मध्ये' तथादेवतं कृत्वा सूददोहसः करोत्यथर्तुनामान्युपदधाति यावा अयावा इति सप्तैकैकां दिक्षु तिस्रो मध्ये' तथादेवतं कृत्वा सूददोहसः करोति' ॥ ४५ ॥ चतुर्दशः ॥

अथेन्द्रतनूरुपदधात्यग्निना विश्वाषाडिति द्वाविंशतिं पञ्च-पञ्च दिक्षु द्वे मध्ये' तथादेवतं कृत्वा सूददोहसः करोत्यथ यज्ञतनूरुपदधाति प्रजापतिर्मनसान्धो ऽच्छेत इति त्रयस्त्रिंशतमष्टावष्टौ दिक्ष्वेकां मध्ये' तथादेवतं कृत्वा सूददोहसः करोत्यथ ज्योतिष्मतीरुपदधाति ज्योतिष्मतीं त्वा सादयामीति द्वादश तिस्रस्तिस्रो दिक्षु न मध्ये' तथादेवतं कृत्वा सूददोहसः करोत्यथ भूतेष्टका उपदधाति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेति द्वादश तिस्रस्तिस्रो दिक्षु न मध्ये' तथादेवतं कृत्वा सूददोहसः करोत्यथाज्यानीरुपदधाति शतायुधाय शत-

वीर्यायेति पञ्चैकैकां दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ राष्ट्रभृत उपदधात्यग्ने यशस्विन्यशसेममर्पयेति चतस्र एकैकां दिक्षु न मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथ दक्षिणेऽꣳसे पौर्णमासीमुपदधाति पूर्णा पश्चादिति । तथादेवतं कृत्वा सूददोहसं करोत्यथ दक्षिण एवाꣳसे नक्षत्रेष्टका उपदधाति कृत्तिका नक्षत्रमग्निर्देवतेत्यथैना रोचयत्यग्ने रुच स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वेत्यथैतं नक्षत्रपथꣳ रोहिणीप्रभृत्या विशाखाभ्यामायातयति[1] । दक्षिणादꣳसाद्दक्षिणाꣳ श्रोणिमभ्यायातयत्यथ[2] पुच्छमन्वौ चात्मन्वौ चामावास्यामुपदधाति यत्ते देवा अदधुर्भागधेयमित्यथैतं नक्षत्रपथमनूराधाप्रभृत्यापभरणीभ्य आयातयत्युत्तरार्धे श्रोणेरुत्तरमꣳसमभ्यायातयत्यथोत्तर[3] एवाꣳसे पौर्णमासीमुपदधाति पूर्णा पश्चादित्यꣳसꣳ स्पृष्टा उपदधातीति ब्राह्मणं । नक्षत्रेष्टकाभिश्चितिरास्यते । तथादेवतं कृत्वा सूददोहसः करोत्यथावद्रुत्य कृष्णमश्वमभिमृश्य तनुपुरीषमुपदधाति पृष्टो दिवीति । तथादेवतं कृत्वा सूददोहसं करोत्यथ[4] षष्ठीं चितिं चिनुते संयच्च प्रचेताश्चेति पञ्चैकैकां दिक्ष्वेकां मध्ये । तथादेवतं कृत्वा सूददोहसः करोत्यथाग्निꣳ

---

१ Thus M Tr U; °शाखाभ्यां आयात° Be B, °शाखाभ्यामभ्यायात° H.

२ °थोत्तम° some of the MSS

३ Thus corrected; all MSS °थोत्तरोत्तरम° ।

४ अथ । s of अथ BH

सर्वलोमुखं चिनुते ऽथेरङ्गानि प्राजापत्यामृषभं लोकंपृणाः । प्राचीश्च लोकंपृणया सचीत्यग्निं प्राचीभिः संप्रच्छादयत्युदो-दीचीभिः । प्राचीभिस्त्वेव निश्लिष्यन्ति । यावद्दग्रं चेष्यमाणो भवति तावद्दग्रं[1] चिनुते । ऽप्यानभिन्नं चितिक्लृप्ता भवति । तदेतावतस्स्वयमातृण्णा याचति । तां दिक्षूपदधाति प्राणाय त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीद व्यानाय त्वा[2] चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीदापानाय त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीद वाचे त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ स्वयमातृण्णामश्वमवघ्रापयाविदुषा ब्राह्मणेन यज्ञाधिद्रुत्योपदधाति सुवरायोस्त्वा सद्ने सादया-सीत्यनुद्रुत्य सूर्यस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यपान्याकृतीर्यामुपधायेत्यपानित्य-थैष ब्राह्मणो वरं ददात्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्वयमा-तृण्णावकाशे जुहोति चित्तिं जुहोमि मनसा घृतेनेत्यनुष्टाभ्या-मन्वारभ्यान्वारोहं वाचयति दिवमारुक्षियर्ं सुवरगन्मेत्यपरे बिले हिरण्येष्टकामुपदधाति सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहीति । तां जघनेन प्रक्रमवेलायां मण्डलेष्टका-मुपदधाति यौरपराजितामृतेन विष्टेति । दक्षिणतो रेतः-सिचमुपदधाति द्यौ रेतःसिक् सा मे रेतो दधातु सा मे

१ B Bo Ms ins. चिति।

२ The following words, unto सीदेत्यथ, l. 9, are found thus in U only, all the other MSS. abbreviate

रेतः प्रजनयत्विति । तयादेवतं कृत्वा सूददोहसः करोत्यथोत्तरतः प्रक्रमवेलायां विकर्णीमुपदधाति प्रोथदश्वो न यवसे अविष्यन्निति । तयादेवतं कृत्वा सूददोहसं करोत्यथ लोकंपृणा उपदधाति लोकं पृण छिद्रं पृणेत्यथ[1] चितिक्लृप्ताभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या पङ्क्त्यैतां चितिमभिमृश्य ताभ्यामवद्रवति वाङ्म आसन्नसोः प्राण इत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते । वसन्त्येतां रात्रीम् । ॥ ४६ ॥ पञ्चदशः ॥

अथैतस्मिन्नेव नवमेऽह्नि दशमायाह्न उपकल्पयते सहस्रꣳ हिरण्यशल्कानूर्ध्वं चिभ्यो ऽपरिमितानित्येक आहुस्ते यदि सहस्रं भवन्ति द्वे शते पञ्चनाडीभ्योते[2] भवतो । ऽथ दशमेऽनुदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति । समानं पुरीषस्योपधानमथ पात्र्यामप आनीय हिरण्यशल्कान्संप्रकीर्य ताभ्यां ताभ्याꣳ शताभ्यां प्रोक्षति सहस्रस्य प्रमा असीति यत्प्राक् स्वयमातृण्णायै भवति सहस्रस्य प्रतिमा असीति यद्दक्षिणा स्वयमातृण्णायै भवति सहस्रस्य विमा असीति यत्प्रत्यक् स्वयमातृण्णायै भवति सहस्रस्योन्मा असीति यदुदक् स्वयमातृण्णायै भवत्यथ मध्यं ताभ्याꣳ शताभ्यां प्रोक्षति साहस्रोऽसि सहस्राय त्वेत्यथोत्तरे ओषन्ते तिष्ठन्निष्टका धेनूः कुरुत इमा मे अग्न

---

१ अत्र MTr, अथ the other MSS.

२ पञ्च॰ all, ॰नाडीभ्योते Tr UH Mv, ॰नाडीभ्येते BeM, ॰नाडीयोते B, Bhav. पञ्चनाडीषु पञ्चिपञ्चसुवर्णेषु निविष्टे(?) भवत.।

इष्टका धेनवः सन्त्वित्यन्तादनुवाकस्याथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य तावदेवैतदहः कर्म क्रियते । वसन्त्येतां रात्रिं संपेनमिष्टेन दशमे ऽस्येकादश्याश्च उपकल्पयते ऽर्कपर्णमश्मवीरं गावीधुकं चरुं तिसृधन्वमश्मानमुदकुम्भं मण्डूकमवकां वेतसशाखां दर्भस्तम्बमाज्यस्थालीं स्रुवं दीर्घवंशं द्वादशमित्यथैकादश्यां व्युष्टायां प्रातः प्रवर्ग्योपसद्भ्यां प्रचरति । स दीर्घवंशे स्रुवं प्रबध्योत्तमे संचिताग्नौ जुहोत्यग्ने वसुं तत्वा याचामीति । ॥ ४७ ॥

यावदेवास्याध्वर्युर्वेष्टति तावदेव प्रतिप्रस्थातोत्तरस्य पक्षस्य चरमयेष्टकया सयूद्रपुरीषयोपरमत्यथैतस्यार्कपर्णस्य पुटमन्तरवस्थाविषं छत्वोदङ् तिष्ठञ्जुहुयात् धारयन्नाधावरानयेति । स यत्र धारेष्टकां प्राप्नोति तत्प्रतिपद्यते नमस्ते रुद्र मन्यव इत्यान्तमेतमनुवाकं निगद्य द्वितीयं तृतीयं । चतुर्थस्य यत्राभिजानाति नमः श्वभ्य इति तत्स्वाहाकरोति । सो ऽत एव प्राङावृत्य नाभिदघ्ने धारयन्संग्रहीतृभ्य इति प्रतिपद्यातिशिष्टमनुवाकस्य[1] निगद्य पञ्चमं षष्ठं । सप्तमस्य यत्राभिजानाति नमो वर्ष्याय चेति तत्स्वाहाकरोति । सो ऽत एव दक्षिणावृत्य जानुदघ्ने धारयन्नवर्ष्याय चेति प्रतिपद्यातिशिष्टमनुवाकस्य[1] निगद्याष्टमं नवमं दशममेकादशस्य यत्राभिजानाति य एतावन्तश्च भूयांसश्चेति तत्स्वाहाकरोति । सो ऽत एव प्रत्यङा-

---

१ Thus M only, अनुवाकं all the other MSS

इत्य गुल्फदघ्ने धारयन्नमो रुद्रेभ्यो ये पृथिव्यामित्येतद्यजमानं वाचयति । नाभिदघ्ने धारयन्नमो रुद्रेभ्यो येऽन्तरिक्ष इत्येतद्यजमानं वाचयति । ग्रीवदघ्ने[1] धारयन्नमो रुद्रेभ्यो ये दिवीत्येतद्यजमानं वाचयत्यथैतदर्कपर्णं यं द्वेष्टि तस्य संचरे पशूनां न्यस्यति । यद्यु वै न द्वेष्याच्चत्वरे न्यस्यत्यथैतं गावीधुकं चरुं चरमायामिष्टकायां निदधाति यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्त्वित्यथैतत्तिसृधन्वं याचति । तेनोत्तरे श्रोण्यन्ते तिष्ठन्नुपतिष्ठते । अपि वानुपरिक्रामं यत्ते रुद्र पुरो धनुस्तद्वातो अनुवातु ते तस्मै ते रुद्र संवत्सरेण नमस्करोमि यत्ते रुद्र दक्षिणा धनुर्यत्ते रुद्र पश्चाद्धनुर्यत्ते रुद्रोत्तराद्धनुर्यत्ते रुद्रोपरि धनुरित्यथैनद्याचितं ब्राह्मणाय दद्यादथास्यैष उदकुम्भ उत्तरे श्रोण्यन्तेऽश्मना संस्पृष्टः[2] शेते । स यो बलवान्स्यात्तमाहानेनोदकुम्भेन संततया धारया त्रिः प्रदक्षिणं परिषिञ्चन्परीहीति । स तथा करोति । परिषिच्यमाने यजमानं वाचयत्यश्मन्नूर्जं पर्वते शिश्रियाणां वाते पर्जन्ये वरुणस्य शुष्मे । अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि संभृतां तां न इषमूर्जं धत्त मरुतः संरराणा इत्यथैतं कुम्भमश्मना संस्पृष्टं सादयत्यश्मंस्ते क्षुदमुं ते शुगृच्छतु यं द्विष्म इति । निधाय कुम्भं

---

१ Thus M Tr BU (sec m.) Ms Keś , ग्रीवा॰ Be U (pr. m )

२ Thus Bhav (one Ms ) and Ms , श्मानं संस्पृष्टं M , संस्पृ॰ Tr Bo BU Bhav (another Ms ) संस्प॰ H

यथेतं त्रिः पुनः प्रतिपर्यैत्यथैतस्मिन्नेव दीर्घवंशे प्रबध्नाति मण्डूकमवकां वेतसशाखां दर्भस्तम्बमिति । तेन यस्मात् स्वयमातृण्णायै भवति तद्विकर्षति समुद्रस्य त्वावकया हिमस्य त्वा जरायुणेति ॥ ४८ ॥

द्वाभ्यां पुरस्ताद्द्वाभ्यां दक्षिणतो द्वाभ्यां पश्चाद्द्वाभ्यामुत्तरतो ऽद्भिर्विकर्षतीति ब्राह्मणमथैतास्वेव कार्ष्णाजिनीष्वपानह्य एतं[1] च[1] दीर्घवंशꣳ संक्षिप्य चात्वाले संप्रकिरन्त्यथ शान्तो ऽग्निरित्याज्यस्थालीꣳ स्रुवमादायाधिद्रुत्याज्यस्थाल्याः[2] स्रुवेणोपघातꣳ सर्पाहुतीर्जुहोति । समीची नामासि प्राची दिगिति पश्चादासीनः पूर्वे बिले जुहोत्योजस्विनी नामासि दक्षिणा दिगित्युत्तरत आसीनो दक्षिणे बिले जुहोति । प्राची नामासि प्रतीची दिगिति पुरस्तादासीनो ऽपरे बिले जुहोत्यवस्थावा नामास्युदीची दिगिति दक्षिणत आसीन उत्तरे बिले जुहोत्यथैतेनैव यथेतमेत्य यत्रैव प्रथममहौषीत्तद्धि जुहोत्यधिपत्नी नामासि वशिनी नामासीत्यथ यावद्रुत्याग्निꣳ सामभिरुपस्थापयति । गायत्रेण पुरस्तादुपतिष्ठते ऽग्नेर्हृदयेन दक्षिणमुपपक्षꣳ रथंतरेण दक्षिणं पक्षं वारवन्तीयेन दक्षिणाꣳ श्रोणिमृतुस्थायज्ञायज्ञियेन[3] पुच्छꣳ श्यैतेनोत्तराꣳ श्रोणिं

---

१ Thus Tr BU Ms, एतंश Bc, एतश MH

२ Thus U (see m ) only, ॰स्थाल्या all the other MSS, also Ma; but Msc चाज्यस्थाल्यास्तकाशात्।

३ ॰यज्ञीयेन Tr H Ms

बृहतोत्तरं पक्षं प्रजापतेर्हृदयेनोत्तरमुपपक्षं वामदेव्येन मध्यमंयाह होतरग्नेरुक्थेनाग्निमनुशꣳसेति । यदि होता न कामयते यजमान एव जघनेन पुच्छं तृणानि सꣳस्तीर्य तेषूपविश्याग्नेरुक्थेनाग्निमनुशꣳसति पिता मातरिश्वाच्छिद्रा पदा धा अच्छिद्रा उशिजः पदानुतक्षुः सोमो विश्ववित्नेता नेषद्बृहस्पतिरुक्थामदानि शꣳसिषदोमिति सकृद्वा त्रिर्वीर्यैनꣳ स्तुतशस्त्रयोर्दोहं वाचयतीष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीयेत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरन्त्येतावदेवैतदहः कर्म क्रियते । वसन्त्येताꣳ रात्रिम् । ॥ ४९ ॥ षोडशः ॥

अथैतस्मिन्नेवैकादशेऽह्नि द्वादशायाह्न उपकल्पयत औदुम्बरꣳ स्रुवमौदुम्बरं द्रोणमौदुम्बरं प्रसेकमौदुम्बरीं वितष्टिं[1] तस्यां पञ्चगृहीतमाज्यं भवति दध्नः पूर्णामौदुम्बरीं तिस्र औदुम्बरीः समिधस्तिस्रो नानावृक्ष्या नानावृक्ष्यमिध्मं दधि मधुमिश्रं शुसुष्टिमवकाभारं पृश्निमश्मानमाज्यप्रोक्षं द्वितीयꣳ होतारमप्रतिरथस्यानुवक्तारं विम्लीनोत्पूतस्याज्यस्य द्वौ वा त्रीन्वा कुम्भान्ब्राह्मौदनिकान्व्रीहीन्सर्वौषधꣳ[2] रोहितं चर्मानडुहं कृष्णायै श्वेतवत्सायै पयो रथं चषालहोमीयꣳ शाकलान्परिधीनित्यथ द्वादशेऽह्न्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरन्त्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयार्धस्तनवतं प्रय-

१ Thus Tr U Be B Ms, वितष्टौ MH

२ Thus MU Tr Ms, ब्रह्मौदनि॰ B Be H

च्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यामधस्तनव्रतं प्रयच्छत्यथादत्ते पञ्चगृहीतमाज्यं दधि मधुमिश्रं पुमुष्टिमवकाभारमित्येत-त्समादायाधिद्रुत्यास्रुचा पञ्चगृहीतेन स्वयमातृण्णां[1] व्याघारयति नृषदे वडप्सुषदे वड्वनसदे वड् बर्हिषदे वट् सुवर्विदे वडित्येतयैव स्रुचोपघातं दध्ना मधुमिश्रेण गन्धर्वाहुतीर्जुहोति हेतयो नाम स्थ तेषां वः पुरो गृहा इति पश्चात्प्राचीनः पूर्वे बिले जुहोति निलिम्पा नाम स्थ तेषां वो दक्षिणा गृहा इत्युत्तरत प्राचीनो दक्षिणे बिले जुहोति वज्रिणो नाम स्थ तेषां वः पश्चाद्गृहा इति पुरस्तात्प्राचीनोऽपरे बिले जुहोत्यवस्थावानो नाम स्थ तेषां व उत्तराद्गृहा इति दक्षिणत प्राचीन उत्तरे बिले जुहोत्यथैतेनैव यथेतमेत्य यथैव प्रथममद्वीपीनद्धे जुहोत्यधिपतयो नाम स्थ क्रव्या नाम स्थेत्यथाह प्रतिप्रस्थातरिममग्निं कूर्मपृष्ठं कुर्विति तथ स कूर्मपृष्ठं करोति नाभौ चितमधितिष्ठत्यथ पुमुष्टिमादाय दध्ना मधुमिश्रेणावोक्षति ये देवा देवानां ये देवा देवेष्वधि देवत्वमायन्निति ॥ ५० ॥

द्वाभ्यां पुरस्तात्ताभ्यां दक्षिणतस्ताभ्यां पश्चात्ताभ्यामुत्तरतोऽनुपरिचारमवोचतीति[2] ब्राह्मणमथैनमवकाभारेण प्रतिच्छाद्य शोभारङ्ग समादिश्यावद्रुत्यापराजितिकाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरन्त्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयाग्नीद्देवा-

---

[1] Thus M Tr UH; ॰ष्ठां the other MSS.

[2] कुपरिचारम॰ M, but cp. TS v. 4 5 3

नरमारुतान्निर्वप[1] प्रतिप्रस्थातः प्रवर्ग्यस्यावृता प्रवर्ग्यꣳ सꣳसाद्योद्वासनायेति । चेधैतत्पदं कुर्वन्ति । गार्हपत्ये तृतीयमुपयमनीषु तृतीयं नि तृतीयं दधत्यथ प्रवर्ग्यस्यावृता प्रवर्ग्यमुद्वास्याधिश्रयति वैश्वानरं द्वादशकपालं मारुताꣳश्च सप्तकपालानथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये ऽनीकवन्तं जुहोत्यग्निस्तिग्मेन शोचिषेत्यनुद्रुत्य सैनानीकेन सुविदात्रो अस्मे इति जुहोत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव वैश्वकर्मणानि जुहोति । य इमा विश्वा भुवनानि जुह्वदित्यनुद्रुत्य विश्वकर्मा ह्यजनिष्ट देव इति जुहोत्यपरं चतुर्गृहीतं गृहीत्वा चक्षुषः पितेत्यनुद्रुत्य विश्वकर्मन्हविषा वर्धनेनेति जुहोति । नानैव सूक्ताभ्यां जुहोति नानैव सूक्तयोर्वीर्यं दधातीति ब्राह्मणमथ तिस्र औदुम्बरीः समिध आदधात्युदेनमुत्तरां नयेन्द्रेमं प्रतरां कृधि यस्य कुर्मो हविर्गृह इत्यथाभ्यादधातीध्मं प्रणयनीयमुपोपयमनीः कल्पयन्ति चात्वालादथ संप्रैषमाहाग्नये प्रणीयमानायानुब्रूह्याग्नीदेकस्फ्ययानुसंधेहि द्वितीयो होताप्रतिरथमन्वब्रवीत्विति । प्रतिपद्यत एष द्वितीयो होताप्रतिरथमाशुः शिशान इति । दशर्चं भवतीति ब्राह्मणमथैतेनैव सहाग्निमादत्ते पृश्निमश्मानमाज्यप्रोक्षं दध्नः पूर्णामौदुम्बरीं तिस्रो नानावृक्ष्या नानावृक्ष्यमिध्मꣳ शाकलान्परिधीनित्यथैनमुद्यच्छन्त उदु त्वा विश्वे देवा इति । पञ्चभिर्हरतीति

---

1 Thus Tr H Ms, मारुतानि॰ Bo, मारुतंनि॰ MUB

ब्राह्मणं । तासां द्वे परिशिष्यते भवतो । ऽथ विषुवत्याग्नीध्रस्य काले पृश्निमश्मानं निदधाति विमान एष दिव उचा मसुद्र इति द्वाभ्यामथ चतसृभिरा पुच्छादेनौष्ठं विश्वा अवीवृधन्निति । धारयन्त्येतमग्निमथैनꣳ संचितमाज्यप्रोक्षेण प्रोक्षति ॥ ५१ ॥

वसवस्त्वा रुद्रैः पुरस्तात्पान्त्विति पुरस्तात्पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्त्विति दक्षिणत आदित्यास्त्वा विश्वैर्देवैः पश्चात्पान्त्विति पश्चाद्द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पात्वित्युत्तरतो देवास्त्वेन्द्रज्येष्ठा वरुणराजानो ऽधस्ताच्चोपरिष्टाच्च पान्त्वित्युपरिष्टादथैतेनैव सहाग्निनाधिद्रवति प्राचीमनु प्रदिशं प्रेहि विद्वानूमध्वमग्निना नाकमुख्यं पृथिव्या अहमुदन्तरिक्षमारुहꣳ सुवर्यन्तो नापेक्षन्ते ऽग्ने प्रेहि प्रथमो देवयतामिति पञ्चभिर्धारयन्त्येतमग्निमथ दध्नः पूर्णामौदुम्बरीꣳ स्वयमातृण्णायां जुहोति । नक्तोषासेति पुरोऽनुवाक्यामनूच्याग्ने सहस्राक्षेति जुहोत्यथ प्रदक्षिणमावृत्येमं प्रतिष्ठापयति सुपर्णो ऽसि गरुत्मानिति । तिसृभिः सादयतीति ब्राह्मणसंयैनं विश्वस्याऊतिपार्श्वं कलाध्वराकृतिभिरभिजुहोत्यग्निर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्देवेभ्यः प्रभूताहुतं प्रम यजपतिं तिर स्वाहा वायुर्यज्ञं नयतु प्रजानन्सूर्यो यज्ञं नयतु प्रजानन्यज्ञो यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्देवेभ्यः प्रभूताहुतं प्रम यजपतिं तिर स्वाहेत्यथैतावद्भ्यामग्निरत्युत्तरं परिधाह्वं परिस्थाप्य धोपुपिता तिर्यञ्चꣳ रफ्फꣳ स्त्वा संप्रैयमाह

प्रोक्षणीरासादयेध्माबर्हिरुपसादयेत्यथाधिद्रुत्य शाकलान्परिधीन्परिधाय नानावृक्ष्यमिध्ममभ्यज्य स्वाहाकारेणाभ्याधाय तिस्रो नानावृक्ष्याः समिध आदधाति प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीं ताᳫं सवितुर्वरेण्यस्य चित्रामिति शमीमयीमथ द्वे स्रुवाहुती जुहोति चित्तिं जुहोम्यग्ने तमद्येत्यथ स्रुचि चतुर्गृहीतं गृहीत्वाज्यस्य पूर्णाᳫं स्रुचं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इत्यथ शुक्रन्मनसा दिशो ध्यायेद्दिग्भ्य एवैनमवरुन्द्धे' दध्ना पुरस्ताज्जुहोत्याज्येनोपरिष्टात्तेजश्चैवास्मा इन्द्रियं च समीची दधातीति ब्राह्मणमथात्रैव तिष्ठन्याचति वैश्वानरं द्वादशकपालं मारुतांश्च सप्तकपालानथोपस्तीर्य सर्वंश एव वैश्वानरमवदधदाहाग्नये वैश्वानरायानुब्रूहीति ' द्विरभिघारयत्यथात्याक्रम्याश्राव्याहाग्निं वैश्वानरं यजेति ' वषट्कृते मध्ये जुहोत्यथैनᳫं स्रुवाहुतिभिरभिजुहोति सुवर्म[1] घर्मः स्वाहेति पञ्चभिरथ मारुतैः प्रचरति[2] ॥ ५२ ॥

पर्युपस्तारं दर्विहोमाकारमीदृङ्[3] चान्यादृङ् चेत्यनुद्रुत्य शुक्रज्योतिश्च चित्रज्योतिश्चेति जुहोति ' शुक्रज्योतिश्च चित्रज्योतिश्चेत्यनुद्रुत्य ऋतजिच्च सत्यजिच्चेति जुहोत्यृतजिच्च सत्यजिच्चेत्यनुद्रुत्यर्तश्च सत्यश्चेति जुहोत्यृतश्च सत्यश्चेत्यनुद्रुत्य धो

१ Thus U Ms, cp TS v 7 5 b, सुवर्ण the other MSS
२ ॰सै. प्रचरति Tr U B Ms ॰सैचरति MH Be Bhav.
३ दार्विहो॰ M

ऽग्ने ऽनुवाक्यो गणस्तमनुद्रुत्य जुहोति । यो ऽग्ने ऽनुवाक्यो गणस्तमनुद्रुत्येदृक्षास एतादृक्षास इति जुहोतीदृक्षास एतादृक्षास इत्यनुद्रुत्य मितासश्च संमितासश्च न इति जुहोति । मितासश्च संमितासश्च न इत्यनुद्रुत्येदृङ् चान्यादृङ् चेति जुहोति । तानभितो वैश्वानरं परिचिनोति । गणेन गण-मनुद्रुत्य जुहोत्युच्चैर्वैश्वानरस्याश्रावयत्युपांशु मारुताञ्जुहो-तीति ब्राह्मणम् ॥ ५३ ॥

अथैतं प्रसेकमग्नावायातयति दक्षिणतो वोदञ्चं पश्चाद्वा प्राञ्चं । तस्य स्रुगिव पूर्वार्धो भवत्येवमेव मध्यं । चमस इव दुग्ध-संश्लिष्टस्तस्मिन्नुपस्तृणान आज्यप्रमत्तः संततमानय वसोर्धारां निगदिष्यामीति । स यत्र धारामग्निं प्राप्नोति तत्प्रतिपद्यते ऽग्नाविष्णू सजोषसेति सर्वामाप्त्वा[1] वसोर्धारामथैतं प्रसेकमग्ना-वनुप्रहरत्यथैनं संस्रावेणाभिजुहोत्यथ यदाज्यमुच्छिष्यते तस्मिन्ब्रह्मौदनं पचति । तं ब्राह्मणाश्चत्वारः प्राश्नन्ति । तेभ्य-श्चतस्रो धेनूर्दद्यादिति[2] ब्राह्मणमथास्यैतत्पुरस्तादेवौदुम्बरे द्रोणे सर्वौषधं दध्नाज्येन समुदायुतं भवति । तस्यौदुम्बरेण स्रुवेणोप-घातं वाजप्रसवीयं जुहोति वाजस्येमं प्रसवः सुषुवे अग्रे वाजो नः सप्त प्रदिश इति चतुर्दश स्रुवाहुतीरभिषेकाय प्रसेकं परिश्रित्यथैनमपिधाय प्रज्ञातं निदधात्यथ नक्तोषासेति

---

१ सर्वांम॰ M Tr H Mx, सर्वाम॰ U BeB Bhar

२ Thus MU Be B Mx (cp. TS v 7.3.4), ददाति i.e. of दद्या दिति H

कृष्णायै श्वेतवत्सायै पयो जुहोत्यथ पञ्चग्रहीतो जुहोत्यृताषाडृतधामेति । भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोत्यथ तिस्रो रुचो जुहोति यास्ते अग्ने सूर्ये रुचो या वो देवाः सूर्ये रुचो रुच नो धेहि ब्राह्मणेष्वित्यथ पात्र्यामाज्यमानीयाञ्जलिनोपघातं वातनामानि जुहोति समुद्रो ऽसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभि मा वाहि स्वाहा मारुतो ऽसि मरुतां गणः शंभूर्मयोभूरभि मा वाहि स्वाहावस्युरसि दुवस्वाञ्छंभूर्मयोभूरभि मा वाहि स्वाहेति । वातस्य हैके जुह्वतो मन्यन्ते[1] । ऽथैताञ्छाकलान्परिधीनग्नावनुप्रहरति । तदेतच्छाकलान्तम् । ॥ ५४ ॥ सप्तदशः ॥

अथ सदोहविर्धाने संमिनोति । सदोहविर्धाने संमित्याध्वरधिष्णियान्निवपति । तेषूपर्यग्निधिष्णियानुपदधाति समाग्ने वर्चो विहवेष्वस्त्वित्याग्नीध्रीय एकां च याजुषीं सप्त च लोकंपृणा । अथ होतुर्धिष्णिय एकां चैव याजुषीमेकादश च लोकंपृणा । अथेतरेष्वेकैकां चैव याजुषीं सप्तसप्त च लोकंपृणा । अथ[2] मार्जालीय एकां च याजुषीं पञ्च च लोकंपृणा । अथाग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्याहुता यूपमुच्छ्रयति । स्वरेन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति । तस्य प्रसिद्धं वपया चरित्वा वपाश्रपणी अनुप्रहृत्य[3] वसतीवरीर्गृहीत्वाथ[4]

1 Thus M Tr U H Bhav. Keś., मन्वते Be, मन्वते B
2 B ins च, Be च लोकंपृणा।
3 Here T1 ins सहृत्काम्य चात्वाले मार्जयन्ते य
4 °चरो परिग्रह° U Be B Ms.

पशुपुरोडाशं निर्वपति । तमनुवर्तन्ते ऽष्टौ देवसुवाꣳ हवीꣳष्यग्नये गृहपतय इत्येतानि । तानि नानावघ्नन्ति[1] । नाना श्रपयन्ति । नानाधान्यानि भवन्ति । प्रेष्यत्पशुपुरोडाशो ऽनुब्रूहि यजेतीतरेषाꣳ हविषाꣳ । स यत्र वारुणस्यावद्यन्नाह वरुणाय धर्मपतये ऽनुब्रूहीति तदुपभृति स्विष्टकृते सर्वेषाꣳ सकृत्सकृदुत्तरार्धादवद्यति । द्विरभिघारयति । न प्रत्यनक्त्यत्याक्रम्याश्राव्याह वरुणं धर्मपतिं यजेति । वषट्कृते जुहोत्यथ वै भवतीष्टो वरुणो भवत्यनिष्टः स्विष्टकृदथास्य ब्रह्मा हस्तं गृह्णातीति । स[2] यद्येष्टो वरुणो भवत्यनिष्टः स्विष्टकृदथास्य ब्रह्मा हस्तं गृह्णाति[2] ॥ ५५ ॥

सविता त्वा प्रसवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाꣳ रुद्रः पशूनां बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रः सत्यानां वरुणो धर्मपतीनामित्येतदेव सर्वं भवति ये देवा देवसुव स्थ त इममामुष्यायणमनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्येनं यजमानायतने तिष्ठन्तं प्राहैष वो ऽमी[3] राजेति येषाꣳ श्रेष्ठो भवति । सोमो ऽस्माकं ब्राह्मणानां राजेतीतरे प्रत्याहुरथ भूर्भुवः सुवरिति वाचं विसृजते । दाभ्यां सुखं विमृष्टे प्रति

---

१ Thus MU Bc; नानावघ्नति H; नानावध्नति B; नानाविघ्नन्ति Ms, तानि नाना पृथक् पविघ्नन्ति (sic) Msc.

२ This clause is omitted in most of the MSS.

३ भरता (as TS i. 8.10 d) Tr only, i. e. of मै ।

त्यचाम राज्यमधायि सर्वे भाता वरुणस्याभूवन्निति । गायत्रान्विष्णुक्रमान्क्रमते[1] विष्णोः क्रमो ऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसीत्यथ स्विष्टकृता चरति । न रौद्रस्येडामवद्यत्यपामेनमभ्यवहरन्ति गम्भिष्ठमिडान्ताः[2] पुरोडाशाः संतिष्ठन्ते । पत्नीसंयाजान्ताः पशुर्हृदयशूलान्त इत्येके । ऽथ वसतीवरीः परिहृत्य पयाꣳसि विमिथ्योपवसन्ति । ॥ ५६ ॥ अष्टादशः ॥

अथातो महारात्र एव बुध्यन्ते । समानं कर्मा स्रुचाꣳ सादनात्सादयित्वा स्रुचो ऽग्निं योगेन युनक्त्यग्निं युनज्मीमौ ते पक्षौ चिदसि समुद्रयोनिरिति तिसृभिरथ राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यद्भिरुदेति[3] । यः क्रतुस्तमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वैकादश रशना आदाय यूपमभ्यैति । स्वर्वन्तं यूपमुत्सृज्यैकादशिनान्पशूनुपाकरोत्याग्नेयं कृष्णग्रीवꣳ सारस्वतीं मेषीं बभ्रुꣳ सौम्यं पौष्णꣳ श्यामꣳ शितिपृष्ठं बार्हस्पत्यꣳ शिल्पं वैश्वदेवमैन्द्रमरुणं मारुतं कल्माषमैन्द्राग्नꣳ सꣳहितमधोरामꣳ सावित्रं वारुणं पेत्वमिति । तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय ।

---

१ Thus Mn Tr B H, गायत्र्यान्वि॰ Be

२ Thus Ú (sec m) Ms, गंभीर॰ Tr HU (pr. m.) गंविष्ठ॰ Be B, गम्भीरे ह्रदे M, which seems to be a periphrase of यथा गभिष्ठम् Bhav रौद्रं यवयोषमप्सु निनयति गम्भीरे ह्रदे ।

३ Thus only M, all the other MSS उदेति ।

तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । स[1] यत्र क्व च मध्यंदिनो[2] भवति तदेतद्धिरण्यपात्रं मधोः पूरयित्वा सौर्या चित्रवत्यावेक्ष्याप्रस्वमवघ्राप्य ब्रह्मणे ददाति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि हुत्वा त्रिभिर्मरुत्वतीयैश्चरति । सीदन्ति नाराशंस्या आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधो ऽधो माहेन्द्रायाथ पुरस्तादभिषेकस्य षट् पार्थानि जुहोत्यग्नये स्वाहा सोमाय स्वाहेत्यथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राङ्मुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य सर्वौषधेन पुरस्तात्प्रत्यङ्ङभिषिञ्चति । शीर्षतो ऽभिषिञ्चत्या मुखादन्ववस्रावयति ॥ ५७ ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामि बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीति[3] । समुन्मृष्टे समुत्क्रोशन्त्यभ्यषेच्ययमसावामुष्यायणो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ताग्निसवेनेत्यथ भूर्भुवः सुवरिति वाचं

---

१ om Be H.

२ माध्यंदिनो Tr H.

३ Some of the MSS. (MU Tr) give the formula बृहस्पतेस्त्वा etc. before इन्द्रस्य त्वा etc.; B Be give a text exactly as found TS i. 7.10h, H abbreviates thus: ०ग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा ०मिति

विसृजते । द्वाभ्यां सुवं विसृष्टे । गायत्राभिष्णुक्रमाक्रमते ।
उथोपरिष्टादभिषेकस्य षट् पार्थानि जुहोति ॥ ५८ ॥

इन्द्राय स्वाहा घोषाय स्वाहेति । द्वादश भूतानामवेष्टीर्जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्युभया माध्यंदिनः सवनः संतिष्ठते । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णाति । समानं कर्मा पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति[१] । तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशो । नाना दिश इत्येके । समानं कर्मा यज्ञायज्ञियस्य[१] स्तोत्राद्यज्ञायज्ञियस्य[१] स्तोत्र एकयाप्रस्तुतं भवत्ययाग्निमभिक्रमति नमस्ते अस्तु मा मा हिंसीरित्यो इत्तोदधिं भिन्तेति हाम्दाः । समानं कर्मा पत्नीसंयाजेभ्यः । पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याध्वरिकाणि समिष्टयजूंषि हुत्वा दशाग्निकान्युपजुहोति यदाकूतात्समसुस्रोदिति । [illegible] समावभृथादेतस्मिन्नवभृथे द्वितीय[illegible] जुहोति संकुह्याय [illegible] सिन्धूनां पतये [illegible] इति । [illegible] । इष्टयमेदिन्द्र[illegible]

मैत्रावरुणीं वशामुपाकरोति । तस्यै मैत्रावरुण्यामिक्षावदानीया भवति । सर्वपञ्चसां पशोः कुर्वन्त्यथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाज्यस्य पूर्णां स्रुचमग्नेर्विमोकं जुहोतीमं स्तनमूर्जस्वन्तं धयापामित्यथैनमुपतिष्ठते ये ऽग्नयः पुरीष्या इत्यथैनमाप्तिभिरुपतिष्ठत आपं त्वाग्ने मनसेति नवभिरनुष्टुप्छन्दसमथोदवसानीयया यजते । ऽथ देविकाहविर्भिर्यजते । ऽथ त्रैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संवत्सरं न कंचन प्रत्यवरोहति । न शीर्षमांसं खादति न वयसां मांसं । नाग्निं चित्वा रामामुपेयान्नाग्निचिद्वर्षति धावेद्यदि धावेदुपावर्तेतात्मानमेवाभ्युपावर्तेत इति ब्राह्मणम् । ॥ ५९ ॥ एकोनत्रिंशः ॥

॥ इति दशमः प्रश्नः ॥

---

दथान्तःपालमहौषीर्दधात्[1] आग्नीध्र[2] एव होष्यति । यूपमुच्छ्रयिष्यन्सावित्रं जुहोति । यदाध्वर्युश्च[3] यजमानश्च पुरस्तात्प्रत्यञ्चावञ्जन्तावभिसर्पतो[4]ऽथ प्रतिप्रस्थाता पश्चात्प्राङ् वासोभिर्वेष्टयन्नभिसर्पत्युदीचीनदशैर्वा विग्रथ्नाति धनुर्वेष्टौर्वा[5] प्रवेष्टयत्येतस्मिन्काले[5] प्रतिप्रस्थाता गोधूमकलापीमुभयतः समां कृत्वोष्णीषेण विग्रथ्नाति । तस्यां तच्चेष्टन्ति यथयाले । स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरिष्यन्सावित्रं जुहोति । तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्ग्रहीष्यन्सावित्रं जुहोति । पशुपुरोडाशं निर्वप्स्यन्सावित्रं जुहोत्यनुसवनं मौलि । तानि सप्तदशापि[6] वा[6] सवनेसवन एव जुहुयादित्येतदपरमेव पशुपुरोडाशं निर्वपति । समनुवर्तन्ते ऽष्टौ देवसुवां हवींष्यग्नये गृहपतय इत्येतानि । तेषामुक्तं चरणं यथाग्नेर्विधायामिडान्ताः

---

१ After ॰हौषीद् B Be U ins इति ; Keś cites the clause without इति ; it could, however, be right, cp Vol I p. 193, 15

२ आग्नीध्रीय Tr.

३ यथा॰ Be B ; the passage referred to is Vol I, p 113, 5 sqq.

४ Thus Be (sec m ) Bhav., प्रत्यञ्चावञ्जन्तावभि॰ Tr ; ॰वंञ्जनावभिस॰ Bo (pr. m.) B ; ॰वंञ्जसावभसर्पतो UH, ॰बोञ्जसावभसर्पतो BeH ; ॰वंजभोधवस M, ॰वाजधवस॰ F ; read perhaps ॰प्रत्यञ्चावञ्जयोपसर्पतो ।

५ धनुर्वेष्टौर्वा प्रवे॰ Tr Bo B ; धनुर्वेष्टिवा प्रवे॰ Bo H HF ; धनुर्वेष्टिर्वा प्रवे॰ U ; धनुर्वेष्ट इव प्रविवे॰ M. The Dvaidhasūtra citing this passage reads धनुर्वेष्टौर्वा प्रवे॰ ; I am not certain about the correct reading and the meaning of these words. Bhav comments धनुर्वेष्टनवद्वेष्टयति वा ।

६ अपि वा om B Be

दीक्षते । तस्य षोडश दीक्षास्तिस्र उपसदः सप्तदश्यां[1] प्रसुतो ऽपि वा सप्तदश दीक्षास्तिस्र उपसद एकविंशत्यां प्रसुतो ऽपि वा तिस्र एव दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः ॥ १ ॥

अथ यै भवति सावित्रं जुहोति कर्मणःकर्मणः पुरस्तादिति । दीक्षणीयां[2] निर्वप्स्यन्सावित्रं[2] जुहोति देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः स्वाहेति । दीक्षाहुतीर्होष्यन्सावित्रं जुहोति । प्रायणीयां[3] निर्वप्स्यन्सावित्रं[3] जुहोत्यन्तर्हिरण्यं[4] होष्यन्सावित्रं जुहोति । पदेन चरति । पदेन चरित्वा राजानं क्रेष्यन्नातिथ्यं निर्वप्स्यन्सावित्रं जुहोति । प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरिष्यन्सावित्रं जुहोत्येतस्मिन्काले प्रतिप्रस्थाता दक्षिणे शालाखण्डे ऽश्वं स्नापयित्वा वाजपेयस्वराजं संधापयति । महावेद्यै पूर्वं परिग्राहं परिग्रहीष्यन्सावित्रं जुहोत्याहवनीयं प्रणेष्यन्सावित्रं जुहोति । रथवाहने सदोहविर्धाने प्रमेष्यन्सावित्रं जुहोत्यग्नीषोमौ प्रणेष्यन्सावित्रं जुहोतीति

---

१ Thus M Tr U Be H Be (sec. m.), सप्तदशौ (as Āp xxiii 16) B Be (pr. m.), सप्तदशा F.

२ Thus M Be (sec. m.) Be H F, ॰णीयासवि॰ Tr BH Be (pr. m.), दीक्षणीयायां U

३ Thus Be UF, प्रायणीयासवि॰ Tr BH Be, प्रायणाय M.

४ Thus U Tr HF Be H Bhar ॰हिरण्यं M Be

इध्मान्तःशालमग्नीषोमीयात्[1] आग्नीध्र[2] एव होष्यति । यूपमुच्छ्रयिष्यन्नाविशं जुहोति । यदाध्वर्युश्च[3] यजमानश्च पुरस्तात्प्रत्यञ्चावञ्जन्तावभिमर्षतो[4] ऽथ प्रतिप्रस्थाता पश्चात्प्राङ् वासोभिर्वेष्टयन्नभिमर्षत्युदीचीनदशैर्वा विमथ्नाति धनुर्वेष्टीर्वा[5] प्रवेष्टयत्येतस्मिन्काले प्रतिप्रस्थाता गोधूमकल्माषीमुभयतः समां शलोष्णीषेण विमथ्नाति । तस्यां तच्चेष्टन्ति यक्षपाले । स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरिष्यन्नाविशं जुहोति । तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्ग्रहीष्यन्नाविशं जुहोति । पशुपुरोडाशं निर्वप्स्यन्नाविशं जुहोत्यनुसवनं चौणि । तानि अमदर्शापि[6] वा[6] सवनेसवन एव जुहुयादित्येतदपरमथ पशुपुरोडाशं निर्वपति । तमनुवर्तन्ते ऽष्टौ देवसुवाᳪ हवींष्यग्नये गृहपतय इत्येतानि । तेषामुभं चरणं यथाग्रेर्विधायामिडान्ताः

---

1 After अग्नीषोमीयात् B Bo U ins इति; Keś cites the clause without इति; it could, however, be right, cp. Vol. I. p 193, 15

2 आग्नीध्रीय Tr.

3 यथा॰ Bo B; the passage referred to is Vol I, p 113, 5 sqq.

4 Thus Bo (sec. m ) Bhav; प्रत्यञ्चावञ्जन्तावभि॰ Tr; ॰वंजंतावभिम॰ Bo (pr. m ) B; ॰वजमावक्षपर्षतो UH, ॰वांजमावक्षपर्षतो BoH, ॰वजमी-मवम M, ॰वाजमवक्षम॰ F; read perhaps ॰प्रत्यञ्चावञ्जन्तोपमर्षतो ।

5 धनुर्वेष्टीर्वा प्रवे॰ Tr Bo B, धनुर्वेष्टिंवा प्रवे॰ Bo H HF; धनुर्वेष्टिर्व प्रवे॰ U; धनुर्वेष्ट इव प्रविवे॰ M. The Dvaidhasūtra citing this passage reads धनुर्वेष्टीर्वा प्रवे॰; I am not certain about the correct reading and the meaning of these words. Bhav. comments धनुर्वेष्टनवद्वेष्टयति वा ।

6 अपि वा om. B Bo

पुरोडाशाः संतिष्ठन्ते । पत्नीसंयाजान्ताः पशुरैन्द्रश्शूलान्त इत्येके । ऽथैतान्दुन्दुभीनुद्दिशमाघ्नयति सप्त दक्षिणायाꣳ श्रोण्यां पञ्चोत्तरस्यां चतुरो दक्षिणे ऽꣳसे त्रीनुत्तरे ऽꣳसे । तथा ह्याभ्यो दिग्भ्यो वाचमवरुन्धत इति ह स्माह बौधायनो । ऽथैषामौर्ध्वं गुल्फदघ्ना आमग्नाः स्युरित्याश्मीगविरभितः सद इति कात्यो । ऽथ वसतीवरीः परिहृत्य पयाꣳसि विशिष्योपवसन्ति । ॥ २ ॥ प्रथमः ॥

अथातो महाराज एव युज्यन्ते । प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यपो ह्यध्वर्युरभिद्रवत्येतस्मिन्काले[1] प्रतिप्रस्थाता वाजपेयग्रहाꣳ संपच्य[2] मगत्वामादाय दक्षिणया द्वारोपनिर्हृत्य दक्षिणेन सदः परीत्य दक्षिणेन मार्जालीयं धिष्णियं पर्यावृत्यापरया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसादयत्यथाध्वर्युरभिरुदैति[3] । सर्वान्क्रतूनुपैति । समिद्धो ऽभिषवः । समिद्धं यथा गृह्णन्ति । समानं कर्माग्रयणाद्ग्रहादाग्रयणं[4] गृहीत्वा पञ्चैन्द्रानतिग्राह्यान्गृह्णात्युपयामगृहीतो ऽसि नृषदं त्वा द्रुषदमित्येताभिः पञ्चभिरथैना-

---

१ ह before अध्वर्यु॰ only in Tr Be II; ध्वर्यु॰ M and अभिद्रवति Be II Tr, अधिद्रवति H

२ Thus Tr U Bo Be II (pr. m); संपच्य F, संपचयति M; संपचयेति Be II (sec m), संपचयत्य H

३ Thus M, उदैति all the other MSS.

४ Some of the MSS insert ग्रहं ।

न्दक्षिणार्धपूर्वार्धे खरस्य शुक्रवतीमासादयति । यावदेवाचाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता मत उदीचीनदशेन वालेन सुरां पुनाति पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । वारेण शश्वता तनेति । वायव्यमेवाध्वर्युरादत्त उपयामं प्रतिप्रस्थाताध्वर्युः पूर्वो वायव्येन द्रोणकलशात्सोमग्रहाग्गृह्णात्यया विष्ठा जनयन्कर्वराणीत्यनुद्रुत्योपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेत्यथ प्रतिप्रस्थातोपयामेन सतात्सुराग्रहान्गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतो ऽसि प्रजापतये[1] त्वेति गृह्णाति । प्रजापतये त्वेति सादयति । नैव[1] जुष्टं करोति न[2] योनिं । तावेवमेव व्यतिषङ्गं ग्रहान्गृह्णीतः सम्प्रदायेतरः सम्प्रदायेतरः । पुरो ऽध्वमेवाध्वर्युः सोमग्रहान्द्विश्रेणि[3] वा त्रिश्रेणि[3] वोदीच आयातयति । पश्चादेवं प्रतिप्रस्थाता सुराग्रहान्द्विश्रेणि[3] वा त्रिश्रेणि[3] वोदीच आयातयत्यथ षोडशिनं गृह्णात्यातिष्ठ वृत्रहन्रथमित्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यपोक्ष्य गृह्णाति । समानं कर्मा-

---

१...१ Thus according to B Bo Tr, MFH only· प्रजापतये त्वेति सादयति नैव ; Bo II U प्रजापतये त्वा गृह्णामीति इति परिमृज्य प्रजापतये त्वेति सादयति नैव ।

२ नैव Bo II C.

३ त्रि॰ and त्रि॰ BU

श्विनाहृवादाश्विनं ग्रहं गृहीत्वा रशना आदाय यूपमभ्येति[१]। स्वर्वन्तं यूपमुत्सृज्याथैतान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमैन्द्रं मारुतीं गोवशाᳪ सप्तदश प्राजापत्यान्श्यामानेकरूपान्सारस्वतीमन्ततो। ऽथ निर्मन्थ्यमाहृत्य निर्मन्थ्येन चरति। प्रत्याभिक्रम्याथैता-न्नानादेवत्यान्पशून्पृथग्द्विगुणाभिरभिधाय पृथक् त्रिगुणाश्च नियुनक्त्यथैतान्समानदेवत्यान्पशून्पृथग्द्विगुणाभिरभिधायैकस्मिं यूपार्थे नियुनक्त्यपि वा पशौ पशुं प्रसजति[३]। सारस्वती-मन्ततो नियुज्याथैनान्प्रोक्ष्य निपाय्योपोह्योदूह्य प्रोक्षणी-धानम् ॥ ३ ॥

अथैनान्समिधमादाय आहाग्नये समिध्यमानायानुब्रूही- १०
त्यभ्यादधातीध्मं। परि समिधᳪ शिनष्टि। वेदेनोपवाजय-
न्ननूच्यासु सामिधेनीषु स्रुवेणाघारमाघारयति। संमृष्टे
स्रुग्भ्यामुत्तरमाघारमाघारयन्स्रुचावुद्गृह्याक्रम्य जुह्वा पशुमनक्त्य
सादयित्वा स्रुचौ प्रवरं प्रवृणीते[२]। समिद्धस्त्विजो वृणीते।
सीदति होता। प्रसवमाकाङ्क्षति। प्रसूतः स्रुचावादायात्या- ११
क्रम्याश्राव्याह समिद्धः प्रेष्येति। वषट्कृते जुहोति प्रेष्य प्रेष्येति
चतुर्थाष्टमयोः समानयमानो ऽष्टमे सर्वᳪ समानयते। परि
स्वाहाकृतीभ्यः प्रस्थावᳪ शिनष्टि। दश प्रयाजानिष्ट्वोद्धृत्या-

---

१ Om. M Tr Bo U.

२ Thus M Tr B Bo Keś, बर्हति Be II UFH

३ Thus Be II F, प्रसंजति Tr, प्रतिषजति U; प्रसजति H; प्रसंजयति M, विषुजति Be.

कस्य स्वरुशासैः पशून्समनक्ति ' ते[1] एते[1] नानादेवत्याः पशवो नानास्वरवो नानाशासा अथैते समानदेवत्याः पशवः समानस्वरवो नानाशासाः[2] ' समानं कर्म पर्यग्निकरणादथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते ' तेषाꣳ शास्त्र्युत्तरार्ध्या भवत्याग्नेय उपचारत[3] ' आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते ' पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्त[4] ' आग्नेयायैवाध्वर्युः पशवे निहन्यमानाय बर्हिरुपास्यति पृथगितरेभ्यस्तेत इतरान्प्राचो वोदीचो वा निघ्नन्त्यथ शाखतो मायुं कृणवतेत्युक्त्वैतेनैव यथेतमेत्य पृथगाज्यावकाश आसत इह प्रजा[5] विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्मान् अवन्तु पयसा घृतेनेति ' संज्ञप्ताज्याहुतिं जुहोति संज्ञप्ताहुतिं यत्पशवो मायुमकृषतेत्ययाभ्येति[6] शमितार उपेतनेति ' पाशेभ्यः पशून्प्रमुच्यमानाननुमन्त्रयतेऽदितिः पाशान्प्रमुमोक्त्वेतानिति ' पृथगविपाशाभिरुपसृजेमां दिशं निरस्यत्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तमिन्प्रतिमुञ्चामि पाशानिति ' ॥ ४ ॥

---

१ Thus M Tr Bo H HF, चरैते B Be U (sec. m )

२ समानाशासाः M

३ उपचरत M Tr U

४ Thus M Be H UHF, ॰नुपूर्वम॰ Be B Tr

५ Thus (cp Vol I, p 118, 1) Be H F; पशवो M Tr Be UH Ked.; Āp. (vii 17. 1) has also पशवो but the fem. घृताचीः (घृताच Tr F) points to प्रजाः, cp also Maitr S iv 2 10

६ Thus all exc B (? ॰भ्येति )

श्विनाद्द्वारादाचितं षष्ठं[1] गृहीत्वा यज्ञगता आदाय यूपमभ्येति[2] । स्वर्वन्तं यूपमुत्सृज्याथैतान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमैन्द्रं मारुतीं गोवशाः सप्तदश प्राजापत्यांश्चामानेकरूपांश्च सारस्वतीमन्ततो । ऽथ निर्मथ्यमाहृत्य निर्मन्थ्येन चरति । प्रचर्याभिक्रम्यैतानानादेवत्यान्पशून्पृथग्दिग्गुणाभिरभिधाय पृथक् त्रिगुणासु मिथुनान्यैतान्समानदेवत्यान्पशून्पृथग्दिग्गुणाभिरभिधायैकस्यां यूपायां मिथुनान्यपि वा पशौ पशुं प्रभजति[3] । सारस्वतीमन्ततो नियुज्याथैनान्प्रोक्ष्य निपाय्योपोह्योदूह्य प्रोक्षणीधानम् ॥ ३ ॥

अथेध्मासमिधमादधान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं । परि समिधः शिनष्टि । वेदेनोपवाजयत्यनूच्यमानासु सामिधेनीषु स्रुवेणाघारमाघारयति । संस्पृष्टे स्रुग्भ्यामुत्तरमेषामग्नेरपीधन्स्रुचावुदङ्ङत्याक्रम्य जुह्वा पशूनसमज्य सादयित्वा स्रुचौ प्रवरं प्रवृणीते । समिद्धन्तृत्विजो वृणीते । सीदति होता । संप्रेषमाकाङ्क्षति । प्रसृतः स्रुवमादायात्याक्रम्याश्राव्याह समिधः प्रेष्येति । वषट्कृते जुहोति प्रेष्य प्रेष्येति चतुर्थाष्टमयोः समानयमानो ऽष्टमे सर्वं समानयते । परि स्वाहाकृतीभ्यः संस्रावं शिनष्टि । दश प्रयाजानिष्ट्वोद्धृत्या-

---

१ Om. M Tr Bo U.

२ Thus M Tr B Bo Kes, सर्वेति BoII UPH

३ Thus BoII P, प्रभजति Tr, प्रतिभजति U, प्रभजति H; प्रभेजयति M, विभजति Bo.

क्रम्य स्वरुंशासैः पशून्समनक्ति । त[1] एते[1] नानादेवत्याः पशवो नानास्वरवो नानाशासा अथैते समानदेवत्याः पशवः समानस्वरवो नानाशासाः[2] । समानं कर्म पर्यग्निकरणादथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते । तेषाꣳ सारस्वत्युत्तरार्ध्या भवत्याग्नेय उपचारत[3] । आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते । पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्त[4] । आग्नेयायैवाध्वर्युः पशवे निहन्यमानाय बर्हिरुपास्यति पृथगितरेभ्यस्तान् इतरान्प्राचो वोदीचो वा निघ्नन्त्यक्षण्वतो मायूꣳ संज्ञपयतेत्युक्त्वैतेनैव यथेतमेत्य पृषदाज्यावकाश आसत इह प्रजा[5] विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्माꣳ अवन्तु पयसा घृतेनेति । संज्ञप्तान्प्राहुर्जुहोति संज्ञप्ताहुतिं यत्पशवो मायुमकृतेत्यथापाश्यैति[6] शमितार उपेतनेति । पाशेभ्यः पशून्प्रमुच्यमानाननुमन्त्रयतेऽदितिः पाशान्प्रमुमोक्त्वेतानिति । पृथगविशाखाभिरुपमज्जेना दिशं निरस्यत्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशानिति । ॥ ४ ॥

---

१ Thus M Tr Be 11 HF, अथैते B Be U (sec m)

२ समानाशासा. M

३ उपचरन्त M T1 U

४ Thus M Be 11 UHF, °नुपूर्वम° Be B Tr

५ Thus (cp. Vol I, p 118, 1) B1 11 F, प्रजावी M T1 Be UH Keś, Āp (vii 17 1) has also प्रजावी but the fem. घृताचीः (घृताच्य Tr F) points to प्रजाः, cp also Maitr S iv 2 10

६ Thus all exc B (: अश्येति).

अथ प्रतिप्रस्थाता पत्नीमुदानयत्युदकमण्डलुमुत्थाप्यानुपूर्वं[1] पशूनां प्राणानाप्याययत्यन्वगध्वर्युर्वपा उत्खिदन्नेत्याग्नेयस्यैवाध्वर्युर्वपया[2] प्रथमया प्रतिपद्यते ऽनूचीरितरा आहरन्त्याग्नेयस्यैव वपायै प्रतितप्यमानायै बर्हिषो ऽग्रमुपास्यत्युपेतरा अथ श्रपणाग्नेयस्यैव वपाꣳ स्रुवाहुत्याभिजुहोत्युपेतरा अथ स्वाहाकृतिभिश्चरित्वा मꣳस्रावेण पृषदाज्यमभिघार्याग्नेयस्यैव वपामभिघारयत्युपेतरा अथ संप्रेष्यति पुरस्तात्स्वाहाकृतिꣳ स्रुवाहुतिꣳ हुत्वैतेषां नानादेवत्यानां पशूनामनुब्रूहि प्रेष्येति वपाभिघारयत्येतेषाꣳ[3] समानदेवत्यानां पशूनां मुख्यस्य वपाꣳ समवत्तमुत्पन्नाय प्रजापतय इत्युपांशु छागानां वपानां मेदसो[4] ऽवदीयमानस्यानुब्रूहीत्युच्चैर्यावतीः[5] स्रुक्संभवत्यर्पयेतराः[6] पार्श्वा वेडसूनेन वोपोषच्छन्तो[1] द्विरभिघारयत्यथाक्रम्याश्राव्याह प्रजा-

---

१ Thus Tr B Be F, मानुपूर्वं U Be II H, ऋद्यायानुपूर्वं M.

२ Thus (उत्खिदन्नेति) Tr; उत्खिदन्नेति M Be; उत्खिदन्नेति B, उत्खिदन्ति or उद्धरन्ति the other MSS., Bhav उद्धरन्त्यक्ति।

३ चरित्वायै॰ Tr Be B.

४ मेदसोऽवदीयमानस्य Tr Be (pr m) BF, ॰वदीयमानानाम॰ Be II U; H is partly corr but reads ऽववदीयमानस्य; M pr m. gen sing., sec. m. (not wholly certain) gen. plur. of the part, मेदसोऽवदीयमानानाम॰ Be II U Keś, वपानां मेदसामवदीयमानानाम॰ Be (sec. m.).

५ यावतीः (sc. वपाः ?) M Be II U; यावद् Be B; यावन्ति Tr.

६ Thus only Tr, cp xv 31 स्रुक्संभवति U H, स्रुक्संभवति F; स्रुवसंभवति B, स्रुक्संभवति M; स्रुक्संभवति Be II Be

पतय इत्युपांशु छागानां वपा[1] मेदः प्रस्थितं प्रेष्येत्युच्चैर्वषट्कृते वपा[2] जुहोत्युपांशु सारस्वत्यै वपया [3]चरत्यथोपरिष्टात्स्वाहाकृतिं स्रुवाहुतिं हुत्वा वपाश्रपणीरनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते ऽथ पशून्विशास्ति[4] शमितरित्याह यन्मास्त्या अनवदानीयं तदभ्यर्धाच्छ्रपयतादित्यथ[5] सावित्रं हुत्वा प्रसर्पन्ति प्रातःसवनाय तदृजुधा संतिष्ठते ॥ ५ ॥ द्वितीयः ॥

अथ सावित्रं हुत्वा प्रसर्पन्ति माध्यंदिनाय सवनाय देवौ द्वाराविव्यत एवोर्ध्वेन संप्रसृप्तान्विदित्वाध्वर्युः प्राञ्चयन्नाह चात्वाले रथचक्रं निमिनुत रथवाहने रथमाधत्ताश्वान्पल्पूलयत यद्दास्यन्नसि[6] तद्दक्षिणत उपस्थापयाभिषोतार[7] एत कुरुत यावस्तुतमेहि यजमानेति समिद्धो ऽभिषवः समिद्धं यदा गृह्णन्ते समानं कर्माग्रयणाद्गृहादाग्रयणं गृहीत्वा षोडशिन-

---

१ वपा Be 11 HF, वपाभ्यां M Tr Be B.

२ वपा om all exc. Be B

३ प्रचरत्य॰ B Be H

४ विशास्तीति Be U (sec. m.), विशाधिति B, विशाधि the other MSS. (also U pr m)

५ Thus Be 11 (sec m.), तदर्धाच्छ्॰ M, तदश्यर्धाच॰ Tr, मद्यद्धाच्छ्॰ Be 11 (pr m), नपघ्यश(?)च॰ H, the other MSS. corr., Bhav. seems to have read अभ्यर्धात्, the meaning is पृथक्।

६ Thus U Be 11 H; ददास्यन्नसि F, यैददास्यौ B, यदास्यौ Be, यदास्य (broken off) भिनोदक्षिण॰ M, यदास्यो Tr, after असि H ins. वैदेद, Be B भाजालीये, Tr · भाजालीयं, these MSS om. तद्।

७ Thus Be 11 UHF, ॰स्थापयताभि॰ M Tr B Be.

अभिगृह्णातीन्द्रमिद्धरी वहत इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति । समानं कर्म दाक्षिणेभ्यो । दाक्षिणानि होष्यन्नापत्याध्वर्युराग्नीध्र समुदाय स्रुचं वासस्यैतस्य वसनस्यान्तमायां दशायां निष्क-रज्जुः प्रथिता[1] भवत्येतत्समादायाहैहि[2] यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण[3] सदः परीत्याग्रेण शालां तिष्ठते[4] प्रतिप्रस्थाता एतानि शस्त्राणि प्रथक्कृत्याहैहि यजमानेति । रथ एष दक्षिणे श्रोण्यन्ते रथवाहन आहितो भवति । तमुपावहरतीन्द्रस्य[5] वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादित्यथैनं धूर्गृहीतमन्तर्वेद्यभ्यवर्तयन्ति[6] वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषदित्यथास्याश्वानप्स्ववगाह्यन्त्यप्स्वन्तरमृतमप्सु[7] भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिन इत्यथ दक्षिणं योग्यं युनक्ति वायुर्वा त्वा मनुर्वा त्वा

१ Thus Be 11 UF, Bhar, Keś.; ॰थितो the other MSS.

२ भवतीत्येत॰ M Tr

३ पर्याहृत्य i e. c. परीत्य Be B.

४ तिष्ठन् M; तिष्ठति F, तिष्ठते the other MSS

५ Thus Tr Be 11 Be BU (sec. m.); pluralis verbi the other MSS.; ॰मवतारयति Bhar. Keś

६ Thus M Tr U (pr m.); ॰भ्यावर्तयति Be BTU (sec m.). ॰भ्यवर्तयति H, प्रवेशयति Keś, cf. infra xii 7 (p. 95, l 10).

७ The first ॰अप्सु om. MH

गन्धर्वाः सप्तविंशतिः । ते अग्रे अश्वमयुञ्जन्ते अस्मिञ्जवमादधुरित्यथास्य पृष्ठं संमृज्यते ऽपां नपादाशुहेमन्य ऊर्मिः ककुद्मान्प्रतूर्तिर्वाजसातमस्तेनायं वाजꣳ सेदित्येवमेवोत्तरं योग्यं युनक्ति । तस्यैवमेवोत्तरतः प्रष्टिमुपनियुनक्ति । तयोरेवमेव पृष्ठे[1] संमृज्यत । एतस्य योगमनु सर्वमापिवद्युज्यते । ऽधिकक्ष्यान्हस्तिनः कुर्वन्ति । प्रवेष्टयन्ति वासोभारान्वसनानां दशासु निष्कारज्जूः प्रयच्छन्ति । पूगशो दक्षिणा आयातयत्यथ सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति । नयवत्यर्चाग्नीध्रे जुहोति[2] । सृज्यन्ते[2] दक्षिणा दक्षिणापथेन । स यत्किंचिद्ददाति[3] हिरण्यमुखमेव ददात्यथ वासाꣳस्यथ[4] युक्तानि गोअश्वꣳ हस्तिपुरुषमन्ततो[5] । ऽदत्ता एवैते रथा अतिवर्तन्ते । नैते ऽन्यस्य सन्त आजिं धावन्ति । सनमेव रथमध्वर्यवे ददाति मनसा समनुदिश्य[6] दक्षिणास्तिभिर्मरुत्वतीयैश्चरति । सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधो ऽधो[7] माहेन्द्राय । ॥ ६ ॥

---

१ पृष्ठे M Tr Be U, पृष्ठं BFH

२ Thus M Tr Be H HF, जुहोत्युत्सृज्यन्ते Be B, जुहोति सृजन्ति U

३ यत्किचद्० Tr

४ Thus Tr HF, Be B वसाꣳसि is of वस, M (injured) वासा...सि ददाति अथ युक्ता अनो ।

५ Before पुरुष० Tr F ins दास०, H दासी; Bhav हस्तिपुरुषम्, cf infra xii 7

६ समनुदिश्य UH Be H, समुदिश्य M Tr Be B, समुदिश्य F

७ Thus, with ध, all, also K... but B ... m ...

अथ याचति नैवारꣳ सप्तदशशरावꣳ । स एष क्षीरे शृतो भवति । तेन चरति[1] बृहस्पतये ऽनुब्रूहि बृहस्पतिं यजेति । तमनिष्टस्विष्टकृतमपिधाय प्रज्ञातं निदधात्यथैतत्पुरस्तादेवौदुम्बरे द्रोणे सर्वौषधं दध्नाज्येन मधुदायुतं भवति । तमौदुम्बरेण स्रुवेणोपघातꣳ सप्तान्नहोमाञ्जुहोति वाजस्येमं प्रसवः सुषुवे अथ दर्व्यभिषेकाय प्रसेकं परिशिनष्ट्यथैनमपिधाय प्रज्ञातं निदधात्यथ पुरस्तादभिषेकस्य षट् पार्थानि जुहोत्यग्नये स्वाहा सोमाय स्वाहेत्यथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य सर्वौषधेन पुरस्तात्प्रत्यञ्चमभिषिञ्चति । शीर्षतो ऽभिषिच्य मुखादन्ववस्रावयति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा[2] साम्राज्येनाभिषिञ्चामि[2] बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीति । समुन्मृष्टे अमुत्रोऽभ्यभ्यषेच्ययमसावामुष्यायणो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता वाजपेयेनेत्यथ भूर्भुवः सुवरिति वाचं विसृजते । दाभ्यां मुखं विमृष्टे । गायत्रान्विष्णुक्रमानाक्रमते[3] । ऽथोपरिष्टादभिषेकस्य षट् पार्थानि जुहोती-

---

[1] प्रचरति Bc B

[2] Tr Bc B U (sec. m.) om., M places बृहस्पतेस्त्वा etc before इन्द्रस्य त्वा ।

[3] Thus Tr U Bc H H F, गायत्राद्वि॰ M Bc B

श्राय स्वाहा घोषाय स्वाहेति । द्वादश भूतानामवेष्टीर्जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्यथैतस्य बार्हस्पत्यस्य स्विष्टकृता चरत्यथैनमादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामत्युत्तरत[1] एते[2] रथा युक्तास्तिष्ठन्ति[3] । तदेतानध्वर्युर्जो ऽश्वानवघ्रापयति वाजिनो वाजजितो वाजꣳ सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमवजिघ्रतेत्यथैनमपिधाय प्रज्ञातं निदधात्यथ रथमभिप्रैति विष्णोः क्रमो ऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसीत्यथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं याविति[4] । रथमातिष्ठति देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमित्यथैतस्मिन्काले चात्वाले रथचक्रं निमितं ब्रह्मारोहति । तमत[5] एवानुमन्त्रयते देवस्याहꣳ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकꣳ रुहेयमित्यथ यजमानमन्नाम्नायोऽञ्जिनीर्वाचयत्यग्निरेकाक्षरेण वाचमुदजयदिति सप्तदशायाम्ना ध्याजसौ[6] मधन्वत्यवाजसि वाजिनि वाजिषु वाजिनीवत्यन्वामममतु वाजयेति । तया यथायुक्तमवाग्निप-

---

1 °त्तरतः° M U Bo H Bh Bo (pr. m.), °त्तरतः° Tr Bo (sec. m.) Bhav, Kei

2 यते Tr Bo H U

3 युक्ता om Bo B.

4 Tr Bo B ins. यथ ।

5 तमत i.e. तम M.

6 Thus Bo H U P, Kei, Bhav (sec copy); [illegible] Tr, [illegible] M, [illegible] Bo, [illegible] B [illegible] H

त्वर्वासीति दक्षिणꣳ सप्तिरसीति मध्यमं वाज्यसीत्युत्तरमथै-तानाजिसृतो[1] ऽवख्यापयति[2] वाजिनो वाजं धावत मरुतां प्रसवे जयत वि योजना मिमीध्वमध्वन स्कभ्नीत काष्ठां गच्छते-त्यौदुम्बर्येषा स्थूणा सप्तदशसु प्रव्याधेषु निमिता । तां काष्ठे-त्याचक्षते । तानाजिसृतो ऽतीत्य[3] मा[3] गच्छत[3] मो[4] एनाम-प्राप्य[5] निवर्ततान्तःपथमेनां[5] कृत्वा सव्यानवस्थाय दक्षिणैरनु-परिवर्तयाश्वै[6] र्मो[6] अप्रसृताः[6] सर्पतेति[6] । ॥ ७ ॥ तृतीयः ॥

अथाहाभिमर्ष यजमान माहेन्द्रं ग्रहं ग्रहीष्यामीत्यन्वारब्धे यजमाने माहेन्द्रं ग्रहं गृह्णाति महाꣳ इन्द्रो य ओजसेत्यनु-द्रुत्योपयामगृहीतो ऽसि महेन्द्राय त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेति । तदेतान्पञ्चै-न्द्रानतिग्राह्यान्सह सꣳसादयत्यथाप[7] उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते

[1] ०सृतेनान० Be B Keś , ०सृतेनान० the other MSS

[2] Thus M Tr Bo D F H Keś , विख्याप० Be II U and Comm on Taitt. S Vol I, p. 1024.

[3] These three words only in Be B and Bhav , the other MSS and Keś omit them

[4] Thus Tr Be B Keś , मैनाम० the other MSS

[5] Thus Be B, निवर्तन्तान्ता० Tr, निवर्तान० M Bo II U; निवर्तन्ता० H , निवर्त्यान्तिनान० F

[6] Thus Be B, ०याश्वैर्मो FH; ०यश्वप्रसृतास्सर्पतेति Tr. ; ०यश्वमाप्रसृता सर्पेति M , ०याश्वैमा प्रसृताः सर्पतेति Keś

[7] ०सादयन्त्य० MH Keś

माहेन्द्राय[1] । प्रस्तुते साम्नि संप्रैषमाह ब्रह्मन्वाजिनाꣳ साम गायाजिसृत आजिं धावत दुन्दुभीन्त्समाघ्नताभिघोतारो[2] ऽभिघुणुताग्नीदाग्निरं विनयोलूखलमुदादय प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विद्धीति । यथासंप्रैषं ते कुर्वन्ति । गायति ब्रह्मा वाजिनाꣳ साम । तं य एव कश्च[3] परिकर्म्यावेष्टयति । धावन्त्याजिसृत । आघ्नन्ति दुन्दुभीन्त्संप्रवदन्ति वाचः । संप्रोदिता[4] वाचो ऽनुमन्त्रयत इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयिदित्यथ रथान्धावतो ऽनुमन्त्रयते वाजेवाजे ऽवत वाजिनो न इति चतसृभिरनुष्छन्दसꣳ । ग्राम्यन्ति घोषाः शस्त्राय । होत एषोत्तमेति प्राङ्होतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाङ्कयते होता । प्रत्याङ्कयते ऽध्वर्युः । शꣳसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं माहेन्द्रं ग्रहमनूद्यच्छन्त इतरानुपोद्यच्छन्ते नाराशꣳसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा[5] यज सोम-

---

१ माहे॰ M Tr U Be B Be II, महे॰ HF

२ Thus (समाघ्नत, cp Pitṛmedhasūtra, p 37. 14) Tr U Be B Be II ; समाहत MHF

३ Thus M Tr U Be B, कश्चन BeII H, कश्चन F.

४ संप्रवदिता, संवदिता, संप्रवदंता or सप्रवदतो the MSS.; this last reading, presented by M, could also be defended, if we take the part as an acc pl. masc , but cp Bhav वा समनुमन्त्रयते and infra xii 13, where the correct reading is given by M

५ Be B ins इति after श्रौषट् ।

श्रेति । वषट्कृते जुहोति । तदेतान्पञ्चैन्द्रानतिग्राह्यान्सह[1] जुह्वति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशꣳसाननुप्रकम्पयन्ति । द्विरङ्गतो माहेन्द्रः परिशेत । आयन्ति रथा । आगतान्रथान्दृष्ट्वा याचत्याज्यस्थालीꣳ सस्रुवाꣳ । स यद्यस्मै रथप्रेषमाचक्षत आग्नीध्र[2] एतां जुहोत्युत स्माऽस्य द्रवतस्तुरण्यत इत्युभयेनैव रथविमोचनीयं जुहोत्या मा वाजस्य प्रसवो जगम्यादिति । ॥ ८ ॥

अथ याचति नैवारꣳ सप्तदशशरावꣳ सप्तदश सुवर्णानि[3] कृष्णलानि हिरण्यपात्रं मधोः पूर्णमित्येतत्समादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामत्युत्तरत[4] एते रथा युक्तास्तिष्ठन्ति । तदेतान्यजुर्युजो ऽश्वानवघ्रापयति वाजिनो वाजजितो वाजꣳ सस्रुवाꣳसो वाजं जिगिवाꣳसो बृहस्पतेर्भागे निमृड्ढ्वमित्यथैनमपिधाय प्रज्ञातं निदधात्यथ रथान्विमुच्यमानाननुमन्त्रयत इयं वः सा सत्या संधाभूद्यामिन्द्रेण समधद्ध्वमिति । दुन्दुभीनवस्यतो ऽनुमन्त्रयते ऽजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वमिति । तदेतं यजुर्युजꣳ रथं विमुञ्चति यथादत्तमितरान्व्यावर्तयन्त्युपसंगच्छन्त एनमेत आजिसृतस्तेभ्य एकैकं कृष्णलं व्युत्प्रयच्छति । तानि सार्धꣳ समादाय हिरण्यपात्रं मधोः पूर्णमित्येकधा ब्रह्मण उपहरति । ॥ ९ ॥

१ तदेतान् om. Bo B, तदेतद् M.
२ आग्नीध्रीय Bo B
३ सौवर्णानि U.
४ •क्रामत्यु• Tr HF, •क्रामन्त्यु• MU Bo B Bo H.

तद्ब्रह्मा प्रतिगृह्योपावरोहत्यथाहाजिसृतो दक्षिणपथेनो-पातीत्य दक्षिणꣳ श्रोणिमभिनिश्रयध्वं[1] मारुता अग्रेणाहव-नीयं परीत्य दक्षिणमꣳससुपसꣳश्रयध्वमिति[2] तदेनान्वि-मिताभ्यामभिविप्रन्त्यथाहैहि[3] यजमानेति पूर्वया द्वारा हवि-र्धानं प्रपाद्य यजमानꣳ सोमग्रहानुपस्थापयति ॥ १० ॥

संपृच स्थ सं मा भद्रेण पृङ्क्तेति विपृच स्थ वि मा पाप्मना पृङ्क्तेति सुराग्रहानेवैताꣳ सुराꣳ सप्रैकामादायै-ताꣳश्च सुराग्रहानाजिसृद्भ्य उपहरन्ति तां ते पिबन्तो रम-माणा महीयमाना आसते ऽथ यस्मात्स्या अनवदानीयं तदुभयानन्तरेण[4] पर्णशाखासु न्यस्यति तत्समुत्कृष्य[5] विमायी-कुर्वते[6] ऽथ याचत्याज्यस्थालीꣳ सस्रुवां तार्प्यं दर्भमयमित्येत-त्समादायाहैहि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्याहवनीये जुहोत्यन्वारब्धे यजमाने वाजस्य प्रसवश्चेति द्वादश स्रुवाहुती-रथ यजमानं तार्प्यं परिधापयति क्षत्रस्योल्बमसीति क्षत्रस्य

---

१ °भिनिःश्र° Be (sec. m ) only

२ Thus M Tr HF Keś., उपश्रय° Bell U, अभिनिश्रय° B Be

३ तदेनान् isb. तदेनाम् M Tr U Bell H F, अथैनान् Be B; अभि-विप्रंस्य° Be (sec m ) Tr Bhav, अभिनिप्रस्य° MU Bell F, निप्रस्य° H, अभिविप्रस्य° B Be (pr m.)

४ तदुभयोरन्तरेण M

५ Thus Be B, समुत्कृष्य M U Bell H, समुत्काय F, समुत्कृष्टोपैः क्रोशन्तः Keś

६ cp Āp xviii 7 8, विमाय कुर्वते (as TBr. I 3 6 4) M.

योनिरसीति दर्भमयं पत्नीमधिवास्य श्रितिं[1] यजमानायतनात्प्राचीं वोदीचीं वा यूपमभ्यायातयत्यथ जायामामन्त्रयते जाय एहि सुवो रोहावेति । रोहाव हि सुवरितीतरा प्रत्याहाहं नावुभयोः सुवो रोक्ष्यामीति यजमानस्त्वं नावुभयोः सुवो रोहेति पत्नी । तां दशभिः कल्पैः[2] रोहयत्यायुर्यज्ञेन कल्पतामित्यन्तं गत्वा बाहू उद्गृह्णाति सुवर्देवाꣳ अगन्मामृता अभूम प्रजापतेः प्रजा अभूमेत्यथेमं लोकं प्रत्यवेक्षते समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोष इत्यथैनामुपावरोहति । स यावति मन्यत एतावति मोदास्यन्तीति[3] तदेनमामपुटैर्घ्नन्ति[4] ॥ ११ ॥

अश्वाय त्वेति पुरस्तादध्वर्युरश्वाय त्वेति दक्षिणतो ब्रह्मा वाजाय त्वेति पश्चाद्धोता वाजजित्यायै त्वेत्युद्गातोत्तरतो । पशु वा एते न कामयन्ते ऽध्वर्युरेव पुरस्ताद्घ्नन्ति दक्षिणतः प्रति-

---

१ Thus M Tr Be B, सीतिं U BeII H F, श्रीति Bhav. (one copy), त्रिति (the other copies), Keś has thrice सीतिं corrected from original त्रितिं or श्रीतिं।

२ Thus (as TBr I 3 7 4) M Tr UBF Dvaidhasūtra and Bhav on this passage of the Dvaidha, कल्पैरोह° Be H, thus also Bhav. on the passage of the Vājap

३ Thus, conjecturally, corrected, मोदास्यनीति M Tr, मेदास्यनीति UHF, मोदास्यनीति Be B

४ कपुटै° FH Be (pr m.), although at the beginning of this prasna the कपुटास् have been mentioned, आमपुटै is here the correct reading, cp Bhav a h l

प्रस्ताता पश्चादाग्नीध्र उद्गातोत्तरतस्तेषां[1] तथा विभागो यथा दुन्दुभीनामंसाद्यैः[2] प्रत्यवरोहणत[3] आसन्दीं निदधाति । तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमानꣳ हिरण्मयमथ दक्षिणं पादꣳ हिरण्य[4] उपावरोहत्यमृतमसीति पुष्टिरसि प्रजननमसीति सव्यं बस्ताजिने । उपैनमेतयासन्द्या सह आवहन्त्य[5] वा[5] प्रजत्यमायन्त्येनमेते[5] चमसा । अथैतस्य बार्हस्पत्यस्येडामुपह्वयत । इडोपहूतं माहेन्द्रꣳ होता चैवाध्वर्युश्च संभक्षयतो नाराशꣳसपीतेन नाराशꣳसाश्चैतेषामतिपाद्यानां मुख्ये पात्रे सꣳस्रावान्समवनीय यजमान एव प्रत्यक्षं भक्षयत्यपि वैनान्सर्वेश एव चमसेषु व्यवनीय भक्षयेयुरित्येतदपरꣳ । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्विम इत्यात्मानं प्रत्यभिमृशन्ति । नाप्याययन्ति चमसान्सर्वभक्षा

---

१ Thus M Tr; उगाता उद्गेता all the other MSS

२ Thus Tr Be B Be 11 (sec. m), चमाद्यै UFH Be 11 (pr. m.), चन om M

३ Thus corrected on account of the collateral passage xviii 17 s. f. and the Vivarana. प्रत्यवरोह(ण)तः यत्र प्रत्यवरोहति तत्र ; MSS. प्रत्यवरोहन ।

४ हिरण्युपा° M U Be 11 H F, हिरण्यउपा° Be; हिरण्येउपा° B, हिरण्य om. Tr.

५ Thus Be 11; °वर्हन्त्यानाग्नकाय° U; °वर्हन्त्यवाग्नकाय° M, °नकाय° Tr Be B H F, but cp. Bhav तथैवासन्द्योपस्य सह प्रापयन्ति स्वयमेव वा गच्छति ।

मार्जयन्त' इत्यैन्द्राय त्वेन्द्राय त्वेत्येवं त्रिभिरुक्थ्यपर्यायैश्चरति[1]' संतिष्ठते माध्यंदिनꣳ सवनम्' ॥ १२ ॥ चतुर्थः ॥

अथ सावित्रꣳ हुत्वा प्रसर्पन्ति तृतीयसवनाय' प्रसिद्धमादित्यपात्रेण परिप्लावयन्तं गृह्णात्यथ षोडशिनमभिगृह्णात्यभावि सोम इन्द्र त इत्युपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति' परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति' समानं कर्मा पवमानात्पवमानेन चरित्वा स्वै धामच्छद्भिश्चरति[2]' तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वषाहोमाः समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवाक्समानीडा समान्यो दिशो' नाना दिश इत्येके' समानं कर्मा ध्रुववद्भ्यश्चमसेभ्यो' ध्रुववद्भिश्चमसैश्चरित्वा त्रिभिरुक्थ्यपर्यायैश्चरतीन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामित्यथ[3]' षोडशिना चरत्यथ प्रज्ञापयत्याह होतृचमसमनूत्तयध्वमुपेतः सर्व एव राजानमुपसय मातिरीरिच इति' होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्सर्वेश एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति' तदेतान्प्राजापत्यान्सह सꣳसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपा-

---

1 Thus M Tr, चरंति UB Be II Bo II F

2 Thus M Tr BHF; चरंति Bo II U

3 °चरतीन्द्रा° M Tr, the other MSS read plural.

करोति । स्तुवते । तदेतद्बृहत्सामैकविंशं वैष्णवीषु शिपिविष्टवतीषु कुर्वन्ति । स्तोत्र एषोत्तमेति प्राक्होतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शंसति । प्रतिगृणाति । प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राङेत्यौपयच्छत एतं होतृचमसमनूद्यच्छन्त इतरानुपोद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृते जुहोति । तदेतान्प्राजापत्यान्सह जुह्वति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षः प्रजापतिना पीतस्येत्येतेषां[1] प्राजापत्यानां मुख्ये पात्रे संस्रावान्समवनीय[2] यजमान एव प्रत्यक्षं भक्षयत्यपि वैनान्सर्वेऽ एव चमसेषु व्यवनीय भक्षयेयुरित्येतदपरमत्र यन्माषत्या अनवद्राणीयं तदुल्लिख्य उपहरति[3] । तदेतत्समावच्छो[4] विभज्य प्राश्नन्ति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । अथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्याहर-

---

१ Thus M Tr U Bo 11, ॰चैषां Bo BFH.

२ Thus M Tr, संस्रावमवनीय Bo 11 UH Keś; ऽंस्रावानवनीय F; ॰ंस्रावान्समवनीय B Bo, cp. supra p 81, 9.

३ ॰हरति Bo BH Bhav., हरंति M Tr F.

४ Thus MUHF; समेषमा॰ Tr Bo B, तदेवैषमा॰ Bo (sec. m.).

न्येतानाग्नीध्रादौपयजानङ्गाराहृत्वोत्तरेण¹ होतारं निवपत्युप-सीदत्युपयष्टा गुदकाण्डैः²एतानि गुदकाण्डान्येकादशधा छित्त्वो-पयष्टोपयजति ' समानमत ऊर्ध्वम् ' संतिष्ठते वाजपेयो ' वाजपेयेनेष्ट्वा प्रत्यवरोहणीयेनाग्निष्टोमेन¹ यजेत ' संतिष्ठते वाजपेयः संतिष्ठते वाजपेयः ' ॥ १३ ॥ पञ्चमः ॥

॥ इत्येकादशः प्रश्नः ॥

---

१ Thus (०रान्हृत्वे) all exc. B, which has the sing. and M, which omits this passage altogether

२ यजुर्होमेन ins. Tr

राजसूयेन[१] यक्ष्यमाणो भवति। स पुरस्तात्फाल्गुन्यै वा चैत्र्यै वा पौर्णमास्या आमावास्येन[१] हविषेष्ट्वा दीक्षते। तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः। संतिष्ठत एष प्रायणीयो ऽग्निष्टोमश्चतुष्टोमः सहस्रदक्षिण उदवसानीयान्तो ऽथाष्टमे ऽह्यानुमतं निर्वपति। हविष्कृता वाचं विसृजते। समानं कर्माधिवपनादध्युष्य दक्षिणार्धे गार्हपत्यस्याष्टौ कपालान्युपधायैकं प्रतिप्रस्थातोत्तरतो नैर्ऋताय। हविःपेष्यै प्रयच्छन्नाह प्राचश्च प्रतीचश्च व्यवघातयन्ती पिण्ड्ढीति[२]। स ये प्राञ्चः शम्याया अवशीयन्ते तानध्वर्युः समुप्य संयुत्यानुमतश्च अपयत्यथ ये प्रत्यञ्चः शम्याया अवशीयन्ते तान्प्रतिप्रस्थाता समुप्य संयुत्य नैर्ऋतश्च अपयत्यादद्त[३] एतं[४] नैर्ऋतमुपस्तीर्णाभिघारितं[४] कृष्णं वासः कृष्णतूषमन्तमागारादेकोल्मुकमुदपात्रमित्येतत्समादाय गार्हपत्ये स्रुवाहुतिं जुहोति वीहि स्वाहाहुतिं जुषाण इत्यथ दक्षिणया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणश्च स्यष्टं भवति प्रदरो वा।

---

१ ... १ Thus MT Be 11 (the last two om however च); the other MSS.: राजा राजसूयेन यक्षेत फल्गुन्यै वा चैत्र्यै वा पुरस्तादामावास्येन। The Vivaraṇa begins also राजा राजसूयेन यजेतेति, but infra it cites the words यक्ष्यमाणो भवति and cp comm on T.S i. 1.8 and on Tāṇḍ. br. xviii 81.

२ पिंड्ढीति M; the other MSS still more corrupted.

३ Thus M, अपयित्यादद्त T Bo 11, Be BU om त्यादद्त।

४ Thus M, एतद्धे° all the other MSS

तदेतदेकोल्मुकमुपसमाधाय संपरिस्तीर्याङ्गुष्ठाभ्यां[1] परिमृज्य नैर्ऋतं जुहोत्येष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममंहसः स्वाहेत्यथ कृष्णं वासः कृष्णतूषं ददात्यथापो व्यतिषिच्य पराञ्च पाचमनवेक्षमाणा आयन्ति स्वपादादग्रधात्रै-तेनैव यथेतमेत्य गार्हपत्ये स्रुवाहुतिं जुहोति स्वाहा नमो य इदं चकारेत्यथानुमतेन[2] मध्यमां करोति धेनुं ददाति[3] ॥ १ ॥

अथ नवमे ऽह्न्यादित्यं चरुं निर्वपति वरं ददात्यथ दशमे ऽह्न्याग्नावैष्णवमेकादशकपालं वामनं वहिनं ददात्यथैकादशे ऽह्न्यग्नीषोमीयमेकादशकपालꣳ हिरण्यं ददात्यथ द्वादशे ऽह्न्यैन्द्राग्नमेकादशकपालमृषभं वहिनं ददात्यथ त्रयोदशे ऽह्न्याग्नेयमष्टाकपालमैन्द्रं दध्यृषभं वहिनं ददात्यथोपालीत्यायथपह्वीऽपि चतुर्दशे ऽह्नि सरस्वत्यै चरुं वत्सतरीं ददात्यथ पञ्चदशे ऽह्नि सरस्वते चरुं वत्सतरं ददाति यत्तु वै चतुर्दश्यामेवोपवसथः संपद्यत एवमेवैतदहरेताभ्यामिष्टिभ्यां[4] नानाबर्हिर्भ्यां[5] यजेताथाप्येतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति वैश्वदेवं पयो दोहयित्वोपदमति सांनाय्यस्य

---

१ अङ्गौभ्यां i.s.o. अङ्गुष्ठाभ्यां B Be U.

२ °चकारेत्यनुमतेः Be BU

३ धेनुर्दक्षिणा Be BU.

४ एककर्मे° i.s.o. एवमे° M Be BU.

५ Thus M; °बर्हिभ्यां Be BU, °बौर्हिभ्यां Be H T

वाहृता तूष्णीं वाथ श्वो भूते वैश्वदेवहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथ श्वो भूत इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपत्यभिहितो रथ उभाकांस्यकवचो[१] गर्भिणीभिर्वा वडवाभिर्युक्तः साण्डैर्वाश्वैराविध्यो निष्कस्तद्ददात्यथ श्वो भूत इन्द्रायांहोमुचे पुरोडाशमेकादशकपालं निर्वपत्यनभिहितो रथो[२] ऽकांस्यकवचो[२] ऽगर्भाभिर्वा वडवाभिर्युक्तो निरष्टैर्वाश्वैः[३] अच्छ्णको[३] निष्कस्तद्ददाति । ॥ २ ॥

एते संतनी इत्याचक्षते । ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते । स एवमेव संतनीभ्यामहरहर्विपर्यासं[४] यजमानश्चतुरो मास[५] एति[५] काममिष्ट्वा कामं पशुबन्धेन कामं

---

१ Thus hesitatingly emended उभे कांस्येकवचो M, दर्भेकस्यकवचो T Be 11, उभौकांस्यकवचो Be BU, Bhav उभे कांस्यकवचो शिरस्त्राणम्, but this may be a periphrase of our compositum So much, at any rate, is certain, that an adj is required with the sense उभयतः कांस्यकवच (cp Kāty xxii 10 30-31, Lāṭy ix. 4 11)

२ Again emended, रथो न उकंस्यो उकवचो उग॰ M; could उ in Nandināgari represent the avagraha? Then the reading of M would be; रथो [न] ऽकंस्यो ऽकवचो ऽग॰ ; रथ कांस्यकवचो Bo BU, दर्भे-कस्यकवचो Bo 11 T (omitting रथो)

३ ॰र्वाश्वै ऋच्छणको M, ॰र्वाश्विश्चणका T Be 11, ॰र्वाश्विरुदण्णद॰ Be, ॰र्वाश्विलक्षणद॰ B, the last two om निष्कम् ।

४ Here and infra B Bo U have sometimes विपर्यासाभ्यां, Be 11 T om the word every time

५ Thus here and infra M, मास इति B Bo U, मासानेति Be 11 T

यवाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्ट्वा[1] वरुणप्रघासहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते । स एवमेव संतनीभ्यामहरहर्हविर्विपर्यासं यजमानो ऽपराङ्ग्श्चतुरो मास एति काममिष्ट्वा कामं पशुबन्धेन कामं श्यामाकाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्ट्वा साकमेधहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते । स एवमेव संतनीभ्यामहरहर्हविर्विपर्यासं यजमानो ऽपराङ्ग्श्चतुरो मास एति काममिष्ट्वा कामं पशुबन्धेन कामं व्रीह्याग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्ट्वा शुनासीरीयहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते । स एवमेव संतनीभ्यामहरहर्हविर्विपर्यासं यजमानः सप्ताहान्येति काममिष्ट्वा कामं पशुबन्धेनाथाष्टमे ऽह्नस्तुरीयमाग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुमन्वाहार्यमासाद्य वहिनीं धेनुं ददाति । ॥ ३ ॥

अथ तदानीमेव पञ्चबीयेन प्रतिपद्यते । पञ्चधाङ्गाराविरूह्य पञ्चेध्मानभ्यादधाति पर्णमयं पुरस्तान्नैयग्रोधं दक्षिणत आश्वत्थं पश्चादौदुम्बरमुत्तरतः प्लाक्षं मध्ये । ऽथैनानाज्येन व्याघारयति ये देवाः पुरःसदो ऽग्निनेत्रा रक्षोहणस्ते नः पान्तु

१ Thus here and infra MT Bo 11, संतन्येष्वा B Bc.

ते नो ऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ये देवा दक्षिणसदो ये देवाः पश्चात्सदो ये देवा उत्तरसदो ये देवा उपरिषद इत्यथोपवेषेणाङ्गारान्समूहति[1] समूढꣳ रक्षः संदग्धꣳ रक्ष इदमहꣳ रक्षो ऽभिसंदहामीत्यथैनान्स्रुवाहुतिभिरभिजुहोत्यग्नये[2] रक्षोघ्ने स्वाहेति पञ्चभिरथ[3] प्रष्टिवाहिनꣳ रथं ददात्यथ याचति पर्णमयꣳ स्रुवमपामार्गसक्तून्प्रतिवसनीयं वासो ऽन्तमागारादेकोल्मुकमुदपात्रमित्येतत्समादायोदञ्चो निष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणꣳ स्पष्टं भवति प्रदरो वा । तदेतदेकोल्मुकमुपसमाधाय संपरिस्तीर्य पर्णमयेन स्रुवेणापामार्गसक्तूञ्जुहोति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ रक्षसो वधं जुहोमि स्वाहेति[4] । हतꣳ रक्ष इति स्रुवमनुप्रहरत्यवधिष्म[5] रक्ष इत्युपतिष्ठते[6] । ऽत्र[7] यद्वस्ते तद्ददात्यथापो व्यतिषिच्य परास्य पात्रमनवेक्षमाणा आयन्ति हस्तपादान्प्रक्षाल्यैतेन यथेतमेत्यैन्द्रतुरीयेण सꣳस्थां करोत्यथ नवमे ऽह्नि पूर्वाह्णे देविकाहवींषि निर्वपत्यनुमत्यै चरुꣳ राकायै चरुं धात्रे पुरोडाशं द्वादशकपालमित्यन्वाहार्य-

---

१ निरूहति Be T

२ स्रुवाहुतीभि॰ M Be U, स्रुवाहुतीर॰ BT Be 11

३ पंचभिर om Be BU

४ इति om Be BU

५ ॰नुप्रहृत्याव॰ Be BU

६ उपोतिष्ठते MT Be 11, but cp Āp xviii 9 18

७ om B Be U

.आमाद्य[1] वत्सतरीं[2] ददात्यथ दशमे ऽहन्युत्तराणि देविकाहवींषि निर्वपति सिनीवाल्यै चरुं कुह्वै चरुं धात्र एव[3] पुरोडाशं द्वादशकपालमित्यन्वाहार्यमामाद्य[4] वत्सतरं[5] ददात्यथैकादशे ऽहनि त्रिषंयुक्तैः प्रतिपद्यत आग्नावैष्णवं निर्वपत्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं । वामनमृषभं वहिनं ददात्यथ द्वादशे ऽग्नीषोमीयमेकादशकपालं निर्वपतीन्द्राग्नीषोमीयमेकादशकपालं सौम्यं चरुं । बभ्रुं ददात्यथ त्रयोदशे ऽहनि सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुं । श्यामं ददात्यथ चतुर्दशे ऽहनि वैश्वानरं द्वादशकपालं निर्वपति । हिरण्यं ददात्यथ पञ्चदशे ऽहनि वारुणं यवमयं चरुमश्वं ददाति । ॥ ४ ॥ प्रथमः ॥

अथैनमामावास्येन हविषेजानं रत्निनः पर्युपासन्ति[6] दक्षिणतो वोदञ्चो पश्चाद्वा प्राञ्चस्तेषामनवमितानां ब्रह्मैव दक्षिणार्धो वापरार्धो वा भवति । स[7] यत्किंच यज्ञपरिभोजनं[8] ब्रह्मण एव[9] तद्गृहे भवत्यथारण्योरग्नीन्समारोह्य ब्रह्मणो

---

१ इति om T Bc 11 U

२ ॰तर Bc 11 T.

३ om B Bc U, the word should be supplied, also Vol i, p 264, 4

४ इति om all the MSS

५ ॰तरी Bc 11 T

६ पर्युपविशन्ति B Bc U

७ om. Bc 11 T

८ ॰भाजनं B Bc U

९ Thus M Bc 11 T, एवैत॰ B Bc

गृहानध्यवसाय मथित्वाग्नीन्विहृत्य बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे । शितिपृष्ठं ददात्यथारण्योरग्नीन्समारोह्य[१] स्वान्यग्न्यायतनान्यभिप्रव्रजति[२] । तं यन्तमनुमन्त्रयते ऽयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्यथ स्वान्यग्न्यायतनान्यध्यवसाय मथित्वाग्नीन्विहृत्येन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रतिनिर्वपत्यथास्यैतदहः[३] श्वेतायै श्वेतवत्सायै पयो दोहयित्वा समातच्य निदधात्यथ श्वो भूते ऽरण्योरग्नीन्समारोह्य राजन्यस्य गृहानध्यवसाय मथित्वाग्नीन्विहृत्यैन्द्रमेकादशकपालं राजन्यस्य गृहे । ऋषभं ददाति । तथारण्योरग्नीन्समारोह्य स्वान्येवाग्न्यायतनान्यभिप्रव्रजति[४] । तं तथैव[५] यन्तमनुमन्त्रयते । यस्ययस्य गृहे यजते सर्वो ऽनुमन्त्रयते ऽयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्यथ स्वान्येवाग्न्यायतनान्यध्यवसाय मथित्वाग्नीन्विहृत्येन्द्रायांहोमुचे पुरोडाशमेकादशकपालं प्रतिनिर्वपति । प्रज्ञातमेवास्यैतदहः श्वेतायै श्वेतवत्सायै पयो दोहयित्वा समातच्यैव[६] निदधात्यथ तृतीये ऽहन्यादित्यं चरुं महिष्यै गृहे । धेनुं ददात्यथ चतुर्थे ऽह्नि भगाय चरुं वावातायै गृहे । विचित्तगर्भां पष्ठौहीं ददात्यथ पञ्चमे ऽह्नि

---

१ •रोप्य here and infra sometimes B Be U.

२ •व्रजति MT Be Be 11, •हृति B

३ प्रति om. MT Bo 11 but cp Āp xviii 10 23

४ एव after स्वानि om MT Be 11, •व्रजति T Be 11 B, •व्रजंति M Be

५ Thus MUB Be; एव om Be 11 T

६ एव om Be BU

नैर्ऋतं चरुं परिवृत्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णां कूटां ददात्यथ षष्ठे ऽहन्याग्नेयमष्टाकपालꣳ सेनान्यो गृहे हिरण्यं ददात्यथ सप्तमे ऽहनि वारुणं दशकपालꣳ सूतस्य गृहे महानिरष्टं ददात्यथाष्टमे ऽहनि मारुतꣳ सप्तकपालं ग्रामण्यो गृहे पृश्निं ददात्यथ नवमे ऽहनि सावित्रं द्वादशकपालं क्षत्तुर्गृहे उपध्वस्तं ददात्यथ दशमे ऽहन्याश्विनं द्विकपालꣳ संग्रहीतुर्गृहे सवात्यौ ददात्यथैकादशे ऽहनि पौष्णं चरुं भागदुघस्य गृहे श्यामं ददात्यथ द्वादशे ऽहनि रौद्रं गावीधुकं चरुमक्षावापस्य गृहे शबलमुदारं ददाति प्रसिद्धमेवाग्नेतदहः[1] श्वेतायै श्वेतवत्सायै पयो दोहयित्वा[2] समानत्रैव[3] निदधात्यथ त्रयोदशे ऽहनि मैत्राबार्हस्पत्यं भवति ॥ ५ ॥

अथ वै भवति श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्ते स्वयंमथित आज्य आश्वत्थे पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाꣳश्चाकर्णाꣳश्च तण्डुलान्विचिनुयादित्यथ वै भवति स्वयंकृता वेदिर्भवति स्वयंदिनं बर्हिः स्वयंकृत इध्म इति राजैवायꣳ[4] स्वयं कर्मभिः पूजितो भवति स[5] स्वयमेव वेदिं करोति स्वयमिध्माबर्हिः संनह्यति स्वयमाश्वत्थं पात्रं चतुःस्रक्ति[6]

---

१ Thus B Be U, प्रसिद्धमेवाग्नेतं द्वादशाहे M; अथ प्रसिद्धमेवाग्नेद्वादशाहं T Be 11.

२ दोहयित्वादोहयित्वा M.

३ समानत्रसमानत्रैव M; नानर्धमात्रादत्रैव Be 11 T.

४ corrected; राजैवायम् M Be BU; राजैवैवं Be 11 T.

५ om. T Be 11

६ स्रक्ति T Be 11, but cp. Ap. xviii. 11. 2.

करोति[1] स्वयमवपन्नायै शाखायै कर्णांश्चाकर्णांश्च तण्डुलान्विचिनोत्यथ वै भवति ये कर्णाः स पयसि बार्हस्पत्यो ये ऽकर्णाः स आज्ये मैत्र इत्यथोत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेषु नवं पात्रमधिश्रित्य तिरः पवित्रमाज्यमानीय[2] तिरः[2] पवित्रमकर्णानीय[2] तेन[3] बार्हस्पत्यमपिदधाति[3] । तं तथापिहितमन्तर्वेद्यामासादयति[4] । समानं कर्म प्रयाजेभ्यः । पञ्च प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सꣳस्रावेण बार्हस्पत्यमभिघार्य मैत्रमभिघारयति । बार्हस्पत्येन पूर्वेण प्रचरत्यथ मैत्रेण । बार्हस्पत्यस्य पूर्वस्य स्विष्टकृते ऽवद्यत्यथ मैत्रस्य । बार्हस्पत्यस्य पूर्वस्येडामवद्यत्यथ मैत्रस्यान्वाहार्यमासाद्यैतामेव श्वेताꣳ श्वेतवत्सां ददाति । संतिष्ठते मैत्राबार्हस्पत्यꣳ हविः । ॥ ६ ॥ द्वितीयः ॥

अथैतस्मिन्नेव पूर्वपक्ष उक्थ्यायाभिषेचनीयाय दीक्षते । तस्यापरिमिता दीक्षाः षडुपसदः । स तथा राजानं क्रीणाति यथा मन्यते ऽमावास्यायै मे यज्ञिये[5] ऽहन्सुत्या संपत्स्यत इति ।

---

१ याचति B Be U

२ Thus M; Be BT om आज्यमानीय तिर पवित्रं and Be BU have कर्णान् i.s.o अकर्णान्।

३ अभिद॰ Be II T.

४ तेनमपिहित॰ T Be II

५ Thus MB Be; यज्ञीये U, यजनीये T Be II; this latter might be the right reading, but as the expression यज्ञिये ऽहन् occurs several times infra, xvii 55-61, without any various reading, I did not venture to write यजनीये in the text.

तस्य तथा संपद्यते । ऽथ प्रायणीयेन चरति । प्रायणीयेन चरित्वा पदेन चरति । पदेन चरित्वा रोहिते[1] चर्मणि[1] राजानं क्रीत्वोद्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्यायान्वहमुपसद्भिश्चरत्यथाहवनीयं प्रणयत्याहवनीयं प्रणीय रथवाहने सदोहविर्धाने संमिनोति । रथवाहने सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्याहुत्वा यूपमुच्छ्रयति । स्वरुवन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति । तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्गृहीत्वाथ पशुपुरोडाशं निर्वपति । तमनुवर्तन्ते ऽष्टौ देवसुवां हवींष्यग्नये गृहपतय इत्येतानि । तेषामुक्तं चरणं यथाग्नेर्विधायामिडान्ताः पुरोडाशाः संतिष्ठन्ते । पत्नीसंयाजान्ताः पशुर्हृदयशूलान्त इत्येके । ऽथैतान्दुन्दुभीननुदिशमाघ्नयत्यथ वसतीवरीः परिहृत्य यथाऽपि विभिन्योपवसन्त्यथातो महारात्र एव बुध्यन्ते । प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छेत्यद्भिरदेत्युक्थ्य[2] क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं[3] गृहीत्वा द्वे रशने आदाय यूपमभ्येति । स्वरुवन्तं यूपमुत्सृज्याग्नेयं पशुमुपाकरोति । तस्यैन्द्राग्न उपालम्भ्यो भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा प्रसर्पन्ति

---

१ Missing in M Bo T, but cp. the Dvaidhasûtra.

२ ॰वरेतु॰ Bo U, ॰रदेतु॰ the other MSS

३ om. M Bo

प्रातःसवनाय । तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि होष्यन्नाचत्याध्वर्युस्तालौहं मन्वाहं स्रुचं वामस्तस्यैतस्य वसनस्यान्तमायां दशायां निष्करज्जुः प्रथिता[1] भवत्यंतसमादायाहैहि[2] यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्याग्रेण शालां तिष्ठते प्रतिप्रस्थाता च एतानि शस्त्राणि प्रयच्छत्यथाहैहि यजमानेति । रथ एष दक्षिणे श्रोण्यन्ते रथवाहन आहितो भवति । तमुपावहरन्तीन्द्रस्य[3] वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादित्यथैनं धूर्गृहीतमन्तर्वेद्यभ्यववर्तयन्ति[4] तूष्णीमथास्य चक्राण्यनूलयति तूष्णीमथ दक्षिणं योग्यं युनक्ति[5] मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेनेत्यथास्य पृष्ठं संमृज्यते तूष्णीमेवमेवोत्तरं योग्यं युनक्ति । तस्यैवमेवोत्तरतः प्रष्टिमुपनियुनक्ति । तयोरेवमेव पृष्ठे[6] संमृज्यत[6] । एतस्य योगमनु सर्वमाणिवत्युज्यते । ऽधिकल्प्यान्दम्निनः कुर्वन्ति । प्रवेष्टयन्ति वासोभारान्त्समनानां दशासु निष्करज्जू प्रबध्नन्ति । पूगशो दक्षिणा आयातयत्यथ सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति ।

---

१ •थितो MSS

२ भवतीत्येन• M

३ •हरती• Be BU, •हरति• MT Be 11

४ Thus M only, •भ्यवर्तयति T Be 11 U Be, •भ्यावर्तयति B

५ Here Be BU ins तस्यैवमेवोत्तरत प्रष्टिमुपनियुनक्ति ।

६ Thus MB Be U, पृष्ठमुन्मृज्य T Be 11

नयवत्यर्चाग्नीध्रे जुहोति । सृज्यन्ते[1] दक्षिणा दक्षिणापथेन । स यत्किंचिद्ददाति[2] हिरण्यमुखमेव ददात्यथ यावाङ्स्यथ[3] युक्तानि गोश्वश्वꣳ हस्तिपुरुषमन्ततो[4] । उदक्ता एवैते रथा अतिवर्तन्ते[5] । नैते ऽन्यस्य सन्तं आजिं धावन्ति । मनसैव स्वरथमध्वर्यवे ददाति । मनसा चतुष्पात्स्वेवं[6] ब्रह्मण आदिशति । मनसा समनुदिश्य[7] दक्षिणास्त्रिभिर्मरुत्वतीयैश्चरन्ति[8] । सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो[9] माहेन्द्राय । ॥ ७ ॥

अथ याचति वैतस[10] द्रोणकलशꣳ षोडश[11] वायव्यान्यथास्यैतत्पुरस्तादेव[12] षोडशतयं आपो दिग्भ्यः संभृता[13]

---

१ संसृज्यते T Bo 11

२ यत्किंच॰ M

३ Thus M, वन is. of अथ T Bo 11, B Bo again (cp. supra, p. 73, 10) यानि is. of अथ।

४ Thus MUB Be, हस्तिदासपुरुष॰ T Be 11.

५ Thus M only, अतिनिर्वर्तन्ते Bo BU, अतिपर्तन्ते Bo 11 T.

६ चतुष्पात्स्वेवं all MSS. exc. M which has चतुष्पत्स्वेवं ; one copy of Bhav. has the word with ā, another with a, cp Ait. Br. viii 20, 2.

७ Thus MB, समनुदिश्य Bo U, समुदिश्य Bo 11 T.

८ चरन्ति M ; चरंति the other MSS

९ ॰स्थावार्थंच॰ Bo (sec. m.)

१० च ins. MT Bc 11.

११ षोडशंच M.

१२ एतत् ins. एव Bo BU

१३ Thus M Bo, संभृता BU ; समाहृता Bo 11 T.

नयवत्यर्चाग्नीध्रे जुहोति । सृज्यन्ते[1] दक्षिणा दक्षिणापथेन । स यत्किंचिद्ददाति[2] हिरण्यमुख्यमेव ददात्यथ यामाङ्स्याथ[2] युक्तानि[3] गोऽश्वꣳ हस्तिपुरुषमन्ततो[4] । उदञ्चा एवैते रथा अतिवर्तन्ते[5] । नैते ऽन्यस्य मन्त्र आजिं धावन्ति । मनसैव स्वरथमध्वर्यवे ददाति । मनसा चतुष्पात्स्वेवं[6] ब्रह्मण आदिशति । मनसा समनुदिश्य[7] दक्षिणास्त्रिभिर्भिसंदलतीयैश्चरति[8] । सीदन्ति माराग्रꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो[9] माहेन्द्राय । ॥ ७ ॥

अथ याचति वैतसं[10] द्रोणकलशꣳ षोडश[11] वायव्यान्येतास्त्वेतत्पुरस्तादेव[12] षोडशतयं आपो दिग्भ्यः संसृता[13]

---

१ र्थंयन्ते T Be 11

२ यत्किंचद॰ M.

३ Thus M, अत्र i.s. of अथ T Be 11, B Be again (cp. supra p. 73, 10) अनांसि i.s o अथ।

४ Thus MUB Be; हस्तिदासपुरुष॰ T Be 11.

५ Thus M only, अतिनिवर्तते Be BU; अतिपतते Be 11 T.

६ चतुष्पात्स्वेवं all MSS. exc. M which has चतुष्पात्स्वेवं; one copy of Bhav. has the word with ā, another with a, cp. Ait Br. viii. 20. 2.

७ Thus MB, समनुदिश्य Be U, सनुदिश्य Be 11 T.

८ चरति M, चरंति the other MSS

९ ॰स्यावालंब॰ Be (sec. m.).

१० च ins. MT Be 11.

११ षोडशंच M.

१२ एताः i s o एव Be BU

१३ Thus M Be, संभृता BU; समाहृता Be 11 T.

# INDEX.


| | | | |
|---|---|---|---|
| Agnicayanam ... | Praśna X | | |
| Vājapeyaḥ . . | „ XI | | |
| Rājasūyaḥ .. . | „ XII | | |
| Iṣṭikalpaḥ | „ XIII | | |
| Aupānuvākyam .. . | „ XIV | | |
| Aśvamedhaḥ . | „ XV. | | |
| Dvādaśāhaḥ . , | . XVI | 1-12 | (adhy. 1-3) |
| Gavām ayanam | „ . | 13-23 | ( „ 4-6). |
| Ahīnāḥ . .. . | „ „ | 24-fin. | |
| dvirātraḥ, trirātraḥ | „ „ | 24-27 | ( „ 7). |
| catūrātraḥ . | . „ | 28 } | |
| pañcarātraḥ, sarasvatam ayanam .. | „ | 29 } | ( „ 8). |
| munyayanam ... | | 30 } | |
| saptaratraḥ-daśarātraḥ | . | 31 } | |
| ekādaśaratraḥ-trayodaśaratraḥ .. | „ „ | 32 } | ( „ 9) |
| caturdaśarātraḥ-viṃśatirātraḥ | . „ | 33 | ( „ 10). |
| caturviṃśatirātraḥ-catustriṃśadrātraḥ .. | . „ | 34-35 | ( „ 11) |
| ṣattriṃśadrātraḥ-sahasrarātraḥ ... .. | „ | 36 | ( „ 12). |
| Uttarā tatiḥ | Praśnas XVII and XVIII | | |
| atirātraḥ | Praśna XVII | 1-10 | (adhy. 1) |
| ekādaśini | . „ | 11-16 | ( „ 2-3). |
| puṇḍaśitiḥ | . | 17 | ( „ 4). |
| sarpasattram . | „ „ | 18 | ( „ 5) |
| viśvasṛjām sattram . | . | 19 | ( „ 6) |
| kuṇḍapāyinām ayanam | . „ | 20, 21 | ( „ 7) |
| utsarginām ayanam | | 22 | ( „ 8) |
| tapaścitām ayanam | | 23 } | |
| aharahaścayanam | . . | 24 } | |
| upariṣṭānmāsam | | 25 } | ( „ 9). |
| purastānmāsam | . | 26 } | |
| brahmaṇo 'yanam | . | 27 } | |
| kāmyāś citayaḥ . | . | 28-30 | ( „ 10) |
| sautrāmaṇī | | 31-38 | ( „ 11). |
| samāvartanam | . | 39-44 | ( „ 12, 13) |
| naiṣṭvayanāni | . | 45-46 | ( „ 14) |
| kāmyā darśapūrṇamāsāḥ . | . „ | 47-54 | ( „ 15) |
| cāturmāsyāḥ somāḥ .. . | . | 55-58 | ( „ 16). |
| jyotirayanam | . „ | 59-60 | ( „ 17) |
| mahāyajñaḥ . | „ | 61-62 | ( „ 18). |
| Ekāhāḥ | XVIII | | |
| bṛhaspatisavaḥ . | | 1-2 } | |
| | | } | ( 1 |

| | | | |
|---|---|---|---|
| somasavaḥ | Praśna XVII, | 5 | (adhy. 2) |
| pṛthisavaḥ | " " | 6 | |
| gosavaḥ | " " | 7 | |
| odanasavaḥ | " " | 8-10 | ( " 3). |
| pañcaśāradīyaḥ | " " | 11 | ( " 4). |
| agniṣṭut | " " | 12-13 | |
| indrastut | " | 14 | |
| aptoryāmaḥ | " " | 15 | |
| mṛtyusavaḥ | " " | 16-19 | ( " 5). |
| sadyaskri, anukri, parikri, atikrī | " " | 20-23 | ( " 6) |
| vrātyastomāḥ | " | 24-26 | ( " 7). |
| bhāllavistomāḥ | " " | 27 | |
| upahavyaḥ | " " | 28 | ( " 8). |
| tivrasomaḥ, vighanaḥ | " " | 29-30 | |
| udbhid, valabhid | " " | 31 | |
| ṛtapeyaḥ, dvayam caturstomaḥ, chandasām ekatrikaḥ, stomānām ekatrikaḥ, indrāgnyo stomaḥ | " " | 32-35 | ( " 9). |
| syenaḥ, isuḥ, indravajraḥ | " " | 36 | ( " 10). |
| duraśaḥ, durṇāśaḥ, apacitiḥ, traiḥ | " | 37-39 | |
| ṛṣabhaḥ, vanisthusavaḥ, kānāndhayajñaḥ | " | 40-41 | ( " 11). |
| manuyajñaḥ, vāca stomaḥ | " | 42 | |
| yamastomaḥ | " " | 43 | |
| sadopaśadau paururavasau, prājāpatyau, naidhruvasya kaśyapasya | . | 44 | ( " 12) |
| punastomau | . . | 45-47 | ( " 13) |
| pranodaḥ, vibādhaḥ, pratinodaḥ, agner ativyādhaḥ, indravajraḥ śunaskarṇayajñaḥ, rāśimaravau, āñjanābhyañjanau, visucinaśālaḥ, sarvatomukhaḥ, sahasraśālaḥ | " " | 48-49 | ( " 14). |
| yaman stoman, agnyādityayo stomaḥ (?) | . | 50 | ( " 15). |
| paśūnāṃ, diśāṃ stomaḥ, ṛtūnām st., ṛṣīnām st., devatānām st. darśapūrṇamāsayor ayanam | " | 51-53 | ( " 16). |
| Kāṭhakam | " XIX | | |
| sāvitraḥ | " | 1-5 | (adhy. 1-3). |
| nāciketaḥ | " | 6 | ( " 4) |
| brahmacit | " | 7 | ( " 5) |
| samastaḥ | " | 8 | ( " 6) |
| vaiśvasṛjaḥ | " | 9 | ( " 7). |
| āruṇaketukaḥ | " | 10 | ( " 8) |

दक्षिणस्य[1] हविर्धानस्य प्राच्यो ऽक्षमतीष्व उपस्तम्भनाश्रिताः शेरते । तासां वहन्त्यः पूर्वार्ध्या भवन्ति सारस्वत्यो ऽपरार्ध्याः । स वहन्तीरभिगृह्णीत्यर्थेत स्थापो देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ राष्ट्रदा स्थ राष्ट्रं दत्त स्वाहेति । गृह्णाति पर्णमयेन राष्ट्रदा स्थ राष्ट्रममुष्मा आमुष्यायणायामुष्य पुत्रायामुष्य पौत्राय दत्तेत्यपां पतिरसीत्यपांपतीयाः पुंनाम्नो[2] वोत्सम्य[2] समुद्रिया वा । वृषास्यूर्मिरित्यौर्म्या । वृषसेनो ऽसीति पल्वल्या । व्रजक्षित स्थेति कूप्या । मरुतामोज स्थेति निवेष्याः[3] । सूर्यवर्चस स्थेत्यतिदृश्याः[4] । सूर्यत्वचस स्थेत्यातपति वर्ष्या । मान्दा स्थेति ह्रादुन्यो[5] । वाशा स्थेति पृष्वाः[6] । शक्करी स्थेति गोरुल्ब्या । विश्वभृत स्थेति पयो । जनभृत स्थेति दध्यग्नेस्तेजस्या स्थेत्याज्यमपामोषधीनाꣳ रस स्थेति मध्वथ

---

१ Thus Bo BT Bhav , उत्तरस्य MT Be 11.

२ Thus M Bhav , पुनाम्नोवात्स्य Be U , पुनाम्ना वात्स्य B ; पुना-मैवात्स्य Be 11 T.

३ Thus M BeII T and the best MSS of the Karmānta-sūtra ; परिवेष्या B Be and Bhav , निवेष्य the Vājasaneyins.

४ Thus only M and Bhav , सूर्यवर्चसस्थेतिवस्य Be 11 T ; •स्थेति-दिश्या Bo ; in BU the passage is missing , the Karmānta MSS read अभिदृश्याः ।

५ Thus M Bo , the other MSS. defective

६ Thus M Be Bhav , पृष्ठ्यो Be 11 T , but cp TS VII. 4 13

सारस्वतीरभिजुहोत्यपो[1] देवीर्मधुमतीरगृभ्णन्नूर्जस्वती राजसूयाय चितानाः। याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः॥ राष्ट्रदा स्थ राष्ट्रं दत्त स्वाहेति गृह्णाति पर्णमयेन राष्ट्रदा स्थ राष्ट्रममुष्मा आमुष्यायणायामुष्य पुत्रायामुष्य पौत्राय दत्तेत्यथैना वैतस्मे द्रोणकलशे समवनयति देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वं महि वर्चः क्षत्रियाय वन्वाना इत्यथैना अन्तरेण होतुश्च धिष्णियं ब्राह्मणाच्छंसिनश्च सादयत्यनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीरित्यथ ये ऽर्थ्याः[2] सरेका अध्वर्योस्तानावसथं हरन्त्यथ ये[3] ऽनर्थ्याः[3] अपस्तानभ्यवहरन्त्यनभिक्रामं सारस्वतीनां वसतीवरीर्दशपेयाय परिशाययन्ति॥ ८॥ तृतीयः॥

अथात्रैव तिष्ठन्याचति दर्भनाडीं शतमानं[4] हिरण्यं चत्वारि नानावृक्ष्याणि पात्राणि[5] ताप्यं चोष्णीषं चैकशतं च दर्भपुञ्जीलानि दध्युदुम्बरं शष्पाणि धनुश्चेषूंश्चेति[6] स दर्भनाड्यां शतमानं हिरण्यं सपञ्चात्यनिसृष्टमसि वाचो बन्धुस्तपोजा इत्यथैनद्वैतस्मे[7] द्रोणकलशे ऽवदधाति सोमस्य

---

१ Thus M Be U; the other MSS. more or less corrupte

२ तीर्थ्याः M Be 11 T.

३ येनतीर्थ्या M Be 11 T

४ च ins T Be 11.

५ यानि ins Be BU.

६ इति om. Be BU

७ Thus M only, अथैनद्वै॰ Be BU; अथैनद्वै॰ Be11 T.

दात्त्रमसीति। हिरण्येनोत्पुनाति शुक्रा वः शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चितानाः इति। गृह्णाति पर्णमयेन सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानाः। पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशु-र्मातृतमास्वन्तरिति। पुरस्तादासीनाय ब्रह्मणे प्रयच्छत्येतयैव गृहीत्वा दक्षिणत आसीनायौदुम्बरेण राजन्याय प्रयच्छत्येत-यैव गृहीत्वा पश्चादासीनायाश्वत्थेन वैश्याय प्रयच्छत्येतयैव गृहीत्वोत्तरत आसीनाय नैयग्रोधेन जन्याय प्रयच्छत्यथैतं[१] परेकमाग्नीध्रꣳ[१] कृत्वापिधाय[१] प्रज्ञातं निदधात्यथ यजमानं तार्प्यं परिधापयति क्षत्रस्योल्बमसीति। क्षत्रस्य योनिरसी-त्यासजते[२] तार्प्यमभीव नाभिमुष्णीषं पर्यस्यत्यथैनमेकशतेन दर्भपुञ्जीलैः पवयति मित्येन पवनेनाथैनमुन्मृजन्नाशयति[३] दध्युदुम्बरꣳ गम्याणीत्यथैनमाविद्भिः प्राच्यमानयत्याविन्नो अग्निर्गृहपतिरिति सप्तभिरनुष्टुप्छन्दसमथैनं यजमानायतने तिष्ठन्तं प्राहैष वो भरता राजेति येषाꣳ श्रेष्ठो[४] भवति। सोमो ऽस्माकं ब्राह्मणानाꣳ राजेतीतरे प्रत्याहुरथास्मै धनुः

---

१ Thus M only ·( reading however स्मं i.s.o सम ); Be U om. आग्नीध्रं . Be 11 T are wholly corrupted

२ Thus M Be B U, आसजते Be 11 T, Bhav. reads सजते or आसजते।

३ Uncertain reading ·मुन्मृजमाशयति M U Be B, T Be 11 totally corrupted: ·मुदुम्बरमाशयति।

४ Thus T Be 11, राजा M U Be B.

प्रयच्छतीन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्तयायं वृत्रं वध्यादिति शत्रुबाधना स्थेनोदृक्षूर्दूनसे[१] बाधध्वमितीतरः[२] प्रतिगृह्णाति पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पात दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पातेत्यथ हिरण्यवर्णावुषसां विरोक इति त्रिष्टुभा[३] बाहू उद्गृह्णात्यथैनं संशास्ति मनसैव दिशो ऽनुप्रक्राम मनसोर्ध्वामनूज्जिहीष्वेत्यथैनं[४] वाचयति ॥ ९ ॥

समिधमातिष्ठोग्रामातिष्ठ विराजमातिष्ठोदीचीमातिष्ठोर्ध्वामातिष्ठेत्यथाश्वैव[५] तिष्ठन्याचति मारुतं चैकविंशतिकपालं वैश्वदेवीं चामिक्षां[६] । तस्य यो ऽग्रे ऽनुवाक्यो गणस्तेन मध्यमानि कपालान्युपहितानि भवन्ति राजसूयगणाभ्यामितराणि । ताभ्यां चरति[७] मरुद्भ्यो ऽनुब्रूहि मरुतो यजेति विश्वेभ्यो देवेभ्यो ऽनुब्रूहि विश्वान्देवान्यजेत्यभिष्टस्विष्टकृते[८] एवैते हविषी[९] अपिधाय[९] प्रज्ञाते निदधात्यथ याचति शार्दू-

---

१ Before मे T Be II ins : स्वाहा वाचंत इति ब्राह्मणं, cp TBr. I. 7. 6. 8.

२ Thus M Be II T; बाधयध्वमि॰ Be BU.

३ Be BU विद् or वि, but cp. T Br. I. o.

४ Emended; ॰ध्वांमनुजिहीष्वे॰ M; ॰ध्वांमनूजजीहृषी॰ T Be II; ॰ध्वांजिहीर्षेत्य॰ Be BU; cp TBr. I. 7.7.2 and Hir. XIII. 15 · मनसो-ध्वांमनूज्जिहीते ।

५ अथ om. Be BU.

६ All the MSS. exc. M om. च ।

७ चरति M T Be II

८ Before अभिष्टमि॰ M T Be II ins. आमिक्षया चरति ।

९ Thus M Be BU , चर्वीति अपिधाय T Be II.

सचर्म सुवर्णरजतौ च[1] रुक्मौ वाराही उपानहौ सीसं च लोहितायसं च। दक्षिणतः क्लीब आस्ते। अथ पुरस्तादभिषेकस्य षट् पार्थानि जुहोत्यग्नये स्वाहा सोमाय स्वाहेत्यथ यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति। तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्यत्यमृतमसि मृत्योर्मा पाहीत्यधस्ताद्रजतमुपास्यति दिद्योन्मा पाहीत्युपरिष्टात्सुवर्णं शताद्धर्म चावेष्टा दन्दशूका इति दक्षिणत आसीनं क्लीबं सीसेन विध्यति। सव्येन पादेन लोहितायसं निरस्यति निरस्तं नमुचेः शिर इत्यथैता अभिषेकाय संप्रसर्पन्ति[2]। ताम्रो ऽवेक्षते ॥ १० ॥

सोमो राजा वरुणो देवा धर्मसुवश्च ये। ते ते वाचं सुवन्तां ते ते प्राणं सुवन्तां ते ते चक्षुः सुवन्तां ते ते श्रोत्रं सुवन्तामित्यथ ब्राह्मणः[3] पात्रमादाय तेनाभिषिञ्चत्यध्वर्युरेव[4] यजुर्जपत्यभिषिञ्चन्तीतरे सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा क्षत्राणां क्षत्रपतिरस्यति दिवस्पाह्यषावित्यथैभ्यो

१ om. MB.

२ Thus M; संप्रतिष्ठन्ति T Be II; सर्पन्ति i.e. of संप्रसर्पन्ति Be BU; Bhav periphrases: सर्पोपसर्पन्ति।

३ Thus M Be U; ब्राह्मण B, ब्राह्मणाः Be II T.

४ तेनाभिषिञ्चत्य॰ T Be II.

धाराः समुन्मृष्टे समावृत्रन्नधरागुदीचीरहिं बुध्नियमनुसंचरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिच इयाना इत्यथैतेषामभिषेकाणां मुख्ये पात्रे संस्रावान्समवनीय[1] प्रतिहितस्य गृह्णानेत्यथान्वारब्धयोः प्रतिहिते च महिष्यां च जुहोति प्रजापते न त्वदेतान्यन्य इत्यथास्मा एष प्रतिहितो वरं ददात्यथ प्रतिहिताय पात्रं प्रयच्छन्नाहेदं ते पात्रं दायादमपद्यद[2] त्वाभिषिञ्चामीदं ते ऽसदित्यथैतेनैव यथेतमेत्याग्नीध्रे[3] सरेकं जुहोति रुद्र यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि स्वाहेत्यथास्मै धनुः प्रयच्छति यदि पुरस्तादप्रत्तं भवति । समुन्मृष्टे समुत्क्रोशन्त्यभ्यषेच्ययमसावामुष्यायणो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता राजसूयेनेत्यथ भूर्भुवः सुवरिति वाचं विसृजते । द्वाभ्यां मुखं विमृष्टे । गायत्रान्विष्णुक्रमान्क्रमते[4] । ऽथोपरिष्टादभिषेकस्य षट् पार्थानि जुहोतीन्द्राय स्वाहा घोषाय स्वाहेति । द्वादश भूतानामवेष्टीर्जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्यथैतयोर्हविषोः स्विष्टकृता चरत्यथैने अपिधाय प्रज्ञाते निदधाति । ॥ ११ ॥

अथ वाराही उपानहावुपमुञ्चते पशूनां मन्युरसीति

---

१ ॰स्रावसमवनीय M.

२ Thus M, which omits only पद्य, but cp. infra XII. 13 s. f.; दायादंपद्यद Be U, the other three MSS. are wholly corrupted; my copies of Bhav read पद्य i.s.o. अपद्य।

३ आग्नीध्रे om. Be BU

४ Thus Be II T, गायत्राद्वि॰ MU Be B

दक्षिणे पादे तवैव मे मन्युर्भूयादिति सव्ये। ऽथेमामभिमृशति नमो मात्रे पृथिव्या इति। तस्यां दक्षिणं पादमुपावहरति[१] माहं मातरं पृथिवीꣳ हिꣳसिषमिति मा मां माता पृथिवी हिꣳसीदिति मध्यमेनान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामति[२] विष्णोः क्रमो ऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसीत्युत्तरत एते रथा युक्तास्तिष्ठन्ति। तान्हैव प्रतिहितो ऽवतिष्ठत्यथ प्रतिहितस्य धनुरादायाधिज्यं कृत्वा रथमातिष्ठति मरुतां प्रसवे जेषमित्याप्तं मन इति कूबरमभिनिघ्रयते[३]। तं तदानीमेव प्रतिहितो ऽन्वातिष्ठति प्रससाहिषे पुरुहूत शत्रूनिति। त्रिष्टुभान्वारभत इति ब्राह्मणमथ[४] प्रतिहिताय धनुः प्रयच्छन्नाह राजन्य एष षट्त्रिꣳशत्सु ग्राम्याप्रव्याधेषु निर्जयेन[५] सहस्रेणावमितस्तस्मा[६] इषुमस्यतादपैनꣳ[७] राध्नुताज्जिनेन[८] दक्षिणापथेनात्याकुरुतादिति। राजन्य

१ Thus MT Be 11; उपवहति Be BU.

२ °ष्क्रामसि Be 11 T Be BU, °ष्क्रामंति M, Bhav. reads the plural, cf. p. 75, 3.

३ Thus corrected (cp. p. 79, 2; 105, 16); °घिनिघ्यते M Be U; °घिघ्रियते B, °घिशायते Be 11 T.

४ Thus M only, ब्राह्मणंपतिप्रतिहिताय Be 11 T, ब्राह्मणमथमिहिताय Be BU.

५ Thus MU Be B, निर्कयेव Be 11 T.

६ Thus Be BU, °वमितस्ताका M, °वमीतमका Be 11 T

७ Thus corrected, °मस्यतादावैनं Be 11 T, °मस्यतादरैनं M; °मास्यताउपैनां Be BU

८ Thus corrected; °धुताजिलैनं Be BU, °धुताजलैनं T Be 11, °धुताजिलैन M.

आजिं धावत दुन्दुभीन्समाघ्नताभिघोतारो[1] ऽभिष्टुणताग्नीदा-ग्निरं विनयोलूखलमुद्वादय प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विड्ढीति । यथासमैषं ते कुर्वन्ति । धावन्त्याजिसृत । आघ्नन्ति दुन्दुभीन्संप्रवदन्ति वाचः । संप्रोदिता[2] वाचो ऽनुमन्त्रयते । आघ्नन्ति घोषाः प्रस्ताय । होत एषोत्तमेति प्राङ्होतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शंसति । प्रतिगृणाति । प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राङित्योपच्छत एतं माहेन्द्रं पदमनूपच्छन्त इतरानुपोपच्छन्ते नाराशंसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्ति । द्विर्हुतो माहेन्द्रः परियेत । आयन्ति रथा । आगतानथान्दृष्ट्वा जपति[3] समहमिन्द्रियेण वीर्येण सं मयेन्द्रियं वीर्यमित्यथान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामत्युत्तरत[4] एते रथा युक्तास्तिष्ठन्ति । तान्दृष्ट्वैव प्रतिहितो ऽवतिष्ठत्येव प्रतिहितस्य धनुरादायाधिज्यं[5] कृत्वा रथमातिष्ठति मरुतां प्रसवे जेषमित्याप्तं मन इति कूबरमभिनिम्र-

---

१ ॰समाघ्नताभि॰ MB.

२ Thus only M, संप्रवदिता T Be 11; in the other MSS. this whole passage is missing.

३ Thus MU Be B, वर्जति Be 11 T.

४ ॰ष्क्रामत्यु॰ Be BU; ॰ष्क्रामन्त्यु॰ M Be 11 T.

५ ॰रादायाधिज्यं M only.

यते[1] । तं तदानीमेव प्रतिहितोऽभ्यातिष्ठति प्रससाहिषे पुरुहूत शत्रूनिति । त्रिष्टुभान्वारभत इति ब्राह्मणमथ प्रतिहिताय धनुः प्रयच्छन्नाहेदं ते धनुर्दायाद्यमपश्यदा[2] नाभिषिञ्चामीदं ते ऽपदिश्यथैतेनैव यथेतमेत्यान्तरेण चात्वालोत्करावुपातीत्य पूर्वया द्वारा हविर्धानं प्रपाद्य प्राञ्चꣳ रथमावर्त्य[3] तिष्ठति । ॥ १३ ॥

तदेतान्मणीन्याचति राजतमौदुम्बरꣳ सौवर्णमिति । सव्ये हस्ते राजतं प्रतिमुञ्चत इयदस्यायुरस्यायुर्मे धेहीति दक्षिण औदुम्बरमूर्गस्यूर्जं मे धेहीति दक्षिण एव सौवर्णं शुक्रसि वर्चो ऽसि वर्चो मयि धेहीत्यथास्मा आमिक्षामुपोद्यच्छते[4] । तस्यां दक्षिणꣳ हस्तमुपावहरति मित्रो ऽसीति वरुणो ऽसीति सव्यमथैनामभिमृशति[5] समहं विश्वैर्देवैरित्यथैनामपिधाय प्रज्ञातां[6] निदधाति । तदेतान्मणीनेकस्मिन्सूत्र आवयति[7] मध्यत औदुम्बरं करोति । तान्ग्रीवासु प्रतिमुच्यैतेनैव यथेत-

---

१ Thus M and cp. supra p. 79, 2; infra 103, 9; ॰मधिनिश्र॰ Be BU; ॰मयिश्र॰ Be 11, ॰मपिश्र॰ T.

२ All the MSS. are more or less corrupted exc. M, which has however ॰यमपश्यदा ; cp. supra p. 102, 7.

३ ॰त्य all.

४ Plural M Be BU ; singular Be 11 T.

५ सव्यमथैनामभि॰ Be 11 T.

६ प्रज्ञातामिद॰ Be; प्रज्ञातं the other MSS., exc. M the reading of which is uncertain (प्रज्ञातं or प्रज्ञातां) ।

७ Thus M, आवपति Be 11 T; आनयति Be BU.

नेत्यायेणाग्नीध्रं[1] प्राञ्चꣳ रथमावर्त्यावतिष्ठत्यथाग्नीध्रे[1] रथविमोचनीया[2] जुहोत्यग्नये[3] गृहपतये स्वाहेति चतस्रः स्रुवाहुतीर्। अथास्यैतत्पुरस्तादेवाग्रेणाग्नीध्रꣳ रथवाहनं प्राग्रीषं योग्यकृतमुपस्थितं भवति । तस्मिन्सह संग्रहीत्रा रथवाहने रथमादधाति । सुवर्गादेवैनं लोकादन्तर्दधाति । हꣳसः शुचिषदित्यादधाति[4] । ब्रह्मणैवैनमुपावहरति[4] ब्रह्मणादधात्यतिच्छन्दसादधातीति ब्राह्मणम्। अथास्यैतत्पुरस्तादेव जघनेनाग्नीध्रं चतुरपसावं[5] वाष्टापसावं[5] वा विमितं कारितं भवति । तस्य मध्यत औदुम्बरीमासन्दीं निमिनोति क्षत्रस्य नाभिरसीति । तस्यामुत्तरमष्टनमधीवासमास्तृणाति[6] क्षत्रस्य योनिरसीत्यथैनामासीदत्यासीदन्तमनुमन्त्रयते स्योनामासीद सुषदामासीद मा त्वा हिꣳसीदिति । मा मा हिꣳसीदितीतरः प्रत्याहाथाखमभिमन्त्रयते[7] निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतु-

---

[1] Here and infra Be 11 T every time चाग्नीभीयं and •ग्नीधे ।

[2] रथमाहत्य• MSS.

[3] Thus ( cp. TBr. I 7. 9. 5 ) M Be U, •विमोचनीयाञ्जु• Be 11 T, B corrupted.

[4] •दधातीति ब्राह्मणमेवैनमुपा• M, the Brāhmana (TBr I. 7 9. 6) is quoted in abbreviated form by all the MSS exc M

[5] Thus M, cp. infra XV. 2 and Ap XVIII. 18. 5; •श्पषावं U Be; all the other MSS. and Bhav both times •षवावं ।

[6] Thus M; उत्तरमष्टनं अधिवास• Be, उत्तरमष्टन अधिवास• BU; उत्तरमनवधीवास• Be 11 T, Bhav. उत्तरमष्टनशुपरिरोमाधिवासं ।

[7] Thus MΓ Be 11, अनु i.s o. अभि• B Be U

रित्यैनमृत्विजः पर्युपविशन्ति । पुरस्तादध्वर्युरुपविशति दक्षिणतो ब्रह्मा पश्चाद्धोतोद्गातोत्तरतस्ततः[1] प्राञ्चो वोदञ्चो वा रत्निनः । सो ऽध्वर्युमभिवदति[2] ॥ १४ ॥

[3]ब्रह्मा३न्निति । त्वं राजन्ब्रह्मासीत्याहाध्वर्युः सवितासि सत्यसव इति । ब्रह्मा३न्निति ब्रह्माणं । त्वं राजन्ब्रह्मासीत्याह ब्रह्मेन्द्रो ऽसि सत्यौजा इति । ब्रह्मा३न्निति होतारं । त्वं राजन्ब्रह्मासीत्याह होता मित्रो ऽसि सुशेव इति । ब्रह्मा३न्नित्युद्गातारं । त्वं राजन्ब्रह्मासीत्याहोद्गाता वरुणो ऽसि सत्यधर्मेति । सुश्लोका३ इति क्षत्तारं । त्वं राजन्सुश्लोको ऽसीत्याह क्षत्ता । सुमङ्गला३ इति संग्रहीतारं । त्वं राजन्सुमङ्गलो ऽसीत्याह संग्रहीता । सत्यराजा३न्निति भागदुघं । त्वं राजन्सत्यराजासीत्याह भागधुक् । सप्त पुण्यनाम्नो ऽभ्युदायासौ[4] रथं प्रयच्छतीन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्तेन मे रध्येति । तेन[5] ते[5]रध्यासमितीतरः[5] प्रतिगृह्णाति । तं संप्रयच्छति सूताय सूतग्रामणिने सजाताय सजातग्रामणिने संग्रहीत्रे ऽवाचापगोव्यच्छाभ्यामन्ततस्तेन[6] तौ[6] मध्यतो ऽधिदेव-

---

१ ततः om. Be 11 T.

२ Thus M only ; all the other MSS. ध्वर्युरभिवदति ।

३ Here and in the following lines sometimes T Be 11, sometimes Be BU are defective ; M only is in good order.

४ Thus M only, भज्य ( i. e. अयुप ) T Be 11, अयुयाय B Be U.

५ तेनमेरध्या॰ M, तेममेराध्या॰ Be 11 T, तेनतेमराध्या॰ Be BU.

६ वेनवेमनो Be BU ; तमसो M ; T Be 11 def.

मयुद्धृत्य[1] तिस्रः पञ्चाशतः सौवर्णानामभिनिवपतो । ऽयास्मै पश्चादनपच्छिद्य प्रयच्छति दिशो ऽभ्ययꣳ राजाभूदिति । ताꣳस्तदानीमेवाग्नीधेऽपिसृजत्यथैतमोदनमुद्ब्रुवते । नानार्षेयौ ब्रह्मा च यजमानश्च समानार्षेयौ सूतग्रामण्यौ समानार्षेयौ क्षत्तृसंग्रहीतारौ । स यो नु मताच इव स राज्ञ आसने[2] उपविश्य[2] चतुःशतमनपच्छिद्याग्नीध्रꣳ राज्ञ इति । तानेव[3] मनाक्षमन्तानिव[3] कृत्वाह कृतं ब्राह्मणस्येत्यथैतमोदनमुद्ब्रुवते । समानार्षेयौ ब्रह्मा च यजमानश्च नानार्षेयौ सूतग्रामण्यौ नानार्षेयौ क्षत्तृसंग्रहीतारौ । स यः पराजयते तस्यैनं कुले क्षत्ता पाचयति । यावदेव ओदनः पच्यते तावदेव होता शौनःशेपमाख्यापयते हिरण्मये कशिपावासीनस्तस्मा अध्वर्युः प्रतिगृणाति हिरण्मये कूर्च आसीनः[4] ॥ १५ ॥

ओꣳ होतस्तथा होतः सत्यꣳ[5] होतरदरात्स्म होतरिति । यद्ध वै होता नाध्येत्यन्य[6] उ[6] होचामꣳसी गꣳसति । तस्मा

---

१ समीता iso. सवत्य M.

२ आसनमुपविश्य M.

३ तानेवमन्वकृष्म॰ M.

४ As the MSS with the exception of M are hopelessly spoiled, the text of the last 13 lines has been reconstructed as best possible. Only the various reading of M is given, as the var of the other MSS. is nearly worthless

५ MSS exc. M ins च, cp. XVI. 8

६ नाध्येत्यन्यो T Bo 11; सधीत्यन्व (॰मुच) Be BU, सदाधेत्वन्यꣳ M.

च प्रतिप्रस्थाता प्रतिगृह्णाति । परःशतं भवतीति ब्राह्मणं । यदैव ओदनः पक्वो भवत्यथैनमेकधोद्धृत्य ब्रह्मण उपहरति । तस्मा एतांश्चैव सर्वान्ददाति[1] शतं विपथं चतुर्युक्तमिवरथं[2] होत्रे ददाति शतं विपथं हिरण्मयं कशिपथोद्गात्रे ददाति शतं विपथमथाध्वर्यवे[3] ददाति शतं विपथं रथं तिस्रः पष्ठौहीः सौवर्णानिद्वान्हिरण्मयं कूर्चमित्येतेभ्य एतन्निर्भयं[4] सहस्रं चतुर्धा कृत्वा ददात्यथैनमेतयामन्त्रा सह श्वावहन्त्या[5] वा[5] प्रगत्र्यश्वायन्त्येनमेते[5] चमसा । अथैतयोर्हविषोरिडामुपह्वयत । इडोपहूतं माहेन्द्रं होता चैवाध्वर्युश्च[6] संभक्षयतो । नराशंसपीतेन नाराशंसान् । होतृचमसमेवैते चयः समुपह्वय भक्षयन्ति । यथाचमसं चमसान्दिन्व स दक्षिणाकानां प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽथैन्द्राय त्वेन्द्राय त्वेत्येवं[7] विभिन्नक्ष्यपर्यायैश्चरन्ति[8] । संतिष्ठते माध्यंदिनं सवनं । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्य-

---

१ सर्वान् before सर्वान् ins. Be B, सर्वसर्वान् U.

२ चतुर्युक्तमिथं all (also Āp XVIII. 19. 7), but cp. supra p. 96, 5.

३ Thus M, अथ om. Be BU; विविषमथाध्वर्यवे T Be 11.

४ एतन्निर्भयं all.

५ श्वावहन्त्यावाप्रगत्र्य॰ Be BUT Be 11, श्वावहन्त्याप्रगत्र्य॰ M, but cp. supra p 81, 5

६ इतित्वार्थं ins T Be 11.

७ Thus MT Be 11, त्वेति Be; त्वेत्येव सर्वं BU

८ ॰चरति M Be BU, ॰चरंति T Be 11.

ग्रहेण परिप्लावयणं गृह्णात्यथोक्थ्यं गृह्णाति । समानं कर्मा पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभ्यां चरति । तयोर्नाना मनोते[1] नाना देवते[2] नाना प्रत्यभिमर्शनौ[3] नाना वपाहोमौ समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशो । नाना दिश इत्येके । समानं कर्मावभृथादवैतस्मिन्नवभृथ उपाददते चार्मपत्यावुपानहौ[4] । प्रस्नाप्य वाराही चार्मपत्नीभ्यामुदेति[5] । सो ऽपामन्ते जुहोत्यपां नप्त्रे स्वाहेति । विषुवति दर्भस्तम्बे जुहोत्यूर्जो नप्त्रे स्वाहेति । पुनरेत्य[6] गार्हपत्ये जुहोत्यग्नये गृहपतये स्वाहेति । प्रसिद्धो ऽवभृथ । उदयनीयेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै प्रसिद्धं वपया चरित्वा नैव श्मश्रूणि वपते न केशान्संतिष्ठत एष उक्थ्यो ऽभिषेचनीयश्चतुस्त्रिंशपवमानः[7] सहस्रदक्षिण उदवसानीयान्तः । ॥ १६ ॥ पञ्चमः ॥

अथास्यैषा पुरस्तादेव जुष्टे देवयजने सप्तसु ग्राम्याग्न्याधेषु शाला कारिता भवति । सो ऽत्रैवाग्नेयमष्टाकपालं निर्वपति ।

---

१ मनोते M Bo 11 T; मनोता Be BU.

२ Thus M; देवता Be BU, T Bo 11 om. this passage.

३ °मर्शनौ M; °मर्शने T Bo 11, °मर्शे B, °मर्शना Be.

४ Thus M, चर्मपत्या उपानहौ T Bo 11, चार्मैष्या उपानहौ BU; चार्मैष्या उ° Be, cp. infra XVIII 19 init.

५ Thus T Bo 11, चार्मपत्निभ्या° M, चर्मपत्नीभ्या° B, चर्मपत्निभ्या° Be U.

६ Thus M, प्रातरेत्य Be BU, Bo 11 T defective.

७ °स्त्रिंशत्पव° U Bhar

हिरण्यं ददाति । शम्यान्याम उदवसाय वसति । सारस्वतं चरुं । वत्सतरीं ददाति । द्वितीये शम्यान्याम उदवसाय वसति । सावित्रं द्वादशकपालमुपध्वस्तं ददाति । तृतीये शम्यान्याम उदवसाय वसति । पौष्णं चरुं । श्यामं ददाति । चतुर्थे शम्यान्याम उदवसाय वसति । बार्हस्पत्यं चरुं । शितिपृष्ठं ददाति । पञ्चमे शम्यान्याम उदवसाय वसत्यैन्द्रमेकादशकपालमृषभं ददाति । षष्ठे शम्यान्याम उदवसाय वसति । वारुणं दशकपालं । महानिरष्टं ददात्यथ सप्तमे ऽहन्स्थालामध्यवस्यत्यैतदेवाहर्दीक्षते[1] । ऽथ वै भवति सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति पुण्डरिस्रजां प्रयच्छतीत्यथैनं तीर्थादानीय पवयित्वा पुण्डरिस्रजिनमुदानीय दीक्षणीयामिष्टिं निर्वपति । तस्मात् संस्थितायां मुष्टी चैव न करोति वाचं च न यच्छति । निदधत्यथास्मा एतद्धविरुच्छिष्टं व्रतभाजनमथ प्रायणीयामिष्टिं निर्वपति । हविष्कृता वाचं विसृजते । ऽथास्मा एतद्धविरुच्छिष्टं प्रयच्छन्ति[2] व्रतभाजनमथ प्रायणीयेन चरति । प्रायणीयेन चरित्वा पदेन चरति । पदेन चरित्वा दशभिः षाण्डैर्वत्सतरै राजानं क्रीत्वातिथ्यं निर्वपत्यातिथ्येन प्रचर्य पुरस्तादुपसदां सौम्यं चरुं । बभ्रुं ददात्यथ मध्यमे उपसदावन्तरेण त्वाष्ट्रमष्टाकपालं । शुण्ठं ददात्यथोपरिष्टादुपसदां वैष्णवं त्रिकपालं । वामनं ददात्य-

१ दीक्षते Be BU, दीक्षेते M, दीक्ष्यते T Be 11.
२ ॰यच्छति M Be 11 T, ॰यच्छन्ति Be BU

थाहवनीयं प्रणयत्याहवनीयं प्रणीय सदोहविर्धाने संमिनोति । सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्याहुता यूपमुच्छ्रयति । स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति । तस्य प्रसिद्धं वपया चरित्वा सारस्वतीर्वसतीवरीर्गृह्णात्यथ पशुपुरोडाशं निर्वपतीडान्तः पशुपुरोडाशः संतिष्ठते । पत्नीसंयाजान्तः पशुर्हृदयशूलान्त इत्येके । ऽथ वसतीवरीः परिहृत्य पयांऽसि विशिष्योपवसन्त्यथातो महारात्र एव बुध्यन्ते । प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यग्निरुद्रैति[1] । ॥ १७ ॥

अग्निष्टोमं क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं[2] गृहीत्वा द्वे रशने आदाय यूपमभ्यैति[3] । स्वर्वन्तं यूपमुत्सृज्याग्नेयं पशुमुपाकरोति । तस्य प्राजापत्यस्तूपर उपालम्भ्यो भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा प्रसर्पन्ति प्रातःसवनाय । पूर्वस्यां द्वारि[4] सूतग्रामण्यावुपतिष्ठतो[5] ऽपरस्यां क्षत्तसंग्रहीतारौ । प्रसर्पतः पृच्छतः का ते माता का ते[6] मातामहीति । स च

---

१ •द्रैति MT Be 11, •द्रेति Be BU.
२ om. MT Be 11
३ •भ्यैमि M Be BU, •भ्येमि T Be 11.
४ द्विषि M
५ •वुपतिष्ठतो B Be U, •वुपविशतो M, •वुपविश्य T Be 11.
६ om. Be BU

आ दशम्यै[1] संपादयत्यथ तꣳ सृजन्त्यथ यो न संपादयति दीर्घवꣳशेन तमुपातुदन्ति[2] । स य आह वैश्या मे माता सावित्रीति[3] यान्ति तꣳ सृजन्ति विश्वो विवाहान् गोपाय इति वदन्तो । दशदशैव पशुमभिसंयानत । एतुधा प्रातःसवनꣳ संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि हुत्वा प्राकाशावध्वर्यवे ददाति स्रजमुद्गात्रे रुक्मꣳ होत्रे ऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने वाससी नेष्टापोतृभ्याꣳ स्थूरि यवाचितमच्छावाकायानड्वाहमग्नीधे । भार्गवो होता भवति । श्रायन्तीयं ब्रह्मसाम भवति वारवन्तीयमग्निष्टोमसाममेतुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णाति । समानं कर्मा पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभ्यां चरति । तयोर्नाना मनोते[4] नाना देवते[5] नाना प्रत्यभिमर्शनौ[6] नाना वसाहोमौ समानो वनस्पतिः समानः स्विष्टकृत्समैषवान्समानीडा समान्यो दिशो । नाना

---

१ Thus Be BU, दशमध्ये M, T Be 11 om. this passage altogether.

२ Thus M Be U, तमुपावदन्ति B; तदनुदन्ति T Be 11.

३ Thus MT, सावित्रीति Be 11; सावित्रीवि Be BU.

४ मनोते MT Be 11; मनोता Be BU

५ देवते M, देवता Be BU, om. T Be 11.

६ Thus T Be 11, ॰भिमर्शौ M, ॰भिमर्शना Be BU.

दिश इत्येके । समानं कर्मावभृथात्संसिद्धो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै प्रसिद्धं वपया चरित्वा दक्षिणे वेद्यन्ते श्मश्रूण्येव वपते न केशान्संतिष्ठत एषो ऽग्निष्टोमः सप्तदशो दशपेयः सहस्रदक्षिण उदवसानीयान्तः । ॥ १८ ॥ षष्ठः ॥

अथ पञ्चहविषा दिशामवेष्ट्या यजते[1] । आग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालं वैश्वदेवं चरुं मैत्रावरुणीमामिक्षां बार्हस्पत्यं चरुमित्यथ वै भवति हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयतीति । स हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयत्यन्वाहार्यमासादयेता[2] आदिष्टदक्षिणा ददात्यथ द्विपशुना पशुबन्धेन यजत । आदित्यां मल्हां गर्भिणीमालभते मारुतीं पृश्निं पष्ठौहीं । गर्भिण्यादित्या भवत्यगर्भा[3] मारुत्यादित्यया पूर्वया प्रचरति मारुत्योत्तरयोच्चैरादित्याया आश्रावयत्युपांशु मारुत्यै । संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाथ सात्यदूतानां[4] हविर्भिर्यजते । ऽश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति सरस्वते सत्यवाचे चरुं सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमन्वाहार्यमासाद्य तिसृधन्वं शुष्कदृतिं ददाति । तं प्रतिराजभ्यः प्रहिणोति । स

---

१ यक्षत Be BU.

२ Thus M only; °मासायता Be BU, °मासादेता T Be 11.

३ Thus M only; भवतिगर्भा Be BU, T Be 11 om. these words.

४ Thus M, the other MSS are partly corrupted, partly incomplete

यः प्रतिगृह्णाति मित्रो म इति तं वेदाथ यो न प्रतिगृह्णात्यमित्रो म इति तं वेदाथ पूर्वैः प्रयुजाꣳ हविर्भिर्यजत । आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालं बार्हस्पत्यं चरुं त्वाष्ट्रमष्टाकपालं वैश्वानरं द्वादशकपालमन्वाहार्यमासाद्य दक्षिणाꣳ रथवाहनवाहं[1] ददात्यथ पौर्णमासवैमृधाभ्यामिष्ट्वोत्तरैः प्रयुजाꣳ हविर्भिर्यजते । सारस्वतं चरुं निर्वपति पौष्णं चरुं मैत्रं चरुं वारुणं चरुं क्षैत्रपत्यं चरुमादित्यं चरुमन्वाहार्यमासाद्योत्तरꣳ रथवाहनवाहं[2] ददाति ।

॥ १९ ॥

अथैतद्द्वादशाहं व्रतं चरत्याक्ते[3] । न दतो धावते । ऽभ्यङ्क्ते । न प्रमन्दयते । युध्यते युद्ध आगते । ऽग्निहोत्रोच्छेषणव्रतो वा[4] यजमानो भवति । भक्तमु[5] पत्न्या आहरन्त्यथास्यैतत्पुरस्तादेव जुष्टे देवयजने तिस्रः शालाः कारिता भवन्ति । स दक्षिणार्ध्यां[6] शालामध्यवसाय मथित्वाग्नीन्वि-

---

१ Thus Be BU; रथवाहनं MT Be 11, but cp. Āp. XVIII 22. 6, 8.

२ Thus again, Be BU; रथवाहं M; T Be 11 om.

३ These and the following words thus in M, चरत्याह्ने मदेवेधावनेथ्यंजीनप्रमदयते Be BU; चरमिनात्मनेनदतीभावतेभ्यक्नेनप्रमनदवे Be 11 T; Bhav reads प्रक्रन्दयते explaining this word, as it seems, by न चाहार्षां शेते न कैमान्चिल्लिखते।

४ वा Be 11 T, च Be BU; M om.

५ M om उ, but cp. vol. I 67. 4.

६ दक्षिणा T Be 11.

हृत्य प्रतीचीनस्तोमाय केशवपनीयायातिरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यजनीये[1] ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथ[2] वसतीवरीः परिहृत्य पयांसि विशिष्योपवसन्त्यथातो महारात्र एव बुध्यन्ते । प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यद्भिरुदैत्यतिरात्रं[3] क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्माविभृथात्प्रसिद्धो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै प्रसिद्धं वपया चरित्वा दक्षिणे वेद्यन्ते यानि कानि च लोमानि[4] वापयते । संतिष्ठत एष प्रतीचीनस्तोमः केशवपनीयो ऽतिरात्रः सहस्रदक्षिण उदवसानीयान्तो । ऽथ मध्यमाः प्रासामध्वसाय मथित्वाग्नीन्विहृत्य व्युष्ट्यै द्विरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते द्विरात्रस्य मे[5] सतो[5] ऽमावास्याया[5] उपवसथीये[5]

---

१ Thus U Be (sec. m.), यज्ञीये Be (pr m.) B; यज्ञिये M; Bo 11 T om the passage.

२ •थोपवस• M Be.

३ Thus M Be 11 T; •द्भिरुदैत्यातिरात्रं Be BU.

४ सानि ins M.

५ Thus T Be 11 (only •वास्याये), मे before सतो om. M, but this MS : मावास्याये म उप•, Be BU give मे before सतो and मा before उप•, reading •वास्याये।

मंथ वै भवति यस्य तृतीयसवने सोमो ऽतिरिच्येतोक्थ्यं कुर्वीत । यद्युक्थ्ये ऽतिरिच्येतातिरात्रं कुर्वीत । यद्यतिरात्रे ऽतिरिच्यते तं वै दुष्प्रज्ञानमित्यतिरात्रे ऽतिरिक्ते प्राङाधयाश्च होतुश्चमसमनूपयध्वमुचेतः सर्वेग एव राजानमुपय मातिरीरिच इति । होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितराश्चमसान्सर्वेग एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्तर्धाय उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा होतृचमसमुपाकरोति । स्तुवते । तदेतद्बृहत्सामैकविꣳशं वैष्णवीषु शिपिविष्टवतीषु कुर्वन्ति । होत्र एवोत्तमेति प्राङः । समानमत ऊर्ध्वम् । ॥ २५ ॥

[1]इति नु छन्दोगबह्वृचेषु कामयमानेषु । ते चेत्कामयेरन्प्रातःसवने ऽतिरिक्ते याꣳ स्थालीमन्नꣳ राज्ञो ऽतिशिष्टाय मन्यते तस्या उपरिष्टादाग्रयणमाग्नीयाधस्तादुपस्तृणाति । विरभिविष्यन्दयति । सो ऽभिविष्यन्दमानः सर्व आग्रयणः संपद्यते । तं विरभिहिंकृत्य परिमृज्य सादयति । माध्यंदिने सवने ऽतिरिक्ते तथैव याꣳ स्थालीमन्नꣳ राज्ञो ऽतिशिष्टाय मन्यते तस्या उपरिष्टादाग्रयणमाग्नीयाधस्तादुपस्तृणाति । विरभिविष्यन्दयति । सो ऽभिविष्यन्दमानः सर्व एवाग्रयणः संपद्यते । तं तथैव विरभिहिंकृत्य परिमृज्य सादयति । तृतीयसवने ऽतिरिक्ते हारियोजनमेवाथाभिविष्यन्दयति । न हि पुनर्ग्रहणं विद्यते । ऽयातो

[1] [illegible] XIV 17 18

ध्रुवस्यैव[1] परिह्वीणस्य[1] सौमाꣳस्यैन्द्राग्निभ्यामेतमृग्भ्यां परिगृह्य जुहुयादिन्द्राग्नी[2] वै देवानां पुनःपुनरभ्युपाकारं[3] यज्ञाय[4] इत्येतदेकमाश्विनीभ्यामेतमृग्भ्यां परिगृह्य जुहुयादश्विनौ वै[4] देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोतीत्येतदेकं वैष्णवीभ्यामेतमृग्भ्यां परिगृह्य जुहुयाद्यद्वै यज्ञस्यातिरिच्यते विष्णुं तच्छिपिविष्टमभ्यतिरिच्यत इत्येतदेकमवघ्रेयैनꣳ सहाभ्यवहरेद्यथा सेऽन्यानि सोमलिप्तानि पात्राण्येवं स एव भविष्यतीत्येतदेकं बर्हिषैनꣳ सहाभ्युपोषेदेष वा अग्निर्वैश्वानरो यत्प्रदाव्यो ऽग्नय एष वैश्वानराय गृह्यते ध्रुव एवमग्नौ वैश्वानरे कृतो भविष्यतीत्येतदपरमेव पुनर्दीयते यज्ञो ह[5] वै[6] यज्ञस्य प्रायश्चित्तिरिति[6] सैकाक्षयाजिनो ऽथ मन्त्रिणां मार्जालीये[7] परिष्यन्दे[7] निष्यन्दनवन्तं[7] कृत्वा तदेनं निनयन्ति श्वो भूते हि ते सोष्यन्तो[8] भवन्ति ॥ २९ ॥ एकादशः ॥

उक्तः सꣳस्रवो ऽथ वै भवत्यार्तिं वा एते नियन्ति येषां दीक्षितानां प्रमीयते तं यदवर्जेयुः क्रूरकृतामिवैषां लोकः

---

१ ध्रुवस्य परिह्वीणस्यैव M.

२ इन्द्रौ i.s o. इन्द्राग्नी all exc. M

३ Thus MGU; •भ्युपकारं Be; B om. यभि।

४ रि Be.

५ Thus M Be; हैव the other MSS.

६ •रितौ again most of the MSS.

७ Thus MB Bhav , मार्जालीयोपरिविष्यंदनवंतं Be UG (pr. m.); मार्जालीये परिविष्यंदन्निष्पदनवंतं G (sec. m.).

८ Thus MU; सोष्यन्तो Be BG.

स्यादाहर दहेति ब्रूयादिति । दीक्षितं चेदुपतपद्विन्देदाग्नीध्रीयमयनो[१] ह[१] भवति । तदस्मै भक्षानाहरन्ति यावदलं भक्षाय मन्यते । स यद्यगदो[३] भवति पुनरेति । यद्यु वै प्रैति सर्वेभ्यो ऽग्निभ्यो ऽङ्गारान्निर्वर्त्यारण्योरग्नीन्समारोह्यान्तरेण चात्वालोत्करावुदङ्ङुपनिर्हृत्य तेनैनं दहेयुस्त्रिरात्रेण प्रीतीकृत्वा संचिनुयुस्ते तथाकृतेन[४] यज्ञसंस्थां[४] काङ्क्षेयुरथ संस्थिते यज्ञे ऽस्थिकुम्भं[५] याचति । तस्मिन्संचितमवधाय तं दक्षिणतो वेद्यै निधाय सर्पराज्ञिया ऋग्भिः स्तुयुरियं[६] वै सर्पतो राज्ञ्येषा एवैनं परिददति । व्यूढं तदित्याहुर्यत्स्तुतमननुशस्तमिति । होता प्रथमः प्राचीनावीती मार्जालीयं परीयाद्यामीरसुभुव-न्सर्पराज्ञीनां[६] कीर्तयेदिति । तेषां तथा परीतानामध्वर्युर्जघन्यः पर्येत्याथ यज्ञोपवीतं कृत्वा यथेतं त्रिः पुनः प्रतिपरियन्ति । तेषां तथा परीतानामध्वर्युः पूर्वः पर्येत्याथैनमादायान्तरेण चात्वा-लोत्करावग्रानं चास्थिकुम्भं च निधायाङ्गिरवोचत्यप[७] नः शोशुचदघमिति । तस्मिन्नेवावदानापाम्पशान्गृह्णन्त्यथातिप्रिष्ट सचस्यामते । तस्यावभृथवेलायामस्थिकुम्भं निधायाङ्गिरवोचदेतद-

---

१ Thus M; °ग्नीध्रीयेम° the other MSS

१ om M.

३ Thus M; यदगाद° Bo, यद्गुगाद° the other MSS

४ कृतेनाथ° M Bo.

५ स्थि left out by all exc. M.

६ The passage from इयं वै unto यामीरसुभुव left out by all exc. M.

७ [illegible]

वसथ उ[1] वैवेद[1] भवत्यपि[1] वा[1] यो[1] ऽस्य स्वो[1] नेदिष्ठी स्यात्तस्य स्थाने तं दीक्षयेत्संवत्सरे ऽग्नीनि याजयन्त्यय[3] वै भवति ॥ २७ ॥

अग्नयं वा एतस्मादर्धं कृत्वा पशवो वीर्यमपक्रामन्ति यस्य यूपो विरोहति । त्वाष्ट्रं मझदपमालभेतेति । अक्षिणां चेद्यूपो विरोहेत्संमच्छिद्यात्स्य[4] यथालङ्ग मवनीयस्य त्वाष्ट्रमुपालम्भ्यं कुर्युरपि वा त्वाष्ट्रं मद्धौदनङ्ग अपधिलीताः शाखाः प्रहरेयुः प्र वा तद्व्यपुरपि वा त्वाष्ट्रीः सुवाङ्कतीर्ङ्लैताः शाखाः प्रहरेयुः प्र वा तद्व्यपुरपि वा त्वाष्ट्रे[5]त्वष्ट[5] इत्येव[5] ब्रूयादित्यय वै भवत्यार्तिमेते नियन्ति येषां दीक्षितानामग्निरुद्दायति । यदाहवनीय उद्दायेद्यत्तं मन्येदिच्छिन्द्याद्भ्रातृव्यमस्मै जनयेद्यदाहवनीय उद्दायेदाग्नीध्रादुद्धरेद्यदाग्नीध्र उद्दायेद्गार्हपत्यादुद्धरेद्यद्गार्हपत्य उद्दायेदत एव पुनर्मन्थेदेव वाव स निलयते । यत्र खलु वै निलीनमुत्तमं पश्यन्ति तदेनमिच्छन्ति । यस्माद्दारोरुद्दायेत्तस्यारणी कुर्यात्क्रुमुकमपिकुर्यादिति । स यस्माद्दारोरुद्दायति तस्यारणी कृत्वा क्रुमुकशकलमन्ववधाय[6] तान्येवावक्षाणानि संनिधाय मन्थेदिति । स तान्येवावक्षाणानि संनिधाय मन्थतीतः प्रथमं जज्ञे

---

१ Thus M; एवैवैव भवत्यपिवायो G, एवैव भवति यो U; इवैवैव भवत्यपिवा यो B, एवैवह्यकलयो Be.

२ All MSS. ins. वा exc. M.

३ याजयत्यय Be U

४ Thus MBG, •च्छेत्संमच्छि• Be

५ Thus M, त्वाष्ट्र' त्वाष्ट्रेत्येव B; त्वाष्ट्रत्वाष्ट्रेत्येव GU; त्वाष्ट्रेत्येव Be.

६ Thus MU Be, क्रुमुकं• BG, अन्ववधाय MUG Be; अन्वाधाय B.

अग्निः स्वाद्योनेरधि जातवेदाः । स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति । छन्दोभिरेवैनꣳ स्वाद्योनेः प्रजनयतीति ब्राह्मणम् । ॥ २८ ॥

अथ यद्याहवनीयगार्हपत्यावुद्वायेयातां गार्हपत्यं मथित्वाग्नीध्रीयादाहवनीयमुद्धरेदथ यद्याग्नीध्रीयगार्हपत्यावुद्वायेयातां गार्हपत्यं मथित्वाग्नीध्रीयमुद्धरेदथ यद्याग्नीध्रीयाहवनीयावुद्वायेयातां गार्हपत्यादाग्नीध्रीयमुद्धृत्य तत आहवनीयमुद्धरेदथ यदि सर्व[1] एवोद्वायेयुर्गार्हपत्यं मथित्वाग्नीध्रीयमुद्धृत्य तत आहवनीयमुद्धरेदित्यथ वै भवति गार्हपत्यं मन्थति । गार्हपत्यो वा अग्नेर्योनिः । स्वादेवैनं योनेर्जनयति । नास्मै भ्रातृव्यं जनयतीति ब्राह्मणमथ वै भवति यस्य सोम उपदस्येत्सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधूनुयाज्जुहुयादन्यदिति । स यस्य सोम उपदस्यति तत्सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधूनोति मुख्ये चमसेऽन्यदवधाय जुहोति । सोममेवाभिषुणोति सोमं जुहोतीति ब्राह्मणमथ वै भवति सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत्तत्सुवर्णꣳ हिरण्यमभवत्तत्सुवर्णꣳ हिरण्यं कुर्वन्ति प्रिययैवैनं तनुवा समर्धयन्तीति ब्राह्मणमथ वै भवति यस्याक्रीतꣳ सोममपहरेयुः क्रीणीयादेव । सैव ततः प्रायश्चित्तिरिति ब्राह्मणमथ वै भवति यस्य क्रीतमपहरेयुरादाराꣳश्च फाल्गुनानि चाभिषुणुयादित्यादाराः घुद्रतृणानि[2] ।

---

[1] सर्वे M

[2] Thus M, घुवक॰ the other MSS

फाल्गुनानि हैमवतानि। तेषामलाभे श्येनकाम्नो प्रतिनिधिर्विज्ञायते तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरन्तस्य पर्णमच्छिद्यत। तत्पर्णो ऽभवत्तत्पर्णस्य पर्णत्वमिति। तस्मात्पर्णत्सुकृणानेवाभिषवः[१] कार्य इति। घृतेन प्रातःसवने श्रीणीयादिति। घृतमेतद्भवति। दध्ना मध्यंदिन इति। दध्येतद्भवति। नीतमिश्रेण तृतीयसवन इति। विमथितꣳ सपिण्डकमुद्धृतं[२] प्राङ्नवनीतभावादित्येतदाचक्षते। ऽग्निष्टोमः सोमः स्याद्रथंतरसामा। य एवर्त्विजो वृताः स्युस्त एनं याजयेयुरिति। त एवैनं याजयन्त्येकां गां दक्षिणां दद्यादित्येकां गामत्र दक्षिणां ददाति। यदिव दास्यन्भवति तदस्मै ददाति। पुनः सोमं क्रीणीयाद्यज्ञमेव तद्यज्ञमिच्छति। सैव ततः प्रायश्चित्तिरिति ब्राह्मणमथ वै भवति सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः[३] कामेभ्यः[३] सर्वेभ्य स्तोमेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते यः सत्त्रायागुरत। एतावान्खलु वै पुरुषो यावदस्य वित्तꣳ सर्ववेदसेन यजेतेत्यतिरात्रं विश्वजितमुपयन्त्यथाच[४] सर्ववेदसं ददाति। सर्वपृष्ठो ऽस्य सोमः स्यात्सर्वेभ्य एव

---

१ Thus M; ०त्सुकर्णषेवाभि० BG; ०त्सुकर्णषेत्रेवाभि० U; ०त्सुकर्णनेवाभि० Be

२ Thus all, are we to read सपिण्डक० ? सपिण्डकमप्राङ्नवनी० Be U; सपिण्डकमुद्धृतकप्राङ्नवनी० M, but the क seems to be cancelled.

३ om M

४ अथ om M

देवताभ्यः सर्वेभ्यः कामेभ्यः सर्वेभ्य स्तोमेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीत इति ब्राह्मणम् ' ॥ २९ ॥

पवमानः सुवर्जन इति सौत्रामण्यामेव भवति ' ब्राह्मणमुत्तरमेव वै भवति तस्माद्वैश्वदेवेन यजमानः संवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत ' तस्माद्वरुणप्रघासैर्यजमानः परिवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत ' तस्मात्साकमेधैर्यजमान इदावत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत ' तस्माच्छुनासीरीयेण यजमानो ऽनुवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीतेत्यथ वै भवत्यग्नेः कृत्तिकाः शुक्रं परस्ताज्ज्योतिरवस्तादिति नक्षत्रेष्टकाभिर्विकल्पयन्त इति ब्रुवते ' ऽथ वै भवति यत्पुण्यं नक्षत्रं तद्वट्कुर्वीतोपव्युषमिति[१] ' प्रातः कुर्वीत ' संगवे कुर्वीत ' मध्यंदिने कुर्वीतापराह्णे कुर्वीत ' सायं कुर्वीत ' यावति तत्र सूर्यो गच्छेद्यत्र जघन्यं पश्येत्तावति कुर्वीत ' यत्कारी स्यात्पुण्याह एव कुरुत इति ' ब्राह्मणमुत्तरे ब्राह्मणमुत्तरे ' ॥ ३० ॥ द्वादशः ॥

## ॥ इति चतुर्दशः प्रश्नः ॥

---

१ Thus M and Bhav., तद्वट्कु॰ the other MSS , the text of T. Br. I. 5 2 1. has यद्वट्कुर्वीत but cp the comm

: [1]अश्वमेधेन यक्ष्यमाणो भवति राजा विजितो सार्वभौमः। स एतद्देवयजनं जोषयत आग्निं प्रागाग्निं दक्षिणाग्निं प्रत्यगाग्निमुदक्। छिन्दन्ति वृक्षांश्च स्थलानि भिन्दन्ति प्रति निम्नान्पूरयन्ति किङ्ग्राछपि निरस्यन्ति। नदीनां तीर्थानि सर्वतःप्रस्रवणानि पल्वलानि कुर्वन्त्यथैतौ ह्रदौ मध्यतो देवयजनस्य जोषयते षट्स्राविणावनुपदासिनौ पुण्यनामानौ यद्येवं विन्दन्ति। यदु वा एवं न विन्दन्ति खात्वैनावभिवाह्याभिर्वाभिहार्याभिर्वाद्भिः पूरयन्ति। यथा त्वेव षट्स्राविणावनुपदासिनौ पुण्यनामानौ भवतस्तथा। तावपरेण मध्यतो देवयजनं जोषयते द्विस्तावद्ययापेर्विधायां। तच्छालां कुर्वन्ति प्राचीनवंशां दिक्षतीकाशां दक्षिणतो वर्षीयसीं। तस्यै दक्षिणतो ऽश्वशालां कुर्वन्ति। नदस्यत्यानाङ्[2] क्षौपाणामश्वाचीनाधाणामश्वजं[3] कुर्वन्त्यथास्मैते संभारा उपक्लृप्ता भवन्त्यश्वो रूपीयो यो[4] ऽस्य[4] षड्श्वानाङ् सत्तमस्तस्यान्ये ऽपरिमिता

---

१ As all the MSS., with the exception of M, are mostly very corrupted, the text is given according to M; when the reading of M differs from the reading taken up in the text, this is mentioned; but otherwise the various readings of the other MSS. are, as a rule, not given

२ नदस्थान M, but cp. Āp. XX. 7. 7.

३ क्षौषाधान॰ M, त्रिमौसुधान॰ B Be (pr. m.); त्रिमध्यान॰ Be (sec m), त्रिमौमहनाम॰ U.

४ Thus corrected, cp. infra XV. 8 s. f, यो om. M; यस the other MSS

निरमणा निरष्टाः कण्ठश्च श्वा चतुरक्षो द्वौ दासावनुजार्यौ च पुत्रो ऽग्न्याधेयार्थे च जरत्पूर्वा चैषीकस्ताम्भूदः मैथकं च सुवर्णं पौंश्चलेयश्च[1] चत्वारि शतानि गोमृणाꣳ शतं तल्प्यानाꣳ राजपुत्राणाꣳ शतमराजामुग्राणाꣳ[2] शतꣳ सूतग्रामणीनाꣳ शतं क्षत्तसंग्रहीतृणां चत्वारो महान्त स्थलिजस्तानन्वितरे। तान्काले ऽपदातीन्समावहन्ति ॥ १ ॥

आ सुब्रह्मण्याया आस्तुतायौरापो दिग्भ्यः संभृताश्चतुरः[3]माहस्वाचिह्नकाम्सुवर्णरजतौ च रुक्मौ द्वे अन्ये हिरण्ये द्वौ वीणागाथिनौ ब्राह्मणं च राजन्यं च द्वे रशने मौञ्जीं च कुशमयीं चोभे चयोद्गारत्न्यावेंतेनोपक्रमेम चित्रामायतीसुपरमत्यंध[4] चिनयेत्यरण्योरग्नीन्समारोह्य शालामभिमैति ये ते पन्थानः सवितः पूर्व्यासो ऽरेणवो वितता अन्तरिक्षे। तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च देव ब्रूहीत्युत्तरेण शालां परीत्य पूर्वया द्वारा शालां प्रपाद्य गार्हपत्यस्यायतने मथित्वाग्नीन्विहृत्य गार्हपत्यमुपतिष्ठते नमो ऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहीति। नमो वायवे

---

१ All MSS. the accus.

२ उग्राणां left out in all the MSS.

३ We would expect here and in the following words also the nomin.

४ Thus M, अध is o, अध all the other MSS, cp. supra p. 145, 3, and infra XVIII 8, 16.

ऽन्तरिक्षचिते लोकस्पृते लोकमस्मै यजमानाय देहीत्यन्वाहार्यपचनं । नमः सूर्याय दिविचिते लोकस्पृते लोकमस्मै यजमानाय देहीत्याहवनीयमथाप्येतत्पुरस्तादेव जघनेनाग्निशालामेकापक्षावं विमितं कारितं भवति । तद्दृष्याग्निमुपसमाधाय मृत्यवे स्वाहा मृत्यवे स्वाहेति नवतिमाहुतीर्जुहोति प्रयासाय स्वाहेत्येकादश । शतायुर्वै पुरुषः शतवीर्य आत्मैकशतो यावानेव पुरुषस्तस्मान्मृत्युमवयजत इति ब्राह्मणमथ केशश्मश्रु वापयित्वा लोमानि संहृत्य नखानि निकृत्य दतो धाव्य स्नातावहते वाससी परिदधाते । उभौ मानुषेणालङ्कारेणालङ्कृतौ भवतो ऽहतवाससावेताभ्यां व्रतोपायनीयं पाययति । तस्याशितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्यायापराह्णे मुखयोर्हिरण्ये ऽन्वस्येते ॥ २ ॥

सुवर्णं यजमानो रजतं पत्नी रजतानि वा यदि बह्वी भवन्त्यथास्य वाचंयमस्य सायमग्निहोत्रं जुहोत्युपसंगच्छन्त एतमेते राजगृह्याः सूतग्रामण्यः[1] छत्त्रसंग्रहीतारः कारुविशा[2] इति । तेभ्यः पष्ठौहीं वेहतं ददाति । तां ते पचमाना रमयन्तो जागरयन्त आसते । ऽथ प्रातराचामाचामन्तौ हिरण्ये प्रोथतस्ते पौंश्चलेय आदत्ते । ऽथादित्यमुद्यन्तमुपतिष्ठन्ते द्रष्ट्रे नम उपद्रष्ट्रे नमो ऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमो ऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमो ऽनुशृण्वते नमः

१ Thus B, ग्रामण्य the other MSS.

२ cp XVIII. 18

सते नमो ऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नम इत्यथ वैश्वदेवीं सांग्रहणीं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । यावदेवाचाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता चतुष्टयीष्वप्सु ब्रह्मौदनं श्रपयित्वाभिघार्योद्वासयत्यथैतां प्राचीं निर्णिज्योपस्तीर्य तस्मिन्नेतं रजतं रुक्मं प्रक्षालितमवदधाति । तस्मिन्नेनमसंप्रश्नितोद्धरति सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयाथोपरिष्टात्सुवर्णं रुक्मं प्रक्षालितमवदधात्यथैतानाहृत[1] ऋत्विज[1] उत्तरतो ऽनुदिशमुपवेश्यताननुपूर्वमाचमय्य तेभ्य एनं भूमिं स्पृशन्ननुच्छिन्दन्नि-वोपोहति । ॥ ३ ॥

स आह ब्राह्मणाश्च राजानश्चानेन माश्वेन मेध्येन स्वस्ति समापयाता[2] ब्रह्मज्यताया[3] इति । [4]तं तथेतीतरे प्रत्याहुरनेन त्वामश्वेन मेध्येन स्वस्ति समापयिष्यामो ब्रह्मज्यताया इत्यथ

---

१ मस्त्विजः M, but cp. supra p. 205 5

२ Thus M, समीपयाता the other MSS I am in doubt whether we ought to read समापयाथाब्रह्मज्यताया (समापयाथ conj.); in this case the avagraha should be read before ब्रह्मज्यताया (line 18); but the following अथ ब्रह्मज्यतामश्वे संजानते seems to plead against this reading

३ Thus M; न (or र) ज्यताया all the other MSS.; by this omission of ब्रह्म it is clear that all the MSS., with the exception of M, derive from one common source

४ This passage left out in all the MSS exc M.

ब्रह्मज्यतामस्मै यजमाने । अथैनान्संगृह्णाति सहस्रसमाध्यामत्यवस्यन्तो धारयाध्वा इत्यथैतस्मिन्परिशेषणे रत्ने संतर्थे परिकर्मिणे प्रयच्छति । द्विरपरं प्राश्य प्राश्नन्ति राद्धस्ते ब्रह्मौदन इति[1] । तेभ्यश्चतुरः शतमानिष्कान्ददाति सुवर्णरजतौ च रुक्मावनु ये चतस्राभिषेक्तारस्ते ऽध्वर्युमभिषिञ्चन्ति । स आह ब्राह्मणाय राजानध्वर्युरेतौ द्वौ संवत्सरौ राजा भविष्यति तस्य शुश्रूषध्वं यो हास्य[2] न शुश्रूषिष्यते सर्वस्वं तं[3] ज्यास्यन्तीत्यथाध्वर्युरेतौ द्वौ संवत्सरौ राजा भवति । यजमान इतीतरमाचक्षते । स आह ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति । बधानेतीतरः प्रत्याह देवेभ्यः प्रजापतये तेन राध्नुहीति । ॥ ४ ॥ प्रथमः ॥

अथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयत इमामगृभ्णन्रशनामृतस्येति । तयाश्वमभिदधात्यभिधा असि भुवनमसि यन्तासि धर्तासि सो ऽग्निं वैश्वानरꣳ सप्रथसं गच्छ स्वाहाकृतः पृथिव्यां यन्ता राड् यन्तासि यमनो धर्तासि धरुण इत्येवमेव द्वितीयाꣳ रशनामादत्ते । तथैवमेवाश्वमभिदधाति । ते अश्वस्यानुपृष्ठमनुपृष्ठमन्यतरस्मिन्काले ऽनुगायै च पुत्रो ऽन्नाधेयायै च श्ववन्त्वाभ्याꣳ श्वानमभिधत्तो । ऽथैष पौꣳश्चलेयो भरत्पूर्वया

१ This passage ( cp 207. 12 ) left out in all the MSS. exc. M.

२ च om M

३ तत् Be, त M, UB om. this passage

सव्यं जानु वेष्टयित्वा सैध्रकेण मुसलेन श्वानमनूपतिष्ठते । ऽध्वर्युः पुरस्तात्प्रतिपद्यते सह शतेन तल्पानाꣳ राजपुत्राणां । ब्रह्मा दक्षिणतः सह शतेनाराज्ञामुग्राणाꣳ । होता पश्चात्सह शतेन सूतग्रामणीनामुद्गातोत्तरतः सह शतेन क्षत्तसंग्रहीतृणां । मध्ये ऽश्वः श्वा चाथ दक्षिणꣳ ह्रदमभिप्रयान्ति । द्यौस्ते पृष्ठं क्रमैरत्यक्रमीद्वाज्याक्रान्वाजीति त्रिभिरनुवाकैरा क्रोडादश्वमभिधावयन्ति[1] । तमध्वर्युः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायꣳ राजा वृत्रं वध्यादिति । तस्यानु प्रोक्षणꣳ शतं तल्पा राजपुत्राः प्रोक्षन्ति । ब्रह्मा दक्षिणत उदङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायꣳ राजाप्रतिधृष्यो ऽस्त्विति । तस्यानु प्रोक्षणꣳ शतमराजान उग्राः प्रोक्षन्ति । होता पश्चात्प्राङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायꣳ राजास्यै विशो बहुग्वै बह्वश्वायै बह्वजाविकायै बहुव्रीहियवायै बहुमाषतिलायै बहुहिरण्यायै बहुहस्तिकायै बहुदासपुरुषायै रयिमत्यै पुष्टिमत्यै बहुरायस्पोषायै बहुसर्वधनायै राजास्त्विति । तस्यानु प्रोक्षणꣳ शतꣳ सूतग्रामण्यः[2] प्रोक्षन्त्युद्गातोत्तरतो दक्षिणामुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायꣳ राजा सर्वमायुरेत्विति । तस्यानु प्रोक्षणꣳ शतं क्षत्तसंग्रहीतारः प्रोक्षन्ति । दिग्भ्यो ऽश्वꣳ समुक्षन्तीति ब्राह्मणसंख्येव पौꣳश्चलेयः सꣳभिष्टो भवति यदा लोपमी-

१ ०धापयन्ति M
२ Thus DL, ०ण्य M Bh

वाम्यथ शुनः प्रहरामीत्युपमीवत एष पौंश्चलेयः सैध्रकेण मुसलेन शुनः प्रघ्नन्ति तमत एवानुमन्त्रयते ॥ ५ ॥

यो अर्वन्तं जिघांसति तमभ्यमीति वरुण इति तमश्वस्याधस्पदमुपास्य दक्षिणाप्लावयति परो मर्तः परः श्वेत्यथास्य ब्रह्मा हस्तं गृह्णाति ब्रह्मणो वा यजमानो ऽहं च त्वं च वृत्रहन्त्संबभूव सनिभ्य आ। अरातीवा चिदद्रिवो ऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातय इत्यथैतमैषीकमभ्यूहं मौञ्जीभ्यां रज्जुभ्यामन्तयोरभिदधाति तस्य वेतसशाखो-पसंबद्धा भवति तद्धैतेन शतं तल्प्या राजपुत्रा विविच्यन्ते तेषामनु विवेकमितरे द्वे अन्यतरमन्तं शते गृहीतौ द्वे अन्यतरमन्तं शते अथैनाम्संश्चास्यनेनैषीकेणाभ्यूढेनाभ्यु-दूहन्त[1] इव पुरस्तात्प्रत्यञ्चमूर्मिणाश्वमभिधावयाता[2] इत्यभि-धाव्यमाने[3] ऽध्वर्युर्यजमानं वाचयत्यभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्महिमानं रजांसि। स्वेना हि वृत्रं शवसा जघन्थ न शत्रुरन्तं विविदद्युधा त इत्यथैनं संवेश्य दक्षिणाप्लावयत्यथैतमश्वं प्रदक्षिणमावर्त्य शालामानयति यदक्तो अपो अगमदिन्द्रस्य तनुवं प्रियाम्। एतं स्तोतरेतेन पथा पुनर-

---

१ •भ्यूहंत MSS exc M

२ •भिधावयाता M, •धावदंता the other MSS, if अभिधावयाता is the correct reading we have here a form of the same kind as प्रमापयाता (supra p 207, 12)

३ •भाव्यमाने again M

श्वमावर्तयामि न इति । तमध्वर्युः पूर्वाभि स्तोकीयाभिरन्वेत्याग्नये स्वाहा सोमाय स्वाहेत्येतेनानुवाकेन पुनःपुनरभ्युपाकारं यावदस्य स्तोका उपरमन्त्यथैतमश्वमग्रेण शालां प्राञ्चं स्थापयित्वा प्रपद्यास्य सावित्राणि जुहोत्यग्नये स्वाहा वायवे स्वाहेति सर्वाण्यथ सावित्रमष्टाकपालं प्रातर्निर्वपत्यासाद्य पुरस्ताद्भागाञ्जुहोत्यग्नये[1] स्वाहा स्वाहेन्द्राग्निभ्यामिति पञ्च । पुरस्तात्स्विष्टकृतस्त्रयोऽशीतिमश्वचरितान्युपजुहोतीङ्काराय स्वाहेङ्कृताय स्वाहेत्यसमुदिते इयोदश भद्रावाञ्जुहोत्यायनाय[2] स्वाहा प्रायणाय स्वाहेति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथैतमश्वं प्रदक्षिणमावर्त्य पूर्वया द्वारा शालां प्रपाद्यान्तर्वेदि प्राञ्चं स्थापयित्वाह ॥ ६ ॥

यदा इदमाङ्गः पदेपदे ह वा अश्वस्य मेधस्याध्वर्युर्जुहोतीहैव वयं तद्धोष्यामो यथा नः पदेपदे हुतं भविष्यतीति । तस्य पत्सु हुतीर्जुहोत्यन्नाया वा पर्णारिणीर्वेह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहेत्यथैनं प्राञ्चमुत्क्रामय्य प्रोक्षति प्रजापतये त्वेति पुरस्तादिन्द्राग्निभ्यां त्वेति दक्षिणतो वायवे त्वेति पश्चाद्विश्वेभ्यस्त्वा देवेभ्य इत्युत्तरतो देवेभ्यस्त्वेत्यधस्तात्सर्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टादथैनमतिप्रोक्षेण प्रोक्षति इषे त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यस्त्वा

---

१ ॰भागाञ्जुहो॰ M  २ एवं MSS., but cp. infra 214, 9

विश्वेभ्यस्त्वा भूतेभ्य इत्यथास्य[1] रूपाणि जुहोत्यञ्जेताय स्वाहा-ञ्जिसक्थाय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्येताभ्यामनुवा-काभ्यामथास्योपोत्यादायनामगिर्द्रं विश्वं कर्णमाजपति विभूर्मात्रा प्रभूः पित्राश्वो ऽसि हयो ऽस्यत्यो ऽसि नरो ऽस्यर्वासि सप्ति-रसि वाज्यसि वृषासि नृमणा असि ययुर्नामासीत्यथैनमुपति-ष्ठत आदित्यानां पत्वान्विहीत्यथैनꣳ रशनाभ्यामुन्मृजति भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्यस्त्वा भूतेभ्य इत्यथैनं देवताभ्यः परिददाति देवा आशापाला एतं देवेभ्यो ऽश्वं मेधाय प्रोक्षितं गोपायतेत्यथास्मा एतानपरिमिताञ्छिरमणा-न्हिरण्यानुपावसृजन्त्यथैनमेतानि चत्वारि शतानि गोप्तॄणाम-नुयुञ्जते प्रास्तकवचा वितनवस्था यथा युद्धाय तथा[2] । तेभ्यः पक्वाशनं प्रभौति । ॥ ७ ॥

स आह ब्राह्मणाश्च राजानश्च यत्येमे पक्वाशनमुपावहरि-ष्यन्ते मयाप्रसूता मोपवादिष्टेति । स आह ब्राह्मणाश्च राजानश्च बहिर्देवयजनादाहृतं व्युदचध्वं यत्रायं वडवाभिः संसृज्यते सर्वस्त्वं तं ज्यायन्तीति । ते बहिर्देवयजनादाहृतं व्युदचन्ते[3] । अश्वैस्तैव माण्डेयरथ्यन्तरेय । न वडवाभिर्ना-

---

1 The passage अथास्य up to श्वेताय स्वाहेत्येताभ्यामनुवाकाभ्याम् left out in all exc M

2 Thus M, which, however, omits तथा ; all the other MSS are wholly corrupted

3 Thus M, व्यदचन्ति Be, व्युदंचन्ति U व्युदंचं B

अश्वतरीभिरथैनौ[1] वीणागाथिनावतिप्रस्रक्षीतो[2] । ऽथैव ब्राह्मणो वीणागाथी गायतीत्यददा इत्ययजथा इत्यपचथा इत्येवं मिश्रास्तिस्रो गाथाः । कामचारो ऽस्य । स्नानाद्धैवैनं गोपायन्ति वाहनार्थाय यद्यश्वमुपतपद्विन्दत्याग्नेयो ऽष्टाकपालः सौम्यश्चरुः सावित्रो ऽष्टाकपालः पौष्णश्चरू रौद्रश्चरुरित्यथ यदि नावगच्छत्यग्नये वैश्वानराय द्वादशकपालो मृगाखर इत्यथ यदि वडवाभिः संसृज्यते ऽग्नये ऽंहोमुचे ऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागो । यद्यभिवाति रौद्रो । यदि स्नावः पौष्णो । यद्यप्सु वारुणो । यदि काणः[3] सौर्य । एतासामार्तीनां यां कां[4] च[4] न्येति[4] । सकृत्त्वेव[5] प्रायश्चित्तिरथ यो ऽस्य[6] सदश्वानां सत्तमस्तमुत्सृजत्यथातो रशनाभ्यामेव प्रतिपद्यते । समानं कर्म परिदानात् । ॥ ८ ॥ द्वितीयः ॥

उत्सृज्याश्वं वैश्वदेवान्पशूनालभन्ते । तेषां पशुपुरोडाशाननुवर्तन्ते वैश्वदेवहवींषि । वैश्वदेवहवींषि वैवैषां पशुपुरोडाशा भवन्ति । ताननुवर्तते मध्यमा सावित्री[7] । प्रसिद्धाः[8]

---

१ ॰थैनौ M

२ Thus M; U om. प्र, Be B. ॰वावितिप्रस्रक्षीतो ; the expression occurs also in the gṛhyasūtra I 15

३ काणः M, कारणः the other MSS, but cp Āp xx 7 18

४ कांचिन्येति M

५ Uncertain, सकृत्त्वेव M Be, सृत्वेव B, सकृदेव U

६ अस्य M

७ Thus M, सावित्र्याः BU, सावित्राः Be

८ Instead of प्रसिद्ध॰ or प्रसिद्धाः as the other MSS have it here and infra, M consequently प्रसिद्ध, but cp the expression प्रसिद्धेषि संतिष्ठते ।

पशवः संतिष्ठन्ते । ऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथैतौ वीणागाथिनावतिप्रगृह्णीतो । ऽथैष राजन्यो वीणागाथी गायतीत्यजिना इत्ययुध्यया इत्यमुं संग्राममहन्नित्येवं मिश्राभिस्तो गाथाः । प्रातरग्निहोत्रे हुते ब्राह्मणो वीणागाथी गायति सायमग्निहोत्रे हुते राजन्यस्तावेवमेव संवत्सरं गायतो । ऽथ सावित्रमष्टाकपालं प्रातर्निर्वपत्यासाद्य पुरस्ताद्भागाज्जुहोत्यनुदिते[1] धृतीश्च जुहोति भद्रावाङ्थ[2] जुहोति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ मध्यंदिने सवित्रे प्रसवित्रे पुरोडाशमेकादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथापराह्णे सवित्र आसवित्रे द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते । स एवमेव सावित्रीभिरहरहर्यजमानश्चतुरो मास एति काममिष्ट्या कामं पशुबन्धेन कामं यवाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु सावित्र्येष्ट्वा वरुणप्रघासान्पशूनालभन्ते । ॥ ८ ॥

तेषां पशुपुरोडाशाननुवर्तन्ते वरुणप्रघासहवींषि । वरुणप्रघासहवींषि वैवैषां पशुपुरोडाशा भवन्ति । तानुवर्तते मध्यमा सावित्री । प्रसिद्धाः पशवः संतिष्ठन्ते । ऽथापराह्णे

---

१ •ताद्भागाज्जुहो• M as above, p. 211, 6.

२ Thus M, भद्राधाच the other MSS, the value of the word is •चक्षुदाव•।

सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते । स एवमेव सावित्रीभिरहरहर्यजमानो ऽपराङ्स्वतुरो मास एति काममिष्ट्या कामं पशुबन्धेन कामꣳ श्यामाकाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु पौर्णमास्या उपवसथ आनीकवतं पशुमालभते । तस्य पशुपुरोडाशमनुवर्तत आनीकवतꣳ हविरानीकवतो वैवास्य पशुपुरोडाशो भवति । तमनुवर्तते प्रथमा सावित्री । प्रसिद्धः पशुः संतिष्ठते । ऽथ मध्यंदिने सांतपनं पशुमालभते । तस्य पशुपुरोडाशमनुवर्तते सांतपनꣳ हविः । सांतपनो वैवास्य पशुपुरोडाशो भवति । तमनुवर्तते मध्यमा सावित्री । प्रसिद्धः पशुः संतिष्ठते । ऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ सायं गृहमेधीयेन चरत्यथापररात्रे पूर्णदर्वेण[1] चरत्यथ प्रातः क्रैडिनं पशुमालभते । तस्य पशुपुरोडाशमनुवर्तते क्रैडिनꣳ हविः । क्रैडिनो वैवास्य पशुपुरोडाशो भवति । तमनुवर्तते प्रथमा सावित्री । प्रसिद्धः पशुः संतिष्ठते । ऽथ मध्यंदिने साकमेधान्पशूनालभन्ते[2] । ॥ १० ॥

---

१ पूर्णदर्वेण all, but cp. vol. I, p. 142. 5, Āp has also पूर्णदर्व्ये, but the Sat Br. पूर्णदर्वं, the word occurs again xvii 57 and in the Dvaidha, Bhav. in his comm on the latter has ॰दर्व्यं।

२ ॰लभंते MU Bc, ॰लभते B

तेषां पशुपुरोडाशाननुवर्तन्ते महाहवींष्यपि ' महाह-वींष्यपि वैवैषां पशुपुरोडाशा भवन्ति 'ताननुवर्तते मध्यमा सावित्री ' प्रसिद्धाः पशवः संतिष्ठन्ते ' ऽथापराह्णे पितृयज्ञेन चरति ' पितृयज्ञेन चरित्वा त्रैयम्बकैश्चरति ' त्रैयम्बकैश्चरित्वादित्यं पशुमालभते ' तस्य पशुपुरोडाशमनुवर्तत आदित्यः हविरादित्यो वैवास्य पशुपुरोडाशो भवति ' तमनुवर्तत उत्तमा सावित्री ' प्रसिद्धः पशुः संतिष्ठते ' ऽथ पौर्णमास-वैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते ' ऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते ' स एवमेव सावित्रीभिरहरहर्यजमानो ऽर्धचतुर्थान्मासान् एति काममिष्ट्या कामं पशुबन्धेन कामं सौत्रामण्येनाथा-मावास्याया उपवसथीये ऽहन्साविश्यैष्टिकानि सावित्राणि कृत्वोखाः संभृत्य पशुशीर्षाणि च वायव्यं पशुमालभते ' तस्य प्राजापत्यमूपर उपालम्भ्यो भवति ' तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति ' तावनुवर्तते मध्यमा सावित्री ' प्रसिद्धौ पशू संतिष्ठेते ' ऽथापराह्णे सवित्र आसविते पुरोडाशं द्वादशकपालं निर्वपति ' सा प्रसिद्धेष्टिः संतिष्ठते ' ऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते ' स एवमेव सावित्री-भिरहरहर्यजमान एतमर्धमासमेति काममिष्ट्या कामं पशु-बन्धेनाथ चतुर्षु मासेषु पर्यवेतेषु सावित्र्येष्टिः ॥ ११ ॥

शुनासीरीयान्पशूनालभन्ते[1] ' तेषां पशुपुरोडाशाननुवर्तन्ते शुनासीरीयहवींष्यपि ' शुनासीरीयहवींष्यपि वैवैषां पशु-

---

१ ॰लभते M ॰लभन्ते the other MSS

पुरोडाशा भवन्ति । ताननुवर्तते मध्यमा सावित्री । प्रसिद्धाः पशवः संतिष्ठन्ते । ऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य वेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षण्नि च वर्तयते परि च वपते पुरस्ताद्देवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते चातुर्मास्याः पशवः संतिष्ठन्ते सावित्र्यः ।

॥ १२ ॥ तृतीयः ॥

अथाश्वशालायामश्वं निबध्नन्त्यथैनं तीर्थादानीय पवयित्वा त्रिहविषमग्निदीक्षणीयामिष्टिं निर्वपति । तस्यै तावच्छस्तौदन्ति यावन्ति दीक्षणीयाया । अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङावृत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पूर्वाणि वैश्वदेवानि जुहोति स्वाहाधिमाधीताय स्वाहेत्यथ सप्त प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय स्वाहेत्येकविंशिनीं दीक्षां जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेति । पञ्चाध्वरदीक्षाहुतीर्जुहोति[1] षडग्निदीक्षा एकामृतुदीक्षां भुवो देवानां कर्मणेति । सप्ताहान्येतयेष्ट्या यजत इति । स त्रीणि-त्रीण्येव पूर्वाणि वैश्वदेवानि जुहोत्युत्तरामुत्तरामृतुदीक्षां । द्वे[2] अन्ततः[2] ऋतुदीक्षे[2] जुहोति मयीमू षु शुचामाणमित्येतदे-

---

[1] Thus M, ॰दीक्षाहुतीर्जुहोति the other MSS.

[2] Thus M, वैश्वदेवस्तु॰ De, वैश्वानरस्तु॰ U. वैश्वमस्तु॰ B

वाहर्दीचिते । संवत्सरमुख्यं[1] बिभर्ति । द्वादशोपसदो । ऽथैनमेता यथाम्नातं विशः पर्यवस्यन्ति । नेदीय एनमेते[2] कर्मकृत उपसंगच्छन्ते तक्षाणश्च रथकृतश्च[3] मयस्कृतश्च[3] कुलालाश्च दयाः कर्मारा नखकृतः सप्तमे । ऽथैतांस्तक्ष्णः सन्शास्ति ॥ १३ ॥

एकशतं बैल्वानि दार्वाचितानि छिन्दत[4] तानि प्रवक्षणानि छलाघायं[5] चिनुतैकविंशतिं यूपाञ्छिन्दतैकविंशत्यरत्नीन्[6] राज्जुदालमग्रिष्ठं पौतुद्रवावुपस्थावानौ षड् बैल्वान् षट् खादिरान् षट् पालाशान्याशाश्वमुपशयं पालाशं पालीवतं पालाशं विशालयूपमेकतयानि दारुमयाणि पात्राणि कुरुत षट्त्रिंशतं स्रुवान्दीर्घदण्डान् षट्त्रिंशतमनुवेषान्दीर्घदण्डांश्चत्वारि[7] वाष्टौ वेन्द्राणमानि चतुस्रक्राणि दृढस्रक्राणि यथा समानि यूपाग्रैः स्रुपरिमितान्यारोहणमहानसानि कुरुतैकं वैतसं कटं कुरुताश्वस्योपस्तरणायेत्यथैतान्नखकृतः सन्शास्ति

---

१ •मुख्यं M.

२ एवमेते M

३ •क्षताघामयक्ष• M, •क्षमाघाचक्ष• Be, the other MSS. are defective; cp. infra 219, 1

४ Thus M (we expect छिन्त), छिंदंति the other MSS.

५ Uncertain, छवारघाथा M, छलावघायं BU, छलावघायं Be (pr. m), छलावाय Be (sec. m.?), cp infra xv. 19 (223, 10)

६ Thus M, •त्यरत्नि the other MSS.

७ Thus (only •वेषां•) M, षट्त्रिंशतं दर्वीं दीर्घदंडाय• UBe; B om. these words. What is meant by अनुवेष I do not see. Read perhaps •शतं दर्वीर्दीर्घदण्डाय• ; cp p. 224 8.

स्वरयं कुरुतापरिमितान्मयान्कुरुतेत्यथैतान्मयस्कृतः संशास्त्यपरिमितं चर्मण्यं कुरुतेत्यथैनान्कुलालान्संशास्ति यथैकविंशतिविधायाश्चय एवमिष्टकाः कुरुत तिस्रो महतीः कुम्भीः कुरुत यथाश्वं तूपरं गोमृगमित्येतान्साङ्गान्कल्पयेयुरपरिमिता स्थालीः कुरुतेति[1] ॥ १४ ॥

अथैतान्कालायसकृतः संशास्ति सायकं कुरुत चिन्निमंकल्पोदकं[1] कृपणं कृपाणत्सरुं सुवर्णं सुवर्णत्सरुं चतुरः कालायसाँल्लोहायसत्सरूंश्चतुरो लोहायसान्कालायसत्सरून्षट्त्रिंशतं सुवर्णान्रजतत्सरून्षट्त्रिंशतं रजतान्सुवर्णत्सरूंस्त्रीणि च शतानि त्रयस्त्रिंशतं च सौवर्णानां सूचीनां त्रीणि च शतानि त्रयस्त्रिंशतं च राजतानां त्रीणि च शतानि त्रयस्त्रिंशतं च सीसानामेकं कालायसस्य कमण्डलुं कुरुताश्वतेभन्ये अपणायेत्यथैतान्सुवर्णकृतः संशास्ति परःशतं शतपलान्निष्कान्कुरुत सुवर्णरजते महिष्योः पात्रे कुरुतैकतयानि सौवर्णानि पात्राणि कुरुत यावत्यः पत्न्यस्तावतः[2] सौवर्णानुपशयान्कुरुत रजतग्रन्थीन्राजतान्वा सुवर्णग्रन्थीन्यावत्यः पत्न्यस्तावन्ति[3] सौवर्णानि कुम्बकुरीराणि कुरुत रजतशङ्कूनि राजतानि वा सुवर्णशङ्कूनि यावत्यः पत्न्यस्तावतः[4] सौवर्णान्क-

१ I have simply accepted the reading of M, if it is correct, I do not see; चन्निमनुकपोदक Be B, चन्निमकपादकं U.

२ पत्न्य MSS., but cp. Āp xx. 157 and infra

३ पत्न्य॰ MBU, पत्न्य॰ Be.

४ पत्न्य॰ all

मण्डलूंकुरुत रजतरास्नाभ्राजताभ्वा सुवर्णरास्नानेकꣳ सौवर्णं विधवनं कुरुत त्रीणि सौवर्णानि धवित्राणि कुरुत रजतदण्डानि राजतानि वा सुवर्णदण्डानि सहस्रꣳ सौवर्णान्काचान्कुरुत सहस्रꣳ राजतान्सहस्रꣳ सामुद्रान्हिरण्मयं कशिपु[1] हिरण्मयं[2] षड्वीशꣳ[2] हिरण्मयꣳ[2] संदानमिति[2] ' ॥ १५ ॥

अथैतानखलतः[3] सꣳख्यास्यपरिमितान्यष्टमानि कुरुतेत्यथास्मैतान्यन्यान्युपक्लृप्तानि भवन्ति शतं घृतचर्माणि शतं मधुचर्माणि शतं तण्डुलचर्माणि शतं पृथुकचर्माणि शतं लाजाचर्माणि शतं करम्भचर्माणि शतं धानाचर्माणि शतꣳ सक्तुचर्माणि शतं मसूस्यचर्माणि शतं प्रियङ्गुतण्डुलचर्माणीत्यथास्मैत एकविꣳशतिः प्रतिप्रख्यातारः सꣳशिष्टा भवन्त्यात्मना द्वाविꣳशस्ते[4] जनपदेभ्यः पशूनसमवन्ति[5] तथारूपान्यथारूपाꣳस्ते विदुर्ग्रामेषु ग्राम्यांश्चन्त्यरण्य आरण्यान्गिरिषु गैरेयान्द्वीपेषु नादेयानम्भरेषु वयाꣳसि कुम्भीषु सरीसृपानिति ' ॥ १६ ॥ चतुर्थः ॥

प्रविद्धः[6] संनिवापो ' ऽथ प्रायणीयेन चरति ' प्रायणीयेन चरित्वा पदेन चरति ' पदेन चरित्वाथैभे चर्मन्सहस्रेण

---

१ ०षु' M.

२ Thus M; हिरण्मयं चिंशहिरण्मयं संदामानीति BU Be (pr. m.); हिरण्मयमुपबर्हणं षड्विंश हिरण्मयं संदामानीति Be (sec. m.).

३ Thus M, ०नामखेलतः the other MSS.

४ ०विंशतिस्ते M

५ Thus M; समवति the other MSS.

६ प्रविद्ध M

राजानं क्रीत्वोद्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्याथाह्नं प्रवर्ग्योपसद्भ्यां प्रचरति । द्वादशाह एवैष । एकविꣳशतिविधो ऽग्निर्निधीयते । तस्यैकविꣳशतिश्छदिः सदो भवत्यथाहवनीयं प्रणयत्याहवनीयं प्रणीय सदोहविर्धाने संमिनोति । सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्याहृता यूपमुच्छ्रयति । स्वर्वन्तꣳ रज्जुदाममग्निष्ठमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति । तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्गृहीत्वाथ पशुपुरोडाशं निर्वपति । तमनुवर्तन्ते ऽष्टौ देवसुवाꣳ हवीꣳष्यग्नये गृहपतय इत्येतान्यग्नये[1] गायत्रायेत्येषा च दशहविरिष्टिस्तस्या एता याज्यापुरोनुवाक्या भवन्ति समिद्दिशामाशया नः सुवर्विदित्यन्ताः पशुपुरोडाशाः संतिष्ठन्ते । पशोः संयाजान्तः पशुर्देवसूनामन्त इत्येके । अथ वसतीवरीः परिहृत्य यथाꣳशि विगृह्योपवसन्त्यथातो महाराच एव बुध्यन्ते । समानं कर्मा परिधीनां[2] परिधानात्परिधिमनुवर्तयति कस्त्वा युनक्ति स त्वा युनक्त्विति यथाध्वने पड् दक्षिणार्धे पश्चोत्तरार्धे । अथ राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यद्भिरुदैत्यग्निष्टोमं क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मा पवमानात्पवमानꣳ स्तुवन्त्यावर्ति यदिदं प्रतपत्तं यायावोद्गात-

---

१ अग्नये गृ० इत्येतानि om. M.

२ परिधि M

वैंहिंश्च ते शतपलं चाश्वो न उद्गायतीति । ते ऽश्वस्य बालधिꣳ समन्वारभन्ते ऽग्निष्टे वाजिन्युङ्नु त्वारभे स्वस्ति मा संपारय वायुष्टे वाजिन्युङ्नु त्वारभे स्वस्ति मा संपारयादित्यस्ते वाजिन्युङ्नु त्वारभे स्वस्ति मा संपारयेत्यथोदश्वो ऽभि[1] पवमानꣳ सर्पन्त्युत्तरत एव वडवामज उष्णाष्या परिश्रितो भवति । तं विष्ट्वन्त्यश्वं वडवाः क्रन्दन्त्यश्वो वडवाः क्रन्दति । सो ऽश्वोद्गीथस्तत्पुण्या वाचः संप्रवदन्ति । ॥ १७ ॥

उदगासीदा अयमश्वो मेध्य आयुरुदगासीत्तुभ्यमुदगासीद्ब्रह्मवर्चसमुदगासीदिदमुदगासीदिदमुदगासीदिति पुण्या वाचः संप्रवदन्त्युत्सृजन्ति वडवा । अश्वशालायामश्वं निपद्यन्त्यथाश्वा आसुकुक्षिकमन्नमुपकिरन्त्यथा होद्गातर्धनुष्मतं[2] च ते शतपलं च त्वं न उद्गायेति । तस्य चतुष्टु बहिष्पवमानो[3] । ऽष्टाखष्टास्वाज्यानि[3] । द्वादशो माध्यंदिनः पवमानः । षोडशानि पृष्ठानि । सविꣳश[4] आर्भवः[4] पवमानश्चतुर्विꣳशमग्निष्टोमसाम । तं चतुष्टोम इत्याचक्षते । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वैकादश रशना आदाय यूपमभ्यैति । स्वर्वन्तꣳ रज्जुदा-

---

१ भि all.

२ Thus (आसुकुक्षिकमन्नमु॰) M ; आकुकर्मंडिनमु॰ the other MSS.

३ Thus corrected, cp infra xviii 34 and S'at Br. xiii 5. 1. 1. ॰पवमानोऽष्टा न्याज्यानि, with त्वा above the lacuna, M, ॰पवमानैष्टाष्टा-न्याज्यानि BU, ॰पवमानोऽष्टाष्टान्याज्यानि Be

४ Thus M, सविंशतिरार्भवः BU ; विंशतिरार्भवः Be, cp infra l c.

स्तमग्निष्ठमुत्सृज्यैकादशिनान्पशूनुपाकरोति । तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय । तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यर्वाङ् यज्ञः संक्रामत्विति । तृतीयं दक्षिणानां ददाति । वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदिति । नाचाम्यभिषेको । ऽहीनसंततिं करोत्यृजुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णाति । समानं कर्मा पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति[1] । तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः समानो वनस्पतिः समानः स्विष्टकृन्मैषवान्समानीडा समान्यो दिशो । नाना दिश इत्येके । समानं कर्मा पत्नीसंयाजेभ्य । उपक्राम एवैषो ऽग्निष्टोमश्चतुष्टोमः संतिष्ठते पत्नीसंयाजान्तः । ॥ १८ ॥ पञ्चमः ॥

अथास्यैतानि शतमौक्षाणि चर्माण्युपस्तीर्णानि भवन्त्युत्तरꣳ श्रोणिमुत्तरेण पवमꣳहितान्यथैतेषां शतचर्मणां विꣳशतिं वा चतुर्विꣳशतिं वापोद्धृत्याथैतैरन्यानि संप्रयुञ्जन्त्यथैतेषां दार्वाघितानां विꣳशतिं वा चतुर्विꣳशतिं वा मध्ये ऽग्रेरचायं[2]

१ चरति M

२ Thus M. ; द्रेचाय BU  दूरावय Dc.

छित्वेतराणि[1] संछिद्यसंछिद्यैव संप्रकिरन्ति । तदेतां चतुरश्रां देवपुरमध्यात्ममायातयत्यपि वा पञ्चपुच्छानभिनिरूहति[2] यथा समावन्तौ यूपाग्रैः स्यादथैनाꣳ समुच्छ्रित्य[3] परिश्रयन्ति । तस्योदीचीं द्वारं कुर्वन्ति । तदेतानीन्द्राणमान्युपवर्तयन्ति चत्वार्यनुदिशमवान्तरदिशास्वितराणि यद्यष्टौ भवन्ति । तेषां चत्वारश्चत्वार एकैकमधिरोहन्ति दशान्ये रात्रिकर्मिणो । ऽथैभ्य स्थालीभिराज्यान्यभिहरन्त्यथैमैरन्नान्यथाध्वर्युरादत्ते[4] स्रुवं च दीर्घदण्डं दर्विं[5] च दीर्घदण्डामाददत एकविंशतिं[6] प्रतिप्रस्थातारो दशान्ये रात्रिकर्मिणो । ऽथाध्वर्युः स्रुवेणाज्यस्योपहत्य त्रीणि पूर्वाणि वैश्वदेवानि जुहोति । स्वाहाधिमाधीताय स्वाहेति स्रुवैरेवाज्यानां जुह्वति दत्ते स्वाहेति दर्वैरन्नानामदन्तकाय स्वाहेति । त एवमेवैतमनुवाकं । यदैतस्यानुवाकस्य पारं यन्त्यथैतेनानुवाकेन व्यवदधाति । ॥ १९ ॥

पूर्वा स्तोकीया अथैतमनुवाकं दिश्या । अथैतमनुवाकमुत्तरा स्तोकीया अथैतमनुवाकमेकविꣳशिनीं दीक्षामथैतमनुवाकमृतुदीक्षा अथैतमनुवाकमथस्य सावित्राण्यथैतमनुवाकं ।

---

[1] छित्वा॰ M.

[2] Thus M; ॰पुच्छानामभिनिरूहति Be, ॰पुच्छानामभिनिरूहयति U; ॰पुच्छानामभिनिरूहयति B.

[3] ॰थैनोत्सृ॰ Be

[4] ॰होमैरंनान्य॰ M, but cp supra p. 220, 6.

[5] Thus MBU, दर्वीं Be

[6] Thus M ॰शतिः Be, ॰शति BU

त एवमेवैतानन्नुवाकानेतेनैवानुवाकेन । यद्वैतेषामनुवाकानां पारं यन्त्यथैतानन्नुवाकानुपसंक्रामन्ति वैश्वदेवानि चाश्वाङ्गानि च द्वावश्वरूपाणामोषधीनां च वनस्पतीनां च द्वावपाꣳ संधानानां चाभिधानानां च संज्ञपस्यैक । उक्तः स्वारीहोमस्त एवमेवैतानन्नुवाकानेतेनैवानुवाकेन । यद्वैतेषामनुवाकानां पारं यन्त्यथैतानन्नुवाकानभिनिवर्तन्ते ॥ २० ॥

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेति । त एवमेवैतानन्नुवाकानेतेनैवानुवाकेन पुनःपुनरभ्युपाकारं जुह्वत्यथ वसतीवरीणां परिहरणकाले ऽधिद्रवन्ति । परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायां पुनरेवाधिद्रवन्ति । त एवमेवैतानन्नुवाकानेतेनैवानुवाकेन पुनःपुनरभ्युपाकारं जुह्वतः समाप्नुवन्ति । तानि वा एतान्यश्वस्य सर्वायुपाणीत्याचक्षते । ॥ २१ ॥

समाप्तय इति हैक आहुरेतैर्हि सर्वाꣳ रात्रिं जुह्वत्यथ प्रातरनुवाकमुपाकरिष्यन्ताववद्रवतो ऽध्वर्युश्च प्रतिप्रस्थाता च द्वावन्यावधिद्रवतो रात्रिकर्मिणावथ[1] राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्याङ्गिरुदैत्युक्थ्यं[2] क्रतुमुपैति । समानं कर्मोपाꣳश्वोरुपाꣳश्वꣳश्वꣳ होष्यन्निन्द्राणसमधिद्रुत्य चतस्रः स्रुवाहुतीर्जुहोत्युषसे स्वाहा व्युष्टै स्वाहोदेष्यते स्वाहोद्यते स्वाहेति । प्रसिद्धो ऽभिषवः । समानं

---

१ •कर्मिणावथ M

२ उदैति M, उदेति the other MSS

कर्मान्तर्यामादन्तर्यामꣳ हुत्वाग्निष्ठमग्निमधिद्रुत्य चतस्रः स्रुवाऽऽहुतीर्जुहोत्युदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहेत्यथैतदुदित आदित्य उपरमन्ति रात्रिकर्मिणो ऽथ व्यवच्छिन्दन्ति परिश्रयणानि । निवर्तयन्तीन्द्राणसानि । प्रसिद्धꣳ सुवर्णग्रहैर्ग्रहा गृह्यन्ते । समानं कर्माग्रयणाद्ग्रहादाग्रयणं गृहीत्वा सुवर्णरजताभ्यां द्वौ महिमानौ ग्रहौ गृह्णाति यः प्राणतो य आत्मदा इत्यथोक्थ्यं गृह्णाति । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वा चतुर्विꣳशतिꣳ रशना आदाय यूपानभ्यायन्ति चतस्रश्चतस्र इतरे परिकर्मिणः । सर्वाꣳश् राज्जुदालमग्निष्ठमुत्सृज्य तस्माद्दक्षिणमेव पूर्वं पौतुद्रवमुपस्थावानमुच्छ्रयति ॥ २२ ॥

अथोत्तरं । त्रीन्दक्षिणतो बैल्वाꣳस्त्रीनुत्तरतस्त्रीन्दक्षिणतः खादिराꣳस्त्रीनुत्तरतस्त्रीन्दक्षिणतः पालाशाꣳस्त्रीनुत्तरतो ऽथैतं पालाशमुपशयं दक्षिणतो न्यस्यति तूष्णीꣳ । सर्वेनान्यूपानुत्सृज्याथाध्वर्युरग्निष्ठ उपाकरोत्यश्वं तूपरं गोमृगमित्येताꣳस्त्रीन्प्राजापत्यानथ पर्यङ्ग्यानुपाकरोत्याग्नेन्द्रं[1] कृष्णललाममैन्द्रापौष्णं पौष्णमाग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोमशसक्थौ शितिपृष्ठौ बार्हस्पत्यौ धात्रे पृषोदरꣳ सौर्यं बलक्षं पेत्वमित्यथाध्वर्युरग्निष्ठ एवोपाकरोत्यग्नयेऽनीकवते रोहिताञ्जिरनड्वा-

---

१ °त्याग्नेन्द्र M (sec. m); °त्याग्नेयं M (pr. m) and all the other MSS, but cp infra xv. 26 med (229, 16).

नित्यैकादशांयाध्वर्युरग्निष्ठ एवोपाकरोति सोमाय स्वराज्ञे ऽनोवाहावनड्वाहाविति द्वन्द्विनौ[1] ऽथाध्वर्युरग्निष्ठ एवोपाकरोतीन्द्राय राज्ञे सूकर इत्येकादशारण्यान्सैषाग्निष्ठे पशुषष्टिर्भवत्यथ रोहितो धूम्ररोहित इति दशाष्टादश्विनो ऽनुवाकास्तेषां पूर्वा एव नवतो दक्षिणेषु यूपेषूपस्थापयन्त्युत्तरा नवत उत्तरेष्वाग्नेन्द्रा दक्षिणेषां मुख्या भवन्त्यैन्द्रासूरा उत्तरेषामथ मयुः प्राजापत्य इति दश दश्विनो ऽनुवाकास्तेषां पूर्वा एव पञ्चतो दक्षिणेषु यूपेषूपस्थापयन्त्युत्तराः पञ्चत उत्तरेषु सोमापौष्णा दक्षिणेषां मुख्या भवन्त्यैन्द्रापौष्णा उत्तरेषामथैतस्मिन्नुपद्रष्ये मनसैव यं द्वेष्टि तमुपाकरोति यद्यु वै न द्विष्याद्रुक्ते पशुरित्यनुदिशत्यैतस्मिन्काल आहवनीये स्रुवाहुतिं जुहोत्युपाकृताय स्वाहेति ॥ २३ ॥ षष्ठः ॥

अथैतमश्वमथैण यूपान्स्वरये युनक्ति युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुष इत्यथास्य पृष्ठं मर्ष्ट्यते रोचन्ते रोचना दिवीत्यैवमेवोत्तर योग्यं युनक्ति तस्यैवमेवोत्तरतः[2] प्रष्टिमुपनियुनक्ति तयोः पृष्ठं मर्ष्ट्यते युञ्जन्त्यस्य काम्या हरी

१ चतुर्विंशति पशून् i s o द्वन्द्विन॰ M But TS v 6 21 are enumerated only 22 paśus The reading of M, however, would agree with the statement made infra (1 3), that there are 60 pasus (3 + 11 + 11 + 24 ( 22 acc to the Samhitā ! ) + 11). Should the text of TS 1 c be incomplete ?

२ ॰वोत्तर M but cp supra xi 6 (p. 73, 3) , this passage is left out in all the other MSS

विपक्षसा रथे। ग्रोणा धृष्णू नृवाहसेत्यथ केतुं कृण्वन्नकेतव इति ध्वजं प्रतिमुच्याथ यजमानं वर्मसंनहनीयाभिः संनह्यति जीमूतस्येव भवति प्रतीकमिति चतुर्दशभिर्यथारूपमथ रथमुपतिष्ठते वनस्पते वीड्वङ्गो हि भूया इति तिसृभिरनुष्छन्दसमथ दुन्दुभिमुपश्वासयत्युपश्वासय पृथिवीमुत द्यामिति तिसृभिरनुष्छन्दसमथ दक्षिणꣳ ह्रदमभिप्रयाति द्यौस्ते पृष्ठं क्रमैरत्यक्रमीद्वाज्याक्राम्याजीति त्रिभिरनुवाकैरा क्रोडेभ्यो ऽश्वानभिधावयन्त्यथैतꣳ[1] रथं प्रदक्षिणमावर्त्य शालामानयति यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम्। एतꣳ स्तोतरेतेन पथा पुनरश्वमावर्तयासि न इति तानध्वर्युरुत्तराभि स्तोकीयाभिरन्वैत्यग्नये स्वाहा सोमाय स्वाहेत्येतेनानुवाकेन पुनःपुनरभ्युपाकारं यावदेषाꣳ स्तोका उपरमन्त्यथैतमश्वमग्रेण यूपान् स्वरयाप्रमुच्य सौवर्णेन संदानेन संदित्याध्वर्योरावसथं दियोगं वर्तयन्त्यथ महिषी वावाता परिवृक्तीत्येता अश्वे [2]गन्धान्गणाम्मणीꣳश्चादायाभ्यायन्त्यश्वं तस्य यत्प्राक् क्रोडात्तन्महिष्यभ्यनक्ति वसवस्त्वाञ्जन्तु गायत्रेण छन्दसेति पौतुद्रवेण प्रतिहितानां जायाभिः सहाथ यत्प्रतीचीनं क्रोडादा नाभेस्तद्वावाताभ्यनक्ति रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसेति ॥ २४ ॥

गौल्गुलवेनाराज्ञां जायाभिः सहाथ यत्प्रतीचीनं नाभेरा

---

१ ॰भिधावयन्त्य॰ M (as supra xv. 5 and 6, p 209 7, 210. 12); ॰भिधापयन्त्य॰ the other MSS

२ Thus M, गंधान्वगणानमणी॰ Be, गंधान्वणामणी॰ BU

पुच्छात्तत्परिष्टादभ्यनक्त्यादित्यास्त्वाञ्जन्तु जागतेन छन्दसेति मौञ्जेन[1] सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह । सम्य ये प्राचीनं वक्षसः केशान्तेषु महिषी सहस्रं सौवर्णान्काचानावयति भूरिति प्रतिहितानां जायाभिः सहाथ ये प्रतीचीनं वक्षसः केशान्तेषु वावाता सहस्रं राजतान्काचानावयति भुव इत्युग्राणां जायाभिः सहाथैषा परिवृक्ती वालेषु सहस्रं सामुद्रान्काचानावयति सुवरिति सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह । अथैतं पत्नयो[2] यन्त्यथ महिषी वावाता परिवृक्ती साहानसी[3] दासीत्येता[4] अश्वे मधुमिश्राँल्लाजानुपकिरन्ति ॥ २५ ॥

लाजी३ञ्छाची३न्यशो[5] ममा३[5] यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापत इति । यस्यै ह्यश्वमत्ति तस्यै ह्यार्धुका प्रजा[6] भवतीति[6] विज्ञायते । ऽथैतमश्वं संदानात्प्रमुच्य निर्मन्थ्येनाहृता निर्मन्थ्येन प्रचरति प्रवृत्याभिहुत्याथाध्वर्युरग्निष्ठे नियुनक्त्यश्वं तूपरं गोमृगमित्यथास्य पर्यङ्गान्नियुनक्त्याग्नेयं कृष्णग्रीवमैन्द्रापौष्णं पौष्णमित्येतांस्त्रीँल्ललाट ।

---

१ Thus M, मौञ्जे the other MSS., cp. Āp xx. 15 12 (मौञ्जकेन) ।

२ Thus all (not पत्न्यो) ।

३ Thus M, सहानसी BU, सहानषि Bo

४ Thus M, दासी॰ the other MSS

५ Pluti sign not in MSS

६ M om प्रजा and reads भवंतीति ।

आग्नेयौ कृष्णग्रीवौ ग्रीवासु । त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे । धात्रे पृषोदरमुदरे । सौर्यं बलक्षं पेत्वं पुच्छ इत्यध्वर्युरग्निष्ठ एव नियुनक्त्यग्नये ऽनीकवते रोहिताञ्जिरनड्वानित्यध्वर्युरग्निष्ठ एव नियुनक्ति सोमाय स्वराज्ञे ऽनोवाहावनड्वाहावित्यध्वर्युरग्निष्ठ एव नियुनक्तीन्द्राय राज्ञे सूकर इति । सर्वानेवारण्यानग्नियोजनेनैवानुवर्तयते[1] यांश्च ग्राम्याणां पशूनामुत्स्रक्ष्यन्भवत्यारण्यांश्चाथ दक्षिणान्प्रतिप्रस्थातारो नियुञ्जन्त्यथोत्तरानथैतमश्वं सिक्तेन प्रोक्षेण प्रोक्ष्यातिप्रोक्षेण प्रोक्षति जुष्टं बीजमिति । नित्येनैवेतरान्पशून्थ दक्षिणान्प्रतिप्रस्थातारः प्रोक्षन्त्यथोत्तरानथैतमश्वमदेण यूपान्प्रोक्षणीरवनाययति ॥ २९ ॥

अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोकस्तं जेष्यस्यथावजिघ्र । वायुः पशुरासीदादित्यः पशुरासीदिति । यदि नावजिघ्रति पुनरेवावघ्रापयत्यग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः [2]स ते लोकस्तस्मात्त्वान्तरेष्यामि यदि नावजिघ्रसि । वायुः पशुरासीदादित्यः पशुरासीदिति । यदि नावजिघ्रति पुनरेवावघ्रापयत्यग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः[2] स ते लोकस्तं जेष्यसि यद्यवजिघ्रसि । वायुः पशुरासीदादित्यः

---

1 Thus M, •र्तयति the other MSS

2 ... 2 This passage is found in M only

पराङ्रसीदितीश्वरो ऽवघातोरित्येतस्मिन्काल[1] आहवनीये स्रुवाहुतिं जुहोत्यातव्याय स्वाहेति ॥ २७ ॥ सप्तमः ॥

अथेध्मात्समिधमादद्दान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं परि समिधꣳ शिनष्टि वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति संमृष्टे स्रुग्भ्यासुत्तरमंथामꣳस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य जुह्वाथं[2] तूपरं गोमृगमित्येतान्समनक्त्यथ पर्यङ्ग्यानथेतरानथ दक्षिणानथोत्तरानथ यथायतनꣳ स्रुचौ सादयित्वा प्रवरं प्रवृणीते प्रसिद्धमृत्विजो वृणीते सीदति होता प्रसवमाकाङ्क्षति प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिद्भ्यः प्रेष्येति समिद्धो अञ्जन्कृदरं मतीनामित्येता अश्वस्याप्रियो भवन्ति वषट्कृते जुहोति प्रेष्य प्रेष्येति चतुर्थाष्टमयोः समानयमानो ऽष्टमे सर्वꣳ समानयते परि स्वाहाकृतीभ्यः सꣳस्रावꣳ शिनष्टि दश प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सुवर्णं च सायकं च याचति तौ जुह्वामक्त्वा ताभ्यामश्वं तूपरं गोमृगमित्येतान्समनक्ति कालायसैः पर्यङ्ग्याँल्लोहायसैरितरान्सुवर्णैर्दक्षिणान्रजतैरुत्तरानथ यथायतनꣳ स्रुचौ सादयित्वाह पर्यग्नये क्रियमाणायानुब्रूहीति नित्ये पर्यग्निकरणे ऽनुवर्तयति सेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैः शल्मलिरिति पर्यग्निकृतानामेतेषां पशूनामुत्सृजन्त्यवौ[3] द्वे धेनू

---

[1] Thus (वघातो•) M. only, वघाणे• or वघ्राणे• the other MSS.

[2] जुह्व• om M

[3] Thus M •सृजत्यपि the other MSS

भौमी दिग्भ्यो वडवे द्वे धेनू भौमी वैराजी पुरुषी द्वे[1] धेनू भौमी इन्द्राय राज्ञे सूकर इति सर्वानेवारण्यानथ[2] पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते ' तेषामैन्द्रासूरा उत्तरार्ध्या भवन्त्यथ उपचारतो ' ऽथैनेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते ' पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्तो ' ऽथ याचति बर्हिश्च शतपलं च कृत्तिं चाधीवासं च कशिपु तार्प्यं चेत्युत्तरत एतद्धकलꣳ संस्तीर्णं भवति ' तदस्थाय निहन्यमानायोपास्यति बर्हिश्च शतपलं च कृत्तिं चाधीवासं च कशिपु चेत्येतत्पञ्चतयं ' तार्प्येण संज्ञप्यमानं यामेन साम्ना प्रस्तोतानूपतिष्ठते ' पृथगितरेभ्यस्तान्त इतरान्प्राचो वोदीचो वा निघ्नन्त्यंशवतो मायून्संज्ञपयतेत्युक्ते तेनैव यथेतमेत्य पृषदाज्यावकाश आसते ' ऽथैतौ ब्रह्मोद्यं वदतो होता च ब्रह्मा चान्तरेण यूपं चाहवनीयं च ' दक्षिणतो ब्रह्मा भवत्युत्तरतो होता ' होता ब्रह्माणं पृच्छति ॥ २८ ॥

किꣳ स्विदासीत्पूर्वचित्तिः किꣳ स्विदासीद्बृहद्वयः । किꣳ स्विदासीत्पिशंगिला किꣳ स्विदासीत्पिलिप्पिलेति ' तमितरः प्रत्याह द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः । रात्रिरासीत्पिशंगिलाविरासीत्पिलिप्पिलेति ' तमितरः पृच्छति कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किꣳ स्विद्धिमस्य भेषजं किꣳ स्विदावपनं महदिति ' तमितरः प्रत्याह

---

१ द्वे M

२ अथ om M

सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महदिति ' तमितरः पृच्छति पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् । पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योमेति ' तमितरः प्रत्याह वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् । सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योमेति ' संज्ञप्तान्याहुतीर्जुहोति संज्ञप्ताहुतिं यत्पशवो मायुमकृषतेत्यथ सप्त प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय स्वाहेति ' षट्त्रिंशतमश्वस्तोमीयाञ्जुहोति[1] यदक्रन्दः प्रथमं जायमानो मा नो मित्रो वरुणो अर्यमा ये वाजिनं परिपश्यन्ति पक्वमुत स्मास्य द्रवतस्तुरण्यत इत्येताभ्यायन्ति शमितार उपेतनेति ' पाशेभ्यः पशून्प्रमुच्यमानाननुमन्त्रयतेऽदितिः पाशान्प्रमुमोक्त्वेतानिति ' पृथगविशाखाभिरुपसन्ध्येमां दिशं निरस्यन्त्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशानित्यथैताः पत्नयः सौवर्णैरुदकमण्डलुभिरुदायन्ति ' ता अश्वस्यानुपृष्ठं प्राणानाप्याययन्त्यो[2] यन्त्यनुपूर्वमितरेषां[2] पशूनामथैषा महिषी प्रास्य केशान्वासः परिधाय सौवर्णेन विधवनेन विधुवाना चिरपक्ष्मैरश्वं पर्यत्यवन्ती स्वावन्तीस्त्वावन्तु प्रियं त्वा प्रियाणां वर्षिष्ठमाप्यानां निधीनां त्वा निधिपतिं हवा-

---

१ •स्तोमीयांजुहोति M (cp. Āp xx. 21 11), •स्तोमीयंजु• (cp. T Br III. 9 12 1.) the other MSS

२ Thus M, •प्याययंत्यनुपूर्वं• the other MSS

सह वसो ममेति ' त्रिः परीत्योत्तरतस्तिष्ठति प्रतिहितानां जायाभिः सहैवं वावातायाः जायाभिः सहैवं परिवृक्त्यै सूतग्रामणीनां च क्षत्तृसंग्रहीतॄणां च जायाभिः सह ' यथैतं पत्न्यो यन्त्यथैतमश्वꣳ सर्वैरलङ्कारैरलङ्कृत्य परिश्रयन्ति ' तस्योदीचीं द्वारं कुर्वन्त्यथैतां महिषीꣳ सर्वैरलङ्कारैरलङ्कृत्य ' तां[1] निह्नुवानां[1] गर्हमाणामध्वर्युरुदानयत्यम्बे अम्बाल्यम्बिके न मा नयति कश्चन। ससस्त्यश्वक इति ' सायमुत्तरत उपसंविश्य शिरस्तो वास उपधत्ते[2] ' तावध्वर्युस्तार्प्येण[2] संप्रोर्णोति सुभगे काम्पीलवासिनि सुवर्गे लोके संप्रोर्णुवाथामित्यथैषा महिष्युपस्थे शेफमाधत्त आहमजानि गर्भधमा त्वमजासि गर्भधम्। तौ सह चतुरः पदः संप्रसारयावहा इति ' तामध्वर्युरनुमन्त्रयते वृषा वाꣳ रेतोधा रेतो दधात्विति प्रतिपद्य य आसां कृष्णो लक्ष्मणि सर्दिगृदिं परावधीदित्यातो ' ऽथैषा पत्नी गर्हते ॥ २९ ॥

अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वक इति ' तां यजमानो ऽभिमेथत्यूर्ध्वामेनामुच्छ्रयतादिति ' सा तथैव गर्हते ' तां वावाताभिमेथति यद्धरिणी यवमत्तीति ' सा तथैव गर्हते ' तां परिवृक्त्यभिमेथतीयं यका शकुन्तिकेति ' सा तथैव गर्हते ' ताꣳ सर्वे गणा अभिमेथन्ते[3] माता च ते

---

[1] Thus M, °नेहतीं निरवानां the other MSS.

[2] Thus M; उपधत्ता एता आध्वर्यु° Be; उपतैता अध्वर्यु° B; उपैता अध्वर्यु° U

[3] Thus, ātmanepadam, all

पिता च त इति । नात्र गर्हते । मुहूर्तमश्वमुपसंविश्योपोत्थाय वासः परिधायाद्भिर्मार्जयत आपो हि ष्ठा मयोभुव इति तिसृभिरनुच्छन्दसं दधिक्राव्णो अकारिषमिति चतुर्थीꣳ । सर्व एव सुरभिमतीमृचं जपन्ति ये यज्ञे ऽपूतं[1] वदन्ति । नयन्ति पत्नीं । अत्रच्छिन्दन्ति परिश्रयणमश्वस्यालङ्करणमध्वर्यो रावसयꣳ हरन्त्यथैतस्मिन्कल्मलिश्रचं आशुपिष्टानि संयुत्य तैरनुलोममश्वं प्रलिम्पन्त्यथ[2] महिषी वावाता परिवृक्तीत्येता असौ गणान्सूचीरादायाभ्यायन्त्यश्वं । तस्य यत्प्राक् क्रोडात्तस्मिन्महिषी सौवर्णाभिः सूचीभिरसिपथान्कल्पयन्त्येति गायत्री त्रिष्टुब् द्विपदा या चतुष्पदेति द्वाभ्यां प्रतिहितानां जायाभिः सहाथ यत्प्रतीचीनं क्रोडादा नाभेस्तस्मिन्वावाता राजताभिरुत्तराभ्यां द्वाभ्यामपराभ्यां जायाभिः सहाथ यत्प्रतीचीनं नाभेरा पुच्छात्तस्मिन्परिवृक्ती सीसाभिरुत्तराभ्यां द्वाभ्याꣳ सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह । अथैतं पत्नयो यन्त्यध्वर्यो रावसयꣳ सूचीर्हरन्त्यथ सुवर्णं च सायकं च याचति । ताभ्यामश्वस्य क्रोडमापिनष्टीत्यमश्वं[3] विशासतेति[3] । कस्त्वा छ्यति कस्त्वा विशास्तीत्येतत्षडृचं यजमानं वाचयति । यदैतस्य सूक्तस्य पारमेत्यथाध्वर्युरश्वस्य क्रोडात्पिशितमुत्पिनष्टी-

---

१ The avagraha added by me

२ ०लिंपत्यथ MB, ०लिपत्यथ Be U

३ Thus M, क्रोडमापिनह्यश्वमश्वलपिरवानयेति Be, क्रोडमापिनविर्धमश्व (चं) त्वं पिशासयेति BU.

त्यमर्ध[1] विश्रमतेत्याश्रमिति[1] । नाश्वस्य वपा भवति । चन्द्रमिव मेदः परिहृत्य[2] माश्वस्य वपा । वपा[3] तूपरस्यैवं गोमृगस्य । कालायसैः पर्यङ्ग्याणां लोहितायसैरितरेषाꣳ सुवर्णैर्दक्षिणेषाꣳ रजतैरुत्तरेषाम् । ॥ ३० ॥

अश्वस्यैवाध्वर्युर्वपया प्रथमया प्रतिपद्यते । ऽनूचीरितरा आहरन्त्यश्वस्यैव वपायै प्रतितप्यमानायै बर्हिषो ऽपसुपास्य-त्युपेतरा यच्छन्त्युत्तरतो ऽश्वस्य तूपरस्य गोमृगस्येति वपाः श्रपयन्ति दक्षिणत इतरेषां पशूनामश्वस्यैव वपाꣳ स्रुवाहुत्या-भिजुहोत्युपेतरा यच्छन्त्यथ [4]स्वाहाकृतिभिःप्रचरित्वा सꣳस्रा-वेण पृषदाज्यमभिघार्याश्वस्यैव वपामभिघारयत्युपेतरा यच्छ-न्त्यथ पुरस्तात्स्वाहाकृतिꣳ[4] स्रुवाहुतिꣳ हुत्वा सुवर्णेन महि-मानं जुहोति तस्य ते द्यौर्महिमेत्यथोपस्तीर्य द्विः स्रुवेणाश्व-स्यैव[5] वपाꣳ समवद्यन्नाह प्रजापतय इत्युपाꣳशु च्छगस्य छागस्योस्रस्य वपानां मेदसो ऽवदीयमानस्यानुब्रूहीत्युच्चैर्यावतीः[6] स्रुक्संभवत्यथेतराः पाश्या वेडसूनेन वोपोद्यच्छन्ते । द्विरभि-

---

१ Thus (without, however, the pluti sign) M ; •तद्दुहपिनहि इत्य-मर्धं विश्रामवे इत्यामिति Be, and thus also BU (but र्धं i s o. इत्य) ।

२ •वत्त MSS exc M

३ वपां M

४ ४ left out in all the MSS exc. M.

५ यव om M

६ •वदीयमानामाम्नु• M, cp. supra xı 5 (p 70, 11).— यावती M, यावति the other MSS cf supra l c.

धारयत्यथाक्रम्याश्राव्याह प्रजापतय इत्युपांꣳशु छागस्य छागस्योस्रस्य वपा[1]मेदः प्रस्थितं प्रेष्येत्युच्चैर्वषट्कृते वपा[2] जुहोत्यथोपरिष्टाद्व्रजतेन महिमानं जुहोति तस्य ते पृथिवी महिमेत्यथ पर्यङ्ग्याणां वपाभिश्चरत्यथेतरेषामथ दक्षिणेषां प्रतिप्रस्थातारो वपाभिश्चरन्त्यथोत्तरेषां । याꣳश्च ग्राम्याणां पशूनामुदस्राक्षीदारण्याꣳश्च स्रुवाहुत्यस्तेषां वपाभ्यः प्रतिजुहोत्युपांꣳश्वेतेषां पशुजातानां वपाभिश्चरन्ति प्राजापत्यानाꣳ सावित्राणाꣳ सारस्वतानां पौष्णानां यामानां पितृदेवतानां द्यावापृथिव्यानां वायव्यानाꣳ सौर्याणां वैश्वकर्मणानामित्यथोपरिष्टात्स्वाहाकृतिꣳ स्रुवाहुतिꣳ हुत्वा वपाश्रपणीरनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते । ऽथ पशून्विशास्ति[3] शमितरित्याह माध्वस्य स्रोमापिकृतीर्माध्वस्यास्त्रि[4] सꣳशारीर्येयाङ्गसेनं[4] विकृत्य शामित्रे कुम्भ्याꣳ समवधमयतादेवं तूपरमेवं गोमृगमथ दक्षिणमश्वशफं गोमृगकण्ठमिति शामित्रे निष्पचतादयस्मयेन कमण्डलुनाश्वतेजनीꣳ श्रपयतादित्यथ सावित्रꣳ हुत्वा प्रसर्पन्ति प्रातःसवनाय । तद्व्रजुधा संतिष्ठते । ॥ ३१ ॥

अष्टमः ॥

---

१ वपा M , वपां B Be U

२ वपां MB , वपा Be

३ Thus M , शंशास्ति Be B , मशास्ति U.

४ Thus M , स्रोमविकृतीर्मास्याक्षि शंशारायथा॰ B , स्रोमाविकृतीर्मास्याक्षि शंशारायथा॰ U , स्रोमाविकृततो etc (as U) Be

अथ सावित्रꣳ हुत्वा प्रसर्पन्ति माध्यंदिनाय सवनाय। प्रसिद्धो ऽभिषवः। प्रसिद्धं ग्रहाः गृह्यन्ते। समानं कर्मा दाक्षिणेभ्यो। दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यर्वाङ् यज्ञः संक्रामत्विति। कामं दक्षिणानां[1] ददाति। वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदिति। प्रसिद्धो ऽन्यभिषेको[2]। ऽहीनसंततिं करोत्यनुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते। ऽथ सावित्रꣳ हुत्वा प्रसर्पन्ति तृतीयसवनाय। प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृहीत्वोक्थ्यं गृह्णाति। समानं कर्मा पवमानात्पवमानेन चरित्वाथैतान्पशूनालभत्याग्नेयं तूपरं गोमृगमित्यथ पर्यग्निकृतानथैतरानथ दक्षिणानथोत्तरानुत्तरतो ऽग्नेस्तूपरस्य गोमृगस्येति हविरुपसादयन्ति दक्षिणत इतरेषां पशूनामथ वैतसे कटे ऽग्नेस्[3] हृदयं निधाय सुवर्णेन च सायकेन च तस्याये ऽवद्यन्नाह ॥ ३२ ॥

मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीत्येकादशावदानान्यवद्यत्येवं तूपरस्यैवं गोमृगस्य। कालायसैः पर्यग्निकृतानां लोहायसैरितरेषाꣳ सुवर्णैर्दक्षिणेषाꣳ रजतैरुत्तरेषां। नाग्नेय[4] तूपरस्य गोमृगस्येति स्विष्टकृते ऽवद्यत्यवद्यन्तीतरेषां पशूनां।

---

1 M ins इति after कामं and leaves a blank for two akṣaras before दक्षि॰।

2 Thus M, भिषवो the other MSS.

3 ऽग्नꣳ M.

4 Thus M, नाग्नेय the other MSS.

नाम्नस्य[1] तूपरस्य गोमृगस्येतीडामवद्यत्यवद्यन्तीतरेषां पशूनामथैतमश्वं[2] वैतसे कटे यथाङ्गं[3] चिनोति। पुरस्तात्प्रत्यञ्चं तूपरमाधातयति। पश्चात्प्राचीनं गोमृगमथ शुल्पश्रतावाद्दान आह प्रजापतय इत्युपाꣳशु हयस्य छागस्योस्रस्य हविषोऽनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह प्रजापतय इत्युपाꣳशु हयस्य छागस्योस्रस्य हविः प्रस्थितं प्रेष्येत्युच्चैर्वषट्कृते नान्वहैव कटेनाग्नावनुप्रहरति ॥ ३३ ॥

यौस्ते पृष्ठं कर्मैरत्यकर्मौद्गात्र्याक्रान्वाजीति त्रिभिरनुवाकैरथ पर्यङ्ग्याणाꣳ हविर्भिश्चरत्यथैतरेषामथ दक्षिणेषां प्रतिप्रस्थातारो हविर्भिश्चरन्त्यथोत्तरेषां। याꣳश्च ग्राम्याणां पशूनामुदस्थाचौदारण्याꣳश्च स्रुवाहुत्यस्तेषाꣳ हविर्भ्यः प्रतिजुहोत्युपाꣳश्चैतेषां पशुजातानाꣳ हविर्भिश्चरन्तीत्युक्तमेतदथ पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजत्यथ वनस्पतिना चरत्यथ पुरस्तात्स्विष्टकृतो गोमृगकण्ठेन प्रथमामश्वतेजनीमुपजुहोत्यथ स्विष्टकृता चरत्यैतस्मिन्काल आहवनीये स्रुवाहुतिं जुहोति कृताय स्वाहेति ॥ ३४ ॥

अथैतं प्रसेकमग्नावायातयति दक्षिणतो वोदञ्चं पश्चाद्वा प्राञ्चं। तस्य स्रुगिव पूर्वार्धो[4] भवत्येवमेव मध्यं। चमस इव

---

[1] Thus M Be, नानाम्नस्य UB

[2] MSS exc M ins here पशूनां।

[3] Thus M, यथार्थं Be, यथाश्व BU.

[4] पूर्वार्धं M, पूर्वार्धौ the other MSS, but cp supra x. 51 (p 56, 9)

बुध्नसंस्मिंश्चतुर[1] उपस्तृणान, आहाममन्तः संततमानय स्तोगान्निगदिष्यामीति । स यत्र धाराग्निं प्राप्नोति तत्प्रतिपद्यते स्तोगान्दंष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरिति चतुर्दशानुवाकान्मया-माय स्वाहेति पञ्चदशमेव द्वे आहुती जुहोतीक्षुवर्दाय स्वाहा वलिवर्दाय स्वाहेति षट्त्रिंशतमश्वस्तोमीयांस्तिस्रो[2] द्विपदा इमा नु कं भुवना सीषधेमापो हि ष्ठा मयोभुव इति यौवैतं प्रत्येकमग्नावनुप्रहरत्यथैनं संस्रावेणाभिजुहोति । समानं कर्मानूयाजेभ्यो । ऽथ पुरस्तादुत्तमस्यानूयाजस्याश्वशफेनाश्वतेजनीमुपजुहोति[3] । समानं कर्म पत्नीसंयाजेभ्यो । ऽथ पुरस्तादुत्तमस्य पत्नीसंयाजस्यायस्मयेन कमण्डलुनाश्वतेजनीमुपजुहोत्यृजुधेकविंश उक्थ्यः संतिष्ठते पत्नीसंयाजान्तो । ऽथ वसतीवरीः परिहृत्य पयांसि विस्रिथ्योपवसन्ति । ॥ ३५ ॥ नवमः ॥

अथातो महारात्र एव बुध्यन्ते । प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यङ्गिरसामेकातिरात्र[4] क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्माश्विनाद्द्वादशिनं ग्रहं गृहीत्वैकादश रशना आदाय यूपमभ्यैति । स्वर्वन्तं

---

1. बुध्नस्मि॰ all, but cp l c.
2. ॰स्तोमियास्तिस्रो MSS.
3. अश्वस्य 180 अश्व॰ (before तेजनीम्) all the MSS exc M.
4. Thus M, the other MSS are more or less defective

राण्मुदालमग्निष्टमुत्सृज्यैकादश प्रातर्गव्यान्प्राजापत्यान्पशूनुपाकरोति । तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय । तद्वृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्म दाक्षिणेभ्यो । दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यर्वाङ् यज्ञः संक्रामत्वित्यथ श्रेष्ठं दक्षिणानां ददाति । वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदित्युत्सन्नो ऽप्यभिषेको । नात्राहीनसंततिं करोत्यृजुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णात्यथोक्थ्यं गृह्णाति । समानं कर्म पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति । तेषाꣳ समानी मनोता समानी देवता समानः प्रत्यभिमर्शनः समानो वसाहोमः समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशः । समानं कर्म पत्नीसंयाजेभ्यः । पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याभूतीश्चानुभूतीश्च जुहोत्या मे गृहा भवन्त्वग्निना तपो ऽन्वभवदित्येताभ्यामनुवाकाभ्यामथ भूताभव्यौ होमौ जुहोति भूताय स्वाहा भविष्यते स्वाहेत्यथाध्वरिकाणि समिष्टयजूꣳषि हुत्वा दशाग्निकानुपजुहोति । समानं कर्मावभृथादथैतस्मिन्नवभृथे द्वितीयामवभृथाहुतिꣳ हुत्वा दश वारुणानुपजुहोति नमो राज्ञे नमो वरुणायेत्यथ मृत्यवे स्वाहा मृत्यवे स्वाहेति नवतिमाहुतीर्जुहोति प्रयामाय स्वाहायामाय स्वाहेत्येकादश । शतायुर्वै पुरुषः

शतवीर्य आत्मैकशतो यावानेव पुरुषस्तस्मान्मृत्युमवयजत इति ब्राह्मणम् ॥ ३६ ॥

अथैष आत्रेयो विद्रुतः शुक्लो विक्लिधस्तिलकवान्पिङ्गाक्षः[1] खलतिर्विकटः कुनखी कुब्जः शिपिविष्टो नग्न उपमज्जति[2] तस्य मूर्ध्नि जुहोति जुम्बकाय स्वाहेत्यथास्मा एतत्कृतं विपथं ददात्यथैनमिषुजितात्प्रधमन्ति[3] मा मे राष्ट्रे वात्सीरिति[3] प्रसिद्धो ऽवभृथ उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति तस्यै सौरीर्नव श्वेता वशा इत्युपालम्भ्या भवन्ति तासां प्रसिद्धं वपाभिश्चरित्वाग्रेण गार्हपत्यं पात्नीवतमुच्छ्रित्य तस्मिन्कृगलं कल्माषं किकिदीविं विदीगयमिति त्वाष्ट्रान्पशूनुपाकरोति तान्पर्यग्निकृतानुत्सृज्याज्येन संस्थां करोत्यथ पशुपुरोडाशान्निर्वपति पशुपुरोडाशौ वाथ पुरस्तात्पशुपुरोडाशस्विष्टकृतो दश सव्यान्युपजुहोति नमो राज्ञे नमो वरु-

---

१ तिलकावान्पिंगलाक्षः M.

२ Thus M; उपविशति the other MSS

३ Wholly uncertain ददात्यथैनमिषुजिताप्रधमंति मा मे राष्ट्रे वात्सीरिति M, ददात्यैनामिषु(षि)ताप्रधमंचिमात्रे राष्ट्रेष्वेवाप्यत्सीरिति B Be (pr. m.); ददात्येनामिषुषिताप्रधमंचिमात्रे राष्ट्रेष्वेवाप्यवात्सीरिति Be (sec. m), ददात्येनामिषुषिताप्र॰ etc (as B) U, this is certain, that प्रधमति is a third person of a verb, I have conjectured प्रधमन्ति (cp. Sānkh. śrs xvi 18, 20 निःधमन्ति), then the foregoing must be an ablative; but whether इषुजितात् is the correct reading I do not see.

णायेत्यथ पुरस्तात्पशुस्विष्टकृतो दश[१] गव्यान्युपजुहोति मयोभूर्वातो अभिवातूस्रा इति । प्रसिद्धं पशवः संतिष्ठन्ते । ऽथोद्वसानीययेष्ट्वाग्रेणाहवनीयं विशालयूपमुच्छ्रित्य तस्मिन्नेतान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमाश्विनमिति । तेषां प्रसिद्धं वपाभिश्चरित्वा पशुपुरोडाशान्निर्वपति । ताननुवर्तन्ते ऽष्टौ देवसुवाꣳ हवीꣳष्यग्नये ऽꣳहोमुचे ऽष्टाकपाल इत्येषा च; दशहविरिष्टिसंस्था एता याज्यापुरोनुवाक्या भवन्ति ॥ ३७ ॥

अग्नेर्मन्वे प्रथमस्य प्रचेतस इत्यथ पुरस्तात्पशुपुरोडाशस्विष्टकृतो दश ब्रह्मवर्चसान्युपजुहोत्या ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्यथ पुरस्तात्पशुस्विष्टकृतो दश संनतिहोमानुपजुहोत्यग्नये समनमत्पृथिव्यै समनमदिति । प्रसिद्धं पशवः संतिष्ठन्ते । ऽथैतैरन्वहं द्वादशभिर्ब्रह्मौदनैश्चरति । तेषामुक्तं चरणं यथामुत्रैकस्यान्यच[२] रशनाभ्यामत्रैभ्य एतान्परःशतं शतपलान्निष्कान्ददाति । सुवर्णरजते महिम्नोः पात्रे ददात्येकतयानि[३] सौवर्णानि पात्राणि ददाति हिरण्मयं कशिपु[४]

---

१ om M

२ Thus M (for अमुत्र cp. supra xv 4), यथामुत्रैकस्यान्यच the other MSS., as all the MSS. contain a case form of एक, I did not venture to change यथामुत्रैकस्यान्यत्र, i.e., yathā amutra evam, a. r.

३ Thus M, °त्येतानि the other MSS.

४ °पु° or °पुं° MU.

हिरण्मयं[1] पड्वीशं[1] हिरण्मयं संदानमित्यथ[1] वीणागाथिभ्यां शतं विपथौ ददात्यथर्तुपशुभिर्यजत[2] ऋतुपर्यायं वा समानेषु वान्यायतनेषु पिशङ्गास्त्रयो वासन्ताः सारङ्गास्त्रयो ग्रैष्माः पृषन्तस्त्रयो वार्षिकाः पृश्नयस्त्रयः शारदाः पृश्निसक्थास्त्रयो हैमन्तिका अवलिप्तास्त्रयः शैशिराः संवत्सराय निवक्षस इत्यथ देविकाहविर्भिर्यजते। अथ त्रैधातवीयया यजते। अथ सौत्रामण्या यजते। संतिष्ठते ऽश्वमेधस्त्रिभिः संवत्सरैः। संतिष्ठते ऽश्वमेधः संतिष्ठते ऽश्वमेधः। ॥ ३८ ॥ दशमः ॥

॥ इति पञ्चदशः प्रश्नः ॥

---

१ Left out in the MSS. exc. M.

२ पशुभि॰ MSS. exc. M.

३ यजत M, यजेत the other MSS.

द्वादशाहेन यक्ष्यमाणो भवत्येको वा बहवो[1] वैतो[1] ह्येको[1] दक्षिणावता यजते । स[2] यद्येको[1] यदि बहवो ऽमावास्याया एव यज्ञेनोपरिष्टाद्दीक्षन्ते । ते[1] गृहपतेररण्योः संजानते प्रथमा । ते यदि गृहपतेररण्योः संजानते मथित्वा गार्हपत्यमाहवनीयमुद्धरन्ति[3] । ग्रामाद्धृतश्रपणमाहरन्ति । यद्यु वै पृथक् संजानते गृहपतिरेव प्रथमो मन्थते[4] । तदेवेतरे[5] पर्युपविश्य मथित्वामथित्वैव गार्हपत्यꣳ संनिवपन्ति । तस्मादेकवद्धृतादाहवनीयमुद्धरन्ति । ग्रामाद्धृतश्रपणानाहृत्य संनिवपन्त्यथ यदि पश्चादपर[6] आगच्छति मथित्वैव गार्हपत्ये ऽधि निवपत्याहवनीये ऽधि ग्रामाद्धृतश्रपणमाहृत्याप्यर्जतुपो[8] एवं[8] पूर्वेषु कर्मसु क्रयन्ते । ऽथातः पवनस्यैव मीमांसा । गृहपतिमेवाध्वर्युः प्रथमं पवयत्यथ होतारमथ ब्रह्माणमथोद्गातारं प्रतिप्रस्थाताध्वर्युं पवयति प्रशास्तारं प्रस्तोतारं ब्राह्मणाच्छꣳसिनमाग्नीध्रः प्रतिप्रस्थातारं पवयत्यच्छावाकं नेष्टारं पोतारꣳ

१ Thus M only (regarding बहो हि cp. infra xvi 13 : 260, 5). बहवो वा ह्येको all the other MSS

२ Given only by M

३ Only in M

४ Thus M only ; ०हरन्ति all the other MSS.

५ मन्थति M

६ तदेवे० all the MSS exc M.

७ पश्चापर M

८ Thus M ; ०माहृत्याप्यर्जतुपो० T Bo H D, ०माहृत्यर्जियत्वकर्तुपो० B Be, ०माहृत्यर्जियत्वैव U

सदस्यमुन्नेताग्नीध्रं पवयति ग्रावस्तुतꣳ सुब्रह्मण्यं प्रतिहर्तारमात्मानमन्ततस्ते चेद्ब्रूयुरध्वर्युर्वाव[1] सर्वस्य पवयिता स नः सर्वान्पवयत्विति स एवैनान्सर्वान्पवयत्यपि वान्योऽन्यं पवयन्ति[2] यथाधीयन्तो भवन्ति । ॥ १ ॥

तेषां प्रसिद्धा दीक्षणीयेष्टिस्तायते । सकृदाश्राविते स यत्राह भरतवदिति तद्गृहपतेरेवार्षेयं प्रथमं वृणीते[3] ऽथ होतुरथात्मनो ऽथ ब्रह्मणो ऽथोद्गातुरथ प्रतिप्रस्थातुरथ प्रशास्तुरथ ब्राह्मणाच्छꣳसिनो ऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुर्ग्रावस्तुत उन्नेतुः सुब्रह्मण्यस्य प्रतिहर्तुरन्ततो । ब्रह्मण्वदिति समानं । ते[4] सर्वे[4] एव[4] दीक्षाकृतिषु समन्वारभन्ते । गृहपतिमेवाध्वर्युरुच्चैः कृष्णाजिने वाचयति । तदेवेतरे[5] ऽनुनिक्रामन्त्यपि[6] वान्योऽन्यं वाचयन्ति यथाधीयन्तो भवन्ति । ते यथोत्साहं व्रतदुघमुपयन्त्येकैका[7] वा बह्वीर्वा । तेषां यथैव प्रवरानुपूर्व्येणैव[8] धर्मोच्छिष्टे[9] ऽति-

---

१ Thus MTD Be 11 U (pr. m.); वा (i. e. o वाव) B Be U (sec. m).

२ Thus M, sing the other MSS

३ प्रवृणीते M.

४ Thus M, ते सर्वे (without एव) T Be 11 U D; समानमन्ततः सर्वे एव B Be.

५ Thus MUD; तदेवेतरे the other MSS.

६ Thus M; ऽनुनिष्क्राम॰ all the other MSS.

७ Thus (व्रतदुघमु॰) Be 11 DUT; ॰दुघमुप॰ B, ॰दुघ उप॰ M.

८ एव om. M

९ Thus M B Be, ॰च्छिष्टेषु॰ T Be 11 DU

प्राश्नभक्षेषु[1] षोडशिनि षष्ठ्यामुपसद्युत्तरवेदिषु संनिवपन्ति यद्यनग्निचित्यो भवत्यथ यदि साग्निचित्यः प्रथमायामेवोपसद्युत्तरवेदिषु संनिवपन्ति ॥ २०॥

तेषां द्वादश दीक्षा द्वादशोपसदो द्वादशाहं प्रसुता[2] न द्वादशाहेऽग्निं चिन्वीतेत्येक आहुरस्मिंस्त उ हैके प्रसिद्धेन कर्मणोपवसथाद्यन्ति तेषां ज्योतिष्टोमो वैश्वानरः प्रायणीयो ऽतिरात्रस्तायते स यत्र माध्यंदिने सवने तृतीयसवनाय वसतीवरीभ्यो ऽवनयति तद्वसतीवरीकलशे यावन्मात्रीरतिशिष्यातीस्र्[3] हुत्वा छायायै चातपतश्च सन्धौ गृह्णाति हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माꣳ आविवासति हविष्माꣳ अस्तु सूर्य इत्यपाहीनसंततिरेतामेव पुनःपुनश्चोदयियाम[4] इति वदन्तः सो ऽत्र वैव[5] यज्ञस्य पुनरालम्भं जपति यज्ञायज्ञियस्य[6] वा स्तोत्रे शंयुवाके वा तेषां ज्योतिष्टोमो वैश्वानरः प्रायणीयो ऽतिरात्रः संतिष्ठते तस्मिन्संꣳ-

१ Thus M T Be 11 DU, ॰भक्षे B Be.

२ प्रसुतः all the MSS exc M, cp. infra xvi. 12 init.

३ Thus (यावन्मात्रीर॰) MT Be 11, ॰मात्रीम॰ D; ॰मात्रम॰ B Be U.— All the MSS. exc M अवशिष्य।

४ Thus M B Be; ॰याम्ह T Be 11 DU.

५ Thus M in accordance with the Dvaidha, सोवैव T Be 11 U; सोवसै B Be, सोचैव D

६ ॰यज्ञियस्य T Be 11 DU, ॰यज्ञीयस्य MB Be

स्थिते विवर्तयन्ति[१] परिधीननुप्रहरन्ति[१] प्रस्तरं । पत्नीसंयाजान्तो । ऽतिप्रैषेण ब्रह्मा वाचं यच्छति । परिहितासु वसतीवरीष्वाहूतायाꣳ सुब्रह्मण्यायां ब्रह्मा वाचं विसृजते । प्रतिपद्यते[२] दिवा प्रातरनुवाकेनाक्ता संक्रामन्होता छन्दाꣳस्यन्वाह निमील्याध्वर्युरुपाꣳशुं जुहोति राज्यै रूपमिति वदन्नास्तायते । त्रिवृदग्निष्टोमो रथंतरसामा । माहेन्द्रस्य स्तोत्रे रथो युक्तो ऽत्याधावति[३] । रथशब्देन माहेन्द्रस्य स्तोत्रमुपाकरोत्येतावदेवैतदहः शिल्पं क्रियते । ऽहीनसंततिं करोत्यथ श्वो भूते तायते पञ्चदश उक्थ्यो बृहत्सामा । दुन्दुभिनैतदहरध्वर्युर्माहेन्द्रस्य[४] स्तोत्रमुपाकरोत्येतावदेवैतदहः शिल्पं क्रियते । ऽहीनसंततिं करोत्यथ श्वो भूते तायते सप्तदश उक्थ्यो वैरूपसामाघाटेनैतदहरध्वर्युर्माहेन्द्रस्य स्तोत्रमुपाकरोत्येतावदेवैतदहः शिल्पं क्रियते । ऽहीनसंततिं करोत्यथ श्वो भूते तायत एकविꣳश उक्थ्यो वैराजसामाग्रियश्[५] षोडशी[५] षातियाह्यावनतियाह्यः[५] षोडशीत्येक आहुरेकविꣳशमेतदहर्न्यूङ्ख्यं[६] भवति[६] । विराजां वा

---

१ Plural MT Be H DU and Dvaidha; singular B Be.

२ Plural M.

३ Thus M; धावति Keś., यावति Be TD, भवति B Be.

४ Thus M, दुन्दुभिशब्देनैतद० the other MSS.

५ Thus M only, ०ग्रेयश्च षोडशी च नातियाह्यः Be; ०ग्रेयश्च षोडशिनातियाह्यः B, ०ग्रेयं च षोडशिनो नातियाह्याय नातियाह्यः Bo H T (the latter only षोडशीति) UD.

६ Thus M, न्यूङ्खयन्ति all the other MSS

प्रतिपत्सु न्यूङ्खयन्ति प्रस्ते[1] वेत्येतदेकमथापरं[2] प्रातरनुवाके न्यूङ्खयन्ति हविष्कृत्युभयेषु प्रस्थितेषु माहेन्द्रस्याश्रावणे । न तत ऊर्ध्वं न्यूङ्खयन्तीत्यरणीहस्त[3] एतदहरध्वर्युर्माहेन्द्रस्य । स्तोत्रमुपाकरोति । तदुद्गातुर्दक्षिण[4] ऊरौ मन्थति[5] । तं आतꣳ सर्व एवाभिहिङ्कुर्वन्ति । ॥ ३ ॥

तस्य मीमाꣳसा । गार्हपत्ये ऽनुप्रहरेत्प्रतिष्ठाकामानामाग्नीध्रे[6] प्रजाकामानाꣳ[7] । शामित्रे पशुकामानामाहवनीये स्वर्गकामानामित्यनाहृत्य तदाहवनीय[8] एवानुप्रहरति भवतं नः समनसाविति । प्रहृत्याभिजुहोत्यग्नावग्निश्चरति प्रविष्ट इत्येतावदेवैतदहः शिल्पं क्रियते । ऽहीनसंततिं करोत्यथ श्वो भूते तायते त्रिणव उक्थ्यः शाकरसामैन्द्रो ऽतिग्राह्यो । ऽद्भिरेतदहरवकाभिश्चाभिरध्वर्युर्माहेन्द्रस्य[9] स्तोत्रमुपाकरोति । तासां

१ प्रस्तेप्रस्ते Be B
२ न ins TD Be 11 U
३ Thus MT Be 11 UD, •रणीभ्यामे• B Be.
४ तदुद्गा• M
५ मथंति M
६ •ग्नीध्रीये B Be U
७ प्रजननका• M.
८ Thus M only, तंतमाह• T Be 11 DU (pr. m.), तमाह• U (sec. m.), एतमाह• B Be.
९ All MSS ins एव after ऽद्भिर, exc. M

येश्[1] यजामहे ऽग्निं गृहपतिं गार्हपत्यात्सुगृहपतयस्त्वयाग्न इमे सुन्वन्तो यजमानाः स्युः सुगृहपतिस्त्वमेभिः सुन्वद्भिर्यजमानैः स्या[2] अग्निर्गृहपतिर्गार्हपत्यादृतुना सोमं पिबतु जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जोषि सुष्टुतिम् । विश्वेभिर्विश्वा३ ऋतुना वसो मह उशन्देवा३ उशतः पायया हविर्ऋतुना सोमं पिबतु वौ३षदिति । [3]सांवाश्विनमेतदहर्भवत्युत्तरतो वत्सान्धारयन्ति दक्षिणतो माहेन्द्रस्य स्तोत्रे ऽन्तरेण[4] सदोहविर्धाने संवाश्य[5] वत्सान्मातृभिः स३सृजन्ति[6] । बध्नन्ति वत्सानुत्सृजन्ति माहेन्द्रस्य[7] स्तोत्रमुपाकरोत्यथापराह्ण[7] उक्थ्यपर्यायेषु शिल्पानि क्रियन्ते । पारुच्छेपीर्होता श३सति । वालखिल्या मैत्रावरुणो विहरति । वृषाकपिं ब्राह्मणाच्छ३सी श३सत्येवयामरुतमच्छावाकः । संतिष्ठते पृष्ठ्यः

१ Sign of pluti only in B Be UD.

२ स्याद् all

३ The passage सांवाश्वि॰ up to उपाकरोति (line 9) is given here by MB Be (sec. m) only, the other MSS. give it in kh 6 after the words वृषण्वन्तमानस्य (252, 3). U agrees with M with this exception that only the first words सांवाश्विनमेतदहर्भवति are given after वृषण्वन्तमानस्य ।—सांकाश्विन॰ all.

४ Thus MB Be, स्तोत्रे ऽन्तरेण the other MSS.

५ Thus M only, सविश्य all the other MSS.

६ ऽसमवसृ॰ M.

७ माहेन्द्रस्तो॰ उपाकरोति not found in M

षडहो ऽहीनसंततिं करोत्यथ वसतीवरीः परिहृत्य पयाꣳसि विशिष्योपवसन्ति ॥ ५ ॥ प्रथमः ॥

अथ श्वो भूते चतुर्विꣳशं छन्दोममुपयन्ति बृहत्सामानमथ श्वो भूते चतुश्चत्वारिꣳशं छन्दोममुपयन्ति रथंतरसामानमथ श्वो भूते ऽष्टाचत्वारिꣳशं छन्दोममुपयन्ति बृहत्सामानमथ श्वो भूते चतुर्विꣳशमग्निष्टोममुपयन्ति रथंतरसामानमवि-वाक्यमेतदहर्भवति नैतदहरन्योऽन्यस्मा उपहताय व्याङ्गो-ऽथया[1] वा मारात्मꣳसा वा विब्रूयादिति मदु वा आङ्गं वै यज्ञः संतिष्ठते यत्र विब्रूयादिति विब्रूयादिति[2] वै[2] नो[2] ब्राह्मणं भवति नैतदाद्रियेत[3] नाद्रियेतेति[3] स्थितिरनु-ष्टुभमेतदहर्भवति नानुष्टुभो ऽधीयते[4] ते चेदनुष्टुभ उद्धरेरन्नध्वर्युरनुष्टुभ[5] उद्धरेदमूर्धा उप सूर्ये याभिर्वा सूर्यः सह। ता नो हिन्वन्त्वध्वरमित्येतया सौर्या[6] गायत्र्या वसती-

---

१ Thus T Be 11 DU, व्याङ्गोऽथया B Be; व्याङ्गरथया M, but above थ and या two akṣaras are written, which I am unable to decipher.

२ Thus M, the other MSS विब्रूयादिति once only and वैनो।

३ Thus M, most of the other MSS. om here and at the collateral passages (xvi 6 s fin, xvi, 16 s. fin.) नाद्रियेत।

४ धीयते all the MSS exc. M.

५ Thus Be, and M, which inserts only चेद् after अध्वर्युः।—अनुष्टुभः both times B, the whole passage runs thus in T Be 11: तचेअनुष्टुभम उद्धरेदेनुष्टुभ उद्धरेदमूर्धा; in U, तचेमनुष्टुभम उद्धरेद्धं अनुष्टुभ उद्धरेदमूर्धा, in D तंचेनुष्टुभनुष्टुभमुद्धरेद्धेनुष्टुभ उद्धरेदमूर्धा।

६ Thus M only, सौर्यां all the other MSS.

वरीर्यंक्षीयाद्दूदे त्वा मनसे त्वेत्यपोद्धृत्यैतामन्यया सौम्या[1] गायत्र्या राजानमुपावहरेद्विष्णो त्वं नो अन्तम इत्यपोद्धृत्यैतामन्यया वैष्णव्या गायत्र्या राजानमुपतिष्ठेत । स उ चेद्विद्वाननुष्टुभमभिव्याहरत्यत्यक्रमिषमिति[2] होत्रे प्राह । होतानाप्नस्यापयिता । होतास्य तदक्षरैरपिवयति[3] । स उ चेन्मन्येतामितकामो[4] वा अहमस्मि यदृङ्मयं वेदे यजुर्मयमेव[5] तद्वावेवाचर्यौ[5] वेदौ तौ[5] संपादयेतामिति[5] नैतदाद्रियेत । नाद्रियेतेति स्थितिः । संतिष्ठत एष चतुर्विंशो ऽग्निष्टोमो रथंतरसामा । ॥ ६ ॥

तस्मिन्संस्थिते समिद्धारा[6] यन्त्यावृत्य[6] समिध आग्नी-

---

१ Thus M only, सौर्या B Be, सौर्यया Be 11 TUD.

२ The text is corrupt in all the MSS, and I am at a loss how to emend, अत्यक्रमिषम् is my conjecture, अचमिषमिति B, अमिषमिति Be, अवयामिषमिति TDU, अवयामिषति Be 11, अभ्रुमन्या (or म्या) मुग्नी॰ षमिति M Probably we are to read an iṣ-aorist 1 ps sing. act. Keś. has॰ सत्यामिषमिति नौवैजैनास्मि नाशिता (sic).

३ Thus conjecturally All the MSS ॰वपति exc M, which has ॰पवयति ।

४ ॰कामा MT Be 11 DU, ॰कामः B Be, which om वा; all the MSS exc M begin a new kh with अहमस्मि ।

५ Thus M, यजुर्मयं वैतान्यावाविवाचरावयौ वेदौ ततौ संपा॰ T Be 11 D, यजुर्मयं वैतान्यचराश्यौ वेदौ संपा॰ B Be, यजुर्मयं वैतान्यावेवाचराश्यौ वेदौ संपा॰ U.

६ Thus corrected, समिद्धारयंत्या॰ MSS.

ध्रीये संन्यञ्चन्ति[1] । तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं[2] जुहोति प्रजापतये स्वाहेति मनसैव सदः प्रसर्पन्ति तूष्णीꣳ-स्तोमाय । संप्रसृप्तान्विदित्वाध्वर्युर्मनसैव प्राङ् द्रुत्वा मनसेमां[3] पात्रं कृत्वा मनसान्यं[4] ग्रहं प्रजापतये गृह्णात्युपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामीति[5] । यदिदं किं च तदिति मनसा परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाग्यतः प्रत्यङ् द्रुत्वा मनसैव स्तोत्रमुपाकरोति । मनसा[6] प्रसौति[6] । मनसा प्रस्तौति । मनसोद्गायति । मनसा प्रतिहरति । मनसा होत्र एषोत्तमेति प्राहुर्मनसा होताह्वयते । मनसाध्वर्युः प्रत्याह्वयते । मनसा शंसति । मनसा प्रतिगृणाति । यद्वैतस्य[7] मानसस्य ग्रहस्य पारमेत्यथ होतोच्चैश्चतुर्होतॄन्व्याचष्टे । तस्मा[8] अध्वर्युः प्रति-गृणाति ॥ ७ ॥

ओꣳ होतस्तथा होतः सत्यꣳ[9] होतररात्स्म होतरिति ।

---

१ सं॰ found in M only.

२ स्रुवाहुतीर् T Be 11 UD.

३ Thus M; मनसैव the other MSS.

४ All the MSS exc. M om. अन्यं।

५ इति om. M

६ om B Be U

७ यद्वैतस्य B Be

८ तस्माद् T Be 11 UD.

९ Be 11 TD ms. ꣳ, not M Be BU, cp. xii. 16 (109, 14).

यद्यु वै होता नाध्येत्यन्य[१] उ[१] होत्राशंसी शंसति । तस्मा उ प्रतिप्रस्थाता प्रतिगृणाति । यदैतेषां पारं यन्त्यथाध्वर्युर्मनसैव प्राङ् द्रुत्वा मनसैव तं ग्रहमुपोद्यच्छते[१] । मनसाश्रावयति । मनसा प्रत्याश्रावयति । मनसा वषट्कृतानुवषट्कृते हुत्वा हरति भक्षं । मनसा समुपहूय भक्षयन्ति । मनसा निर्णिज्य पात्रं प्रयच्छति । संतिष्ठत एष तूष्णीꣳस्तोमो । ऽथर्त्विजो विसृजत्यधिवृक्षसूर्ये[२] वाचं विसृज्यध्वाश्र[३] नक्षत्रेषू[३] इत्यधिवृक्षसूर्ये[३] इति वै नो ब्राह्मणं भवति । ते ऽधिवृक्षसूर्य एव वाचं विसृजन्ते । तानचैवासीनान्परिश्रयन्ति । पत्नीशाले पत्नीः परिश्रयन्त्यथानतिसर्पन्तावध्वर्यू धिष्णियान्बर्हिर्भ्यामौदुम्बरीꣳ समन्वारभेते इह धृतिरिह विधृतिरिह रन्तिरिह रमतिरिति[५] । ते यथासमुदितं[६] वाचं विसृजन्ते । ॥ ८ ॥

अथातः सर्पणस्यैव मीमांसा । दक्षिणस्य हविर्धानस्याधो-

---

१ Thus MT B[*] 11, ॰न्यतु D, ॰न्यो B Bo.

२ Most of the MSS have the plural.

३ विसृजंत्य॰ all exc. M.

४ Thus emended hesitatingly, विसृज्यध्वाश्रनक्षत्रेषू—त्यधि॰ M, विसृज्यध्वाशंनक्षत्रेषू इत्यधि॰ T Be 11 D, विसृज्यध्वाशंनक्षत्रेष्वित्यधि॰ U; विसृज्यध्वमिति वार्शनक्षत्रेष्विति वा अधि॰ B Bo; Keś. समाप्ते तूष्णीꣳस्तोमे ऽध्वर्युः ऋत्विजो विसृजति अधिवृक्षसूर्ये वाच विसृज्यध्वमा (sic) नक्षत्रेष्विति। इतर ऋत्विजः प्रतिब्रूयुः अधिवृक्षसूर्ये वाच विसृज्यामह (sic) इति वा। उदितेषु नक्षत्रेषु विसृज्यामह (sic) इति वा।

५ Thus M B Bo and cp. Āp XXI 12 7, रमतिमिति T Be 11 DU

६ ॰दितां M

ऽधो ऽवरुं सर्पयुरेतेन ह वै सर्पाः सस्पृशतो वै ते जीर्णास्तनूरपाघ्नतेति । तद् वा आहुर्यो वा अपथेन प्रतिपद्यते स्थाणुं वा हन्ति गर्तं[1] वा पतति भ्रेषं स न्येति । वषट्कारपथेनैव सर्पयुरेष वाव[2] स्वर्ग्यः[2] पन्था यद्वषट्कारपथ इति । तद् वा आहुः पराङिव वा एषो ऽग्नान्तः पन्था यद्वषट्कारपन्था । ऽध्वर्युपथेनैव सर्पयुरेष वा[3] अर्वाचः[3] पराचः[3] स्वर्ग्यः पन्था यदध्वर्युपथ इति । ते ऽध्वर्युपथेनैव सर्पन्ति । तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोत्युपसृजन्धाने वत्सं धारयन्धरुणो धयन् । रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेति । समुत्क्रम्य चात्वालदेशे जपन्ति वागैतु वागुपैतु वाङ्मोपैतु वागयदकर्म यथाकर्म यदत्यगाम यन्नात्यगाम यदत्यरीरिचाम यन्नात्यरीरिचाम प्रजापतौ[4] प्रजापतिं[4] तत्पितरमप्येत्विति[4] । तदाप्यन्ततः[5] प्रतितिष्ठन्ति । तेषां य एव प्रायणीयो ऽतिरात्रः स उदयनीयः । सत्त्रादुदवसाय

---

१ कर्तं B Be.

२ Thus M, वाव पराचः स्वर्ग्यः B Be, वाचस्वर्ग्यः T, वाचस्वर्ग्यः Be II. DU.

३ Text not wholly certain वा अवाच पराच M, वावपराचः all the other MSS.

४ Thus U (sec. m) B Be, प्रतिपत्तौ तत्प्रजापतौ तत्पितर॰ T Be II D, M reads as B, but with तत् also before प्रजापतिं ।

५ Thus B Be, तदाप्यन्तत. Be II DU, तदाप्यन्ततः T, तावदाप्यन्ततः M.

ज्योतिष्टोमेनाग्निष्टोमेन चतुष्टोमेन पृष्ठ्यशमनीयेन सहस्रदक्षिणेनैकैको यजेत । ॥ ९ ॥ द्वितीयः ॥

अथातो ग्रहक्रमेरेव सौमाꣳस्यैन्द्रवायवाग्रं प्रथममहः । शुक्राग्रं द्वितीयमाग्रयणाग्रं तृतीयं च चतुर्थं चैन्द्रवायवाग्रं पञ्चममहः । शुक्राग्रꣳ षष्ठं च सप्तमं चाग्रयणाग्रमष्टममहरैन्द्रवायवाग्रे[1] नवमदशमे[1] । इति[2] न्वा[2] अध्वर्युतो[2] । ऽथ छन्दोगवक्तृतो । [3]गायत्रीप्रातःसवनः [3]प्रथमस्त्रिरात्रस्त्रिष्टुब्माध्यंदिनो[4] जगत्तृतीयसवनो[5] । जगत्प्रातःसवनो द्वितीयस्त्रिरात्रो गायत्रीमाध्यंदिनस्त्रिष्टुप्तृतीयसवनस्त्रिष्टुप्प्रातःसवनस्तृतीयस्त्रिरात्रो जगन्माध्यंदिनो गायत्रीतृतीयसवन इति[6] । तस्मात्सच्छन्दस[7] उपयन्ति । ॥ १० ॥

---

१ Thus MT Bell UD and Keś; चैन्द्रवायवाग्रमष्टममहः शुक्राग्रं नवममहरैन्द्रवायवाग्रं दशमम् B Be, on the whole passage cp. also Āp. xxi. 14. 5

२ My correction, इतीन्वध्व॰ M; इतीन्वाध्व॰ T Be 11 DU, इतीमे ध्व॰ B Be.

३ Thus M only, गायत्रीप्रातःसवन प्रथम त्रिरात्र the other MSS

४ Thus M only (on the form त्रिष्टुब्म॰ cp TS. vii. 2 8 3), त्रिष्टुप्मा॰ B Bell, त्रिष्टुभमा॰ Be TD, त्रिष्टुभीमा॰ U.

५ All exc. M जगतीत्तृती॰ ।

६ T Bell DU om इति and read ॰सवनस्तस्मा॰, on this whole passage cp Sāy on Ait. Br iv 25 10

७ Thus all exc M, which has तस्मात्सच्छंदद and Be 11 which reads तस्माच्छंदस । The reading of M might be correct

अथातः पशुकॢप्तेरेव मीमाꣳसैन्द्राग्नाः पशवः स्युरित्येक
आहुरग्निरयं लोको वायोरन्तरिक्षमसाविन्द्रस्य । यदैन्द्राग्नाः
पशुर्भवति वायव्यो वपाहोम इमानेव[1] तल्लोकान्प्रीणन्त[2] एषु
लोकेषु प्रतितिष्ठन्तो यन्त्येव[3] ये[3] ऽनैन्द्राग्नान्प्रतिपद्यन्ते[3] यथा
श्रेयसे ऽनाहृत्य[4] पापीयस आहरन्ति[5] तादृक्तत्तस्मादैन्द्राग्नाः[6] ५
पशवः स्युरित्येतदेकमतिरात्रपशवो ऽभितो मध्य ऐन्द्राग्ना ।
एकादशिना[7] अभितो मध्य ऐन्द्राग्नाः । सर्वाग्नेया[8] एव स्युरि-
त्येतदेकꣳ । सर्वैन्द्रा[9] एव स्युरित्येतदेकꣳ । सर्वप्राजापत्या[10]
एव स्युरित्येतदेकꣳ । सर्वैकादशिना[11] एव स्युरित्येतदपरं ।
तेषाꣳ सर्वैकादशिनैर्यतां प्रसिद्धमेव प्रथमे ऽहनि प्रथमामेका- ६

---

१ Thus M; इमानेवैतेल्लो॰ B Be, इमानेवतैलो॰ T Be H D; इमानेव-
तैलो॰ U. – प्रीणंत M, प्रीणयंत all tho other MSS.

२ यांत्येव M.

३ Thus M (without, of course, avagraha); येऽनैन्द्राग्नान्प्र॰ U;
येऽन्येनैन्द्राग्ना प्र॰ B Be; येऽन्येनैन्द्राग्नान्प्र॰ T Be H D.

४ नान्वेनाहृत्य M.

५ आवरन्ति MU Be H D, आवरन्ति B Be.

६ तत् after तादृक् found in Be B only.

७ ऐका॰ M only, but cp TS. vi. 6. 5. 1.

८ सर्वं आग्ने॰ Be

९ Thus MU, सर्वं ऐन्द्रा B Be; सर्वैन्द्राग्ना T Be H D.

१० Thus M, सर्वे or सर्वाः प्रा॰ the other MSS.

११ सर्वं ऐका॰ B Be

दशिनीमालभन्त[1] आग्नेयस्य वारुणमुपालम्भ्यं[2] कुर्वन्ति । तथाश्चैतानि दश मध्यमान्यहान्यनतिरिच्यमानाः पशवोऽनुभवन्ति । प्रसिद्धमेवोत्तमेऽहन्युत्तमामेकादशिनीमालभन्त[1] । आग्नेयस्य वा वारुणस्य वा वैश्वदेवमुपालम्भ्यं कुर्वन्ति । ॥ ११ ॥

तदु वा आहुर्यद्द्वादश[3] दीक्षा द्वादशोपसदो द्वादशाहं प्रसुताः कथमस्यैतान्यहानीष्टान्याप्रीतानि[4] पशुमन्ति भवन्तीति । तिस्र एकादशिन्यो ऽग्नीषोमीयो वैश्वदेवो ऽनूबन्ध्या । षट्त्रिंशतमेते[5] पशवः [6]षट्त्रिंशतमेतान्यहान्येवमस्यैतान्यहानीष्टान्याप्रीतानि पशुमन्ति भवन्तीति । तदु वा आहुर्यद्द्वादश दीक्षा द्वादशोपसदो द्वादशाहं प्रसुताः कथं द्वादशाहेन संवत्सर आप्यत इति । द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्या । एतानि ह[7] वै[7] संवत्सरस्य वर्षिष्ठान्यहान्येता-

---

१ ०भंत MB Be, ०भत the other MSS. (cp Āp xxi. 14. 7), the last time DU also plural

२ Thus M; वारुणस्य वा वैश्वदेवमुपा० B Be, वा वरुणस्य etc. (as B Be) T Be 11 UD.

३ यद् om all the MSS. exc M

४ M only has preserved this correct reading, all the other MSS. are badly corrupt.

५ Thus all, are we to correct ०त्रिंशत एते ?

६ Thus all, exc. M, which reads षट्त्रिंशमेतान्य० ; are we again to correct षट्त्रिंशत एतानि ?

७ Thus B Be, ह om M, नवे TBe 11 DU

न्यनु संवत्सर आप्यते । [1]समाप्तो द्वादशाहः । समाप्तः संवत्सरकाम । एवं द्वादशाहेन संवत्सर आप्यते[1] । ॥ १२ ॥ तृतीयः ॥

संवत्सराय दीक्षिष्यमाणाः समवस्यन्ति । तद्ध स्मैतत्पूर्वे संवत्सरं समवसायामते ऽन्योऽन्यस्यानूकं[2] च मानुषं च विजिज्ञासमाना । उतो[3] श्लोकः शमरथस्य[4] कर्ता भवति । ते चतुरहे पुरस्तान्माघ्यै पौर्णमास्यै दीक्षन्ते । तेषामेकाष्टकायां क्रयः संपद्यत । इति नु यदि समामविज्ञाय[5] दीक्षन्ते । यद्यु वा एतस्यामेवैकाष्टकायां समां[6] विजिज्ञासन्ते[6] चतुरह एव पुरस्तात्फाल्गुन्यै वा चैत्र्यै वा पौर्णमास्यै दीक्षन्ते । तेषामपरपक्षस्याष्टम्यां क्रयः संपद्यते । तेनैकाष्टकां न छम्बट्कुर्वन्ति । तेषां पूर्वपक्षे सुत्या संपद्यते । पूर्वपक्षं मासा अभि संपद्यन्ते । पूर्वपक्षे प्रसवः पूर्वपक्षे वैषुवतं पूर्वपक्ष उत्थानं । समानं द्वादशाहिकं कर्म । तथैव षष्ठ्यामुपसद्युत्तरवेदिं संनिवपन्ति यद्यनग्निचित्यं भवत्यथ यदि साग्निचित्यं प्रथमायामेवोपसद्युत्तरवेदिं संनिवपन्ति । ॥ १३ ॥

---

१...१ Thus M, i. s. o. संवत्सरकाम एवं T Be 11 DU संवत्सरक्रामेकाम एवं; acc to B Be the passage runs thus एवं द्वादशाहेन संवत्सर आप्यते समाप्तो द्वादशाहः समाप्तः संवत्सरक्रतुः ।

२ Thus M Be, ॰स्यानूक्तं Be 11, ॰स्यानुक्तं BUD

३ Thus M Be (sec. m.), cp. supra xvi 1 (p 245, 1); उक्ताना the other MSS

४ The word occurs again xvii 43 and Drāhy v. 4 11.

५ समविज्ञाय M.

६ Thus M, समामविज्ञायासन्ते Be, समासविज्ञासन्ते the other MSS.

तेषां द्वादश दीक्षा द्वादशोपसदः संवत्सरं प्रसुता । न संवत्सरे ऽग्निं चिन्वीतेत्येक आहुश्चिन्वत उ हैके । प्रसिद्धेन कर्मणोपवसथाद्यन्ति । तेषां प्रसिद्धं ज्योतिष्टोमो वैश्वानरः प्रायणीयो ऽतिरात्रः संतिष्ठते । तस्मिन्संस्थिते चतुर्विंशमुक्थ्यमारम्भणीयमुभयसामानमुपयन्त्यथाभिप्लवं षडहमुपयन्ति । [1]ज्योतिरग्निष्टोमो गौरुक्थ्य आयुरुक्थ्यो गौरुक्थ्य आयुरुक्थ्यो ज्योतिरग्निष्टोमस्तं चतुरुपयन्ति । रथंतरंबृहद्रथंतरंबृहदिति विपर्यासं पृष्ठे भवतः । पृष्ठ्यः षडहः । स मासस्तेनैवं संयत्तेन पञ्च मासानुपयन्त्यथैतं षष्ठं मासं संभार्यं संभरन्ति । त्रयो ऽभिप्लवाः षडहास्तान्यष्टादशाहानि । प्रायणीयारम्भणीयौ । तानि विंशतिरहानि । पृष्ठ्यः षडहो ऽभिजित्त्रयः परःसामानः । स मासो । ऽथ वैषुवतमथैतं वैषुवते ऽहन्येकविंशमग्निष्टोममुपयन्ति बृहत्सामानं । तस्य सौर्यो ऽतिग्राह्यः सौर्यः पशुरुपालम्भ्यस्तद्धैतदेके[2] दिवैवैतेनाह्ना प्रतिपद्यन्त उदित आदित्ये दिवाकीर्त्यमहरिति वदन्तो । यथैवान्येषामह्नामेवमुपाकुर्यादिति मौद्गल्यस्तस्य महादिवाकीर्त्यं होतुः पृष्ठं विकर्णं ब्रह्मसामं मासो ऽग्निष्टोमो । ऽथोर्ध्वं वैषुवताचीनावृत्तान्स्वरानुपयन्त्यथ विश्वजितमुपयन्त्यथावृत्त पृष्ठ्यं

१ The following acc to M, the other MSS are all more or less corrupt.

२ corrected hesitatingly, तद्धोतैषदेक M, तद्धोचैतदेके Bc, तद्धोवैतदेके Be 11 D, तद्धोतत्तदेके B; तद्धोततदेके U pr m, तद्धोतु: तदेको U sec, m; cp. infra xvi 16 (p. 263, 1) and xvii. 11.

प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ वैषुवते ऽह्नि शुक्राग्रा ग्रहा गृह्यन्ते समानं कर्माग्रयणाद्गृहादाग्रयणं[1] गृहीत्वा चोध्वग्रावाणो गृह्णात्युपयामगृहीतो ऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ सौर्यर्चा[2] सौर्यमतिग्राह्यं गृह्णाति ॥ १७ ॥

तरणिर्विश्वदर्शत इत्यनुद्रुत्योपयामगृहीतो ऽसि सूर्याय त्वा भ्राजस्वते जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिः सूर्याय त्वा भ्राजस्वत इत्यथावृत्तान्गृह्णात्युपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णाम्युपयामगृहीतो ऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं गृह्णामीति सर्वैतदहरतिग्राह्या गृह्यन्त इति ब्राह्मणमथोर्ध्वं वैषुवतात्त्र्यहमन्वहमावृत्तानेव गृह्णाति वैश्वकर्मणादित्याभ्यां विपर्यासमुपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ वैश्वकर्मणं विश्वकर्मन्हविषा वावृधान इत्यनुद्रुत्योपयामगृहीतो ऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णामीत्यथादित्यमदितिर्न उरुष्यत्वित्यनुद्रुत्योपयामगृहीतो ऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं गृह्णामीत्यथ वैश्वकर्मणमथादित्यमथोर्ध्वं त्र्यहाद्वैश्वकर्मणादित्याभ्यामेव विपर्यासमेत्या

१ षड्ढं ins M

२ om B Be H UD

महाव्रतात्तावुभौ सह महाव्रते गृह्येते । अथैतं महाव्रतीये ऽह्नि प्राजापत्यमतिग्राह्यं गृह्णाति । त्वे क्रतुमपि वृञ्जन्ति विश्व इत्यनुद्रुत्योपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेति । ॥ १८ ॥

अथातः पशुकॢप्तेरेव मीमाꣳसैकैन्द्राग्नानां[1] सत्रꣳसंतिरात्रपशवो ऽभितो मध्य ऐन्द्राग्ना । ऐकादशिना[2] अभितो मध्य ऐन्द्राग्नाः । सर्वाग्नेया[3] एव स्युरित्येतदेकꣳ । सर्वैन्द्राग्ना[4] एव स्युरित्येतदेकꣳ । सर्वप्राजापत्या[5] एव स्युरित्येतदेकꣳ । सर्वैकादशिना[6] एव स्युरित्येतदपरं । तेषाꣳ सर्वैकादशिनैर्यतां[7] प्रसिद्धमेवोत्तमस्य दशरात्रस्य तृतीये ऽहन्सप्तदश उक्थ्य एकादशिन्याप्यते । तस्य सवाहान्यपशून्यतिरिच्यन्ते । तेष्वेतास्त्व ब्राह्मणवतः पशूनालभन्ते वैष्णवं वामनमित्येताꣳस्तेषामेव[8] यतां बार्हस्पत्यो वैपुवते सवनीयः संपद्यते । तस्य सौर्यमुपालम्भ्यं कुर्वन्ति । यदु वा एतास्तव[9] ब्राह्मणवतः पशून्न विन्दन्ति सर्वैतानि मध्यमानि सांवत्सरिकाण्यहान्यैन्द्राग्नपशूनि

---

१ Thus M, सौमाꣳसा सत्रैकैन्द्राग्नानां Bo; सौमाꣳसा ऐन्द्रा॰ B Bo II UD

२ Thus M; एका॰ the other MSS

३ सर्वे आग्ने॰ MSS. exc M.

४ सर्वे ऐ॰ MSS, this passage is missing in M

५ सर्वेप्रा॰ MSS exc. M.

६ Thus M; सर्वे ऐका॰ Bo, सर्वे एका॰ the other MSS.

७ Thus M, युतां or स्तां the other MSS

८ ॰मेव M Be, ॰मिव the other MSS

९ M, स्तंसव Be II BUD स्तांस्त्व Be

षडहमुपयन्ति । [1]त्रयस्त्रिंशमभ्युत्थायपणायमेतदहर्भवत्यथावृत्तमेवाभिप्लवं षडहमुपयन्ति ॥ १४ ॥

ज्योतिरग्निष्टोम आयुरुक्थ्यो गौरुक्थ्य आयुरुक्थ्यो गौरुक्थ्यो ज्योतिरेवाग्निष्टोमस्तं तथैव चतुरुपयन्ति । बृहद्रथंतरं बृहद्रथंतरमिति विपर्यासं[2] पृष्ठे[3] भवतः । पृष्ठ्यः षडहः पुरस्तात्त्मासेनैवं संयत्तेन पञ्च मासान्यन्त्यैवं[4] षष्ठं मासं संभार्यं संभरन्ति । द्वावभिप्लवौ षडहौ तानि द्वादशाहानि । गोआयुषी तानि चतुर्दश । चत्वार्यूर्ध्वं वैषुवतात्तान्यष्टादश । दशरात्रो महाव्रतं चातिरात्रश्च । स मासस्तदेतन्मासिष्ठं गवामयनम् । ॥ १५ ॥ चतुर्थः ॥

अनुत्सर्गं बृहद्रथंतराभ्यामिलोत्तमे मासि सहत्पृष्ठान्युपेयुस्तद्द्वितीयं गवामयनं । दशमास्यं[5] तृतीयमभिप्लवाश्चाचीयन्ति[5] च तदङ्गिरसामयनं । पृष्ठ्याश्चाचीयन्ति च तदादित्यानामयनमग्निष्टोमाश्चाचीयन्ति च तत्प्रजापतेरयनं । प्रायणीयोदयनीयावभितो मध्ये ऽग्निष्टोमास्तद्द्वितीयं प्रजापतेरयनं । सर्वाग्निष्टोमा[6] एव स्युरिति तत्तृतीयं प्रजापतेरयनमथातो

---

१ चयस्त्रिंशम० M, चयस्त्रिंशत्म० the other MSS.

२ All MSS. exc M ins इति।

३ Thus M, पृष्ठे Bo UD, पृष्ठो B; पृष्ठौ Bo 11.

४ Thus M, मासान्यंत्य० B Bo 11 DU (pr m); मासानुपर्यन्त्य० Bo

५ Thus M, दशममास्यं तृतीयमभि० Bc, दशमासामभिप्ल० BU (pr. m); दशममासमभिप्ल० Bo 11 U (sec. m).

६ सर्वेऽग्नि० Bc.

गृहकृतेरेव मीमांसा । तद्धैतदेके[१] सारस्वतवैष्णवौ ग्रहौ गृह्णन्ति प्रायणीयादेवाधेऽतिरात्रादोदयनीयाद्वाग्वै सरस्वती यज्ञो विष्णुस्ते वाचं चैव यज्ञं च मध्यतः परिगृह्यानार्ता उदृचं गमिष्याम[२] इति वदन्तस्तदु वा आहुर्यद्वाचा[३] यज्ञस्तायते तेन सरस्वत्याप्ता[४] यदु[५] यज्ञस्तेन[५] विष्णुनि वै[६] नो ब्राह्मणं भवति । सारस्वतवैष्णवौ ग्रहौ गृह्णीयादिति नैतदाद्रियेत[७] । नाद्रियेतेति[७] स्थितिः । ॥ १६ ॥

अथातोऽंश्वदाभ्ययोरेव ग्रहणं । प्रायणीयेऽदाभ्यं गृह्णीयादंशुं वैषुवतेऽदाभ्यं महाव्रत उभौ प्रायणीय उभौ वैषुवत उभौ महाव्रते । यत्र क्व चैवैनौ[८] गृह्णीयादित्येतदपरमथातः परःसाम्नामेव ग्रहणं । ते वा एते परःसामानः पुरस्ताद्वैषुवताच्चाहमन्वहमितः पराञ्चो गृह्यन्त उपयामगृहीतोऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं गृह्णाम्युपयामगृहीतोऽस्योषधीभ्यस्त्वा

---

१ Thus Bo, तद्धैनेनदेके MUD, तद्धेनदेके Bo II; तद्धैवेनदेके B; cp. supra p 261, 14

२ °ष्याम च Bo and M, but, if I see right, the च has been struck out

३ °र्योवाचा M.

४ All MSS. exc. M °प्ता इति ।

५ Thus M; यद्यज्ञेन Bo, यद्यज्ञस्तेन the other MSS

६ वै om BUD Bo (pr m.)

७ Thus M (cp supra p 252, 10), नैतदाद्रियेत नाद्रियेतेति the other MSS.

८ Thus M, चैनौ the other MSS

कुर्वन्ति । तेषामेवं यतामैन्द्राग्नो वैषुवते सवनीयः संपद्यते । तस्य सौर्यमुपालम्भ्यं कुर्वन्ति । सावित्रो महाव्रते । तस्य प्राजापत्यस्तूपर ऐन्द्रश्चर्षभ उपालम्भ्यौ भवतः । ॥ १९ ॥

पञ्चमः ॥

श्वो महाव्रतमित्युपकल्पयते [1]ऽपरिमिताश्चयानपरिमितान्दुन्दुभीꣳस्तावत[2] उ[2]वेवाजिसृतश्चर्म[3] चेडसंवर्त[3] च भूमिदुन्दुभिमार्षभं चर्म सलाङ्गूलं ब्राह्मणं च शूद्रं चार्द्र[4] च चर्मकर्त । प्रेङ्खꣳ होता कूर्चावध्वर्युर्ब्रह्मौहोत्रका[5] औदुम्बरीमुद्गातासन्दीमुपकल्पयते[1] । वाणं च शततन्तुमाघाटीः पिञ्छोलाः[6] कर्करीका इति तदु पलयः । कटपरिवारं च मिथुनौ चापरिमिताश्च दास्यस्तावत उ[7]वेवोदकुम्भानर्पयेत[7] महाव्रतीये ऽह्नि पञ्चविꣳशमग्निष्टोममुपयन्ति रथंतरसामानꣳ । समानं कर्मा माहेन्द्राद्ग्रहान्माहेन्द्रं ग्रह[8] गृहीत्वायैतान्संभारानायातयति । जघनेनाग्नीध्रं गर्त[9] खानयित्वार्षभेण कूर्चर्मणोत्तरलोम्नाभि-

1...1 This passage found in M and Be sec. m only

2 सावन्त एवा॰ Be.

3 Corrected (cp. infra p. 267 5), चेडासंवर्त M; चेड्सं॰ Be

4 om Be.

5 ॰ब्रह्मौ॰ M Be

6 पिञ्छोला M here and infra,

7 Thus M, स्योद॰ the other MSS

8 om. all exc. M Be.

9 कर्तं M Be H (pr m) D

विघ्नन्ति[1] । तस्य लाङ्गूलमुत्क्षिप्य हन्तानूपतिष्ठते । ऽथैतान्दुन्दुभीननुदिशमाघ्नयति । नानाहननैरनाघ्नन्[2] एते हन्तारो ऽनूपतिष्ठन्ते । ऽथैते रथाः समन्तं देवयजनं परीत्योत्तरतस्तिष्ठन्ति[3] । तेषां तिसृधन्वी राजपुत्रो मुख्यो भवति ॥ २० ॥

तस्मा अग्रेणाग्नीध्रमिडसंवर्तं[4] चर्मकर्तं व्यवास्यति । तं काल एव गच्छ्याद्दणात्यथैतौ ब्राह्मणश्च शूद्रश्चान्तरेण सदोहविर्धाने तिष्ठत आर्द्रं चर्मकर्तमादाय । मेह्नऽ हौतासजते । कूर्चावध्वर्युरुपसृणीते हसीर्होचका । औदुम्बरीमुद्गातासन्दीमारोहत्यादत्ते वाणं शततन्तुमाघाटीभिः पिच्छोलाभिः कर्करीकाभिरित्युद्गातारं पत्नयः पर्युपविशन्त्यथ दक्षिणे वेद्यन्त कटपरिवारे मिथुनौ संप्रवादयतो[5] । ऽथैता दास्य उदकुम्भानधिनिधाय मार्जालीयं पर्युपविशन्त्ययाध्वर्युः कूर्चयोरासीनो माहेन्द्रस्य स्तोत्रमुपाकरोति । स्तुवते माहेन्द्राय । प्रस्तुते माषि संप्रैषमाहाजिसृत आजिं धावत दुन्दुभीन्समाघ्नताभिष्टोतारो ऽभिगृणताग्नीदाग्निं विनयोलूखलमुदादय प्रतिप्रस्थातः

---

१ •भिविनिघ्नन्ति M, cp. supra XI. 10 (p 79 4) and infra XVII. 39, XVIII 18

२ Corrected, नानाहननैराहनन M, नानाहननैरनाहत B Be 11 UD, नानाहननैरभ्याहननात Be

३ Thus M, परीत्यरथंतोत्तरतस्ति• all the other MSS

४ Thus M, •मिषुसंवर्तं all the other MSS

५ Thus M, संप्रवादेतौ BUD (pr. m.) Be 11 (pr. m.), संभवतौ Be 11 (sec m) D (sec. m), संप्रवादेयतो Be

मौम्यस्य विद्धीति । यथासंप्रैषं ते कुर्वन्ति । धावन्त्याजिसृत आघ्नन्ति दुन्दुभीन्संप्रवदन्ति वाच आघाटीभिः पिच्छोलाभिः कर्करीकाभिरित्युद्गातारं पत्न्य उपगायन्ति ॥ २१ ॥

भद्रमु नाम सामास्ति । तदु वाचोपगीयते[1] । ऽथैव[1] तिसृधन्वी राजपुत्रश्चर्मावभिनत्ति । तं ब्राह्मणो ऽनूपतिष्ठते मापराद्धीर्मातिव्याद्धीरिति । तत्तथैव त्रिभिरन्तर्हितमवभिनत्त्यथैतौ[2] ब्राह्मणश्च शूद्रश्चार्द्रे चर्मकर्ते व्यायच्छेते इमे ऽराद्धुरिमे सुभूतमक्रन्निति ब्राह्मण । इम उद्वासीकारिण इमे दुर्भूतमक्रन्निति वृषलो । ब्राह्मणः संजयति । नश्यति वृषलः । संवर्तेते मिथुनावथैता दास्य उदकुम्भानधिनिधाय मार्जालीयं परिनृत्यन्त्युपस्थानुपहत्य दक्षिणान्पदो निघ्नन्तीरिदंमधु[3] गायन्त्यस्तामाहू सकृत्परीतानां प्रथमां वाचयति ॥ २२ ॥

गाव एव सुरभयो गावो गुग्गुलुगन्धयः । गावो घृतस्य मातरस्ता इह सन्तु भूयसीर्हैमहाऽ इदं मध्वित्युपस्थानुपहत्य दक्षिणानेव पदो निघ्नन्ति । द्वितीयं परीतानां प्रथमामेव वाचयति ननु गावो मह्नीरस्य गङ्गाया उदकं पपुः । पपुः सरस्वत्यै नद्यै ताः[4] प्राचीरुज्जगाहिरे[4] हैमहाऽ इदं मध्वित्यु-

---

१ Thus M, °यतार्तेथैव BUD Be 11, °यगार्थस्थैव Be.

२ I. so. °वभिनत्ति B Be 11 UD भवति ।

३ Thus M and cp Āp. XXI. 19 18, निघ्नतीद° the other MSS

४ Thus M, ताः प्रावरप्राचीनं जगाधिरे (or जगाधिः) the other MSS. Kes. भाः प्राचीयोर्जगाधिरे, cp. Āp. XXI 20 3

पश्चानुपहृत्य दक्षिणानेव पदो निघ्नन्ति । तृतीयं परीतानां प्रथमामेव वाचयति यदा राखन्द्यौ[1] वदतो[1] याम्यं[2] मक्षीरदाघ्नकौ[1]। क्षेमाध्यवस्यतो पामे[3] नानड्वाꣳस्तप्यते वहन्तीमहाꣳ इदं मध्विति त्रिर्येना उत्तरेण मार्जालीयं तिष्ठन्त्यो वाचयतीदमेव मधु सारघमयꣳ सोमः सुतो बृहत् । तमिन्द्र परितातृपौहैमहाꣳ इदं मध्विति । ता अत ऊर्ध्वमिदं मध्विदं मध्विदं मध्वित्येव[4] परियन्ति । तेषां य एव प्रायणीयो ऽतिरात्रः स उदयनीयः । सत्त्रादुदवसाय ज्योतिष्टोमेनाग्निष्टोमेन[5] चतुष्टोमेन पृष्ठशमनीयेन सहस्रदक्षिणेनैकैको यजेत । ॥ २३ ॥ षष्ठः ॥

स्वर्गकामो द्विरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते द्विरात्रस्य मे सतो ऽमावास्याया उपवसथीये ऽहन्पूर्वमहः संपत्स्यत उत्तरमभितुत्तरमिति । तस्य तथा संपद्यते । ऽभिप्लवः पूर्वमहर्भवति गौरुत्तरं । ज्योतिष्टोमो ऽग्निष्टोमः पूर्वमहर्भवति । तेजस्तेनावरुन्द्धे । सर्वस्तोमो ऽतिरात्र उत्तरꣳ । सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै । गायत्रं पूर्वे ऽहन्साम भवति । त्रैष्टुभ-

---

१ Uncertain, राखंश्रौर्वदतो M, राखन्द्योद्यो वदतो Be 11, राचौखद्योतौ वदतो Be, धाराद्यौर्वेदतो U, D indistinct

२ Thus M, याम्यमंको॰ Be Be 11

३ पामे M, पामो the other MSS

४ ॰त्येवमेव M.

५ Thus M Be, ज्योतिष्टोमेन चाग्निष्टोमेन the other MSS

मुत्तरे । रथंतरं पूर्वेऽहन्साम भवति । बृहदुत्तरे । वैखानसं पूर्वेऽहन्साम भवति । षोडश्युत्तरे । हविष्मन्निधनं पूर्वमहर्भवति । हविष्कृन्निधनमुत्तरं । नानैवार्धमासयोर्भवतो नानावीर्ये भवत इति ब्राह्मणम् । संतिष्ठते द्विरात्रस्त्रिरात्रेण यक्ष्यमाणो भवति । स उपकल्पयते सहस्रं । तस्मिन्नुन्नतो वेहद्वामन इति भवन्त्यथास्यैषा सहस्रतम्यन्यतएनी कण्डूकृतोपकृष्टा[1] भवति । दीक्षते । रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति । द्वादशोपसदः । ॥ २४ ॥

तायते प्रथमेऽहन्नग्निष्टोमस्तस्य त्रिवृत्प्रातःसवनं पञ्चदशं माध्यंदिनꣳ सवनꣳ सप्तदशं तृतीयसवनꣳ । स दाक्षिणानि हुत्वाग्नीध्रे स्रुवाहुतिं जुहोति त्वꣳ सहस्रमानय । उन्नत उद्दलस्याभिनस्त्वचम् । सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरित्युन्नत एतेषां त्रयाणां त्रिꣳशच्छतानां[2] प्रथमो नीयते । ऽहीनसंततिं करोति । तायते द्वितीयेऽहन्युक्थ्यस्तस्य पञ्चदशं प्रातःसवनꣳ सप्तदशं माध्यंदिनꣳ सवनमेकविꣳशं तृतीयसवनꣳ । स दाक्षिणानि हुत्वाग्नीध्रे स्रुवाहुतिं जुहोत्यूर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ पाहि मा मा मा हिꣳसीः सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति । वेहद्देतेषां त्रयाणां त्रिꣳशच्छतानां[2] प्रथमा[3] नीयते । ऽहीनसंततिं करोति । तायते तृतीयेऽह-

---

१ Thus M and Karmāntasūtra, कमण्डलो• the other MSS.

२ Sic MSS !

३ प्रथमो M Be.

अतिरात्रस्तस्य समदशं प्रातःसवनमेकविंशं माध्यंदिनं सवनं त्रिणव आर्भवः पवमानस्त्रयस्त्रिंशमग्निष्टोमसामैकविंशान्युक्थानि सषोडशिकानि। षोडशं प्रथमं रात्रिसाम पञ्चदशानीतराणि त्रिवृद्राथंतरः[1] सन्धिः। स दाक्षिणानि हुत्वाग्नीध्रे स्ववाहुतिं जुहोति त्वं सहस्रस्य प्रतिष्ठासि[2] वैष्णवो वामनस्त्वम्। सा[3] मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति। वामन एतेषां त्रयाणां चत्वारिंशच्छतानां[4] प्रथमो नीयते। नाचाक्षीनसंततिं करोति। ॥ २५ ॥

अथैतां सहस्रतमीमुत्तरेणाग्नीध्रं[5] पर्याणीयाहवनीयस्यान्ते द्रोणकलशमवघ्रापयेदाजिघ्र कलशं मह्युरुधारा पयस्वत्या त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः। सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति। प्रजयैवैनं पशुभी रय्या समर्धयति प्रजावान्पशुमान्रयिमान्भवति य एवं वेदेति ब्राह्मणमेष वै भवति तया सहाग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयादिति। स तया सहाग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहोत्युभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः। इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा

१ Thus M, त्रिवृद्राथन्तरः Be, त्रिवृद्रथन्तरः the other MSS

२ प्रतिष्ठा असि all, also M

३ स M

४ Thus M only (sic!); चत्वारिंशच्छतानि all the other MSS

५ ॰ग्नीध्रीयं MSS; U sec. m. ॰ग्नीध्रं।

सहस्रं वि तदैरयेथामिति । त्रेधाविभक्तं वै त्रिरात्रे सहस्रꣳ साहस्रीमेवैनां करोति । सहस्रस्यैवैनां मात्रां करोतीति ब्राह्मणमथास्यै रूपाणि जुहोत्यञ्ज्येतायै स्वाहा कृष्णायै स्वाहा श्वेतायै स्वाहेत्यथास्या उपोत्थाय नामभिर्दक्षिणं कर्णमाजपतीडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि सुकृतं मा देवेषु ब्रूतादिति । देवेभ्य एवैनमावेदयत्यन्वेनं देवा बुध्यन्त इति ब्राह्मणम् । ॥ २६ ॥

अथैताꣳ सहस्रतमीमन्तरेण चात्वालोत्करावुदीचीं नीयमानामनुमन्त्रयते सा मा सुवर्गं लोकं गमय सा मा ज्योतिष्मन्तं लोकं गमय सा मा सर्वान्पुण्याँल्लोकान्गमय सा मा प्रतिष्ठां गमय प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति । प्रजयैवैनं पशुभी रय्यां प्रतिष्ठापयति । प्रजावान्पशुमान्रयिमान्भवति य एवं वेदेति ब्राह्मणमथ वै भवति तामग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाध्वर्यवे वा दद्यात्सहस्रमस्य सा दत्ता भवति सहस्रमस्य प्रतिगृहीतं भवतीति ब्राह्मणमथ वै भवति यस्तामविद्वान्प्रतिगृह्णाति तां प्रतिगृह्णीयादेकासि न सहस्रमेकां त्वा भूतां प्रतिगृह्णामि न सहस्रमेका मा भूताविश मा सहस्रमित्येकामेवैनां भूतां प्रतिगृह्णाति न सहस्रं य एवं वेदेति ब्राह्मणमथ वै भवति स्योनासि सुषदा सुशेवा स्योना माविश सुषदा माविश सुशेवा माविशेत्याह । स्योनैवैनꣳ सुषदा सुशेवा भूताविशति नैनꣳ हिनस्तीति ब्राह्मणमथ वै भवति ब्रह्मवादिनो वदन्ति सहस्रꣳ सहस्रतम्यन्वेती३

सहस्रतमीꣳ सहस्राश्मिति । यत्प्राचीमुत्सृजेत्सहस्रꣳ सहस्रतम्यन्वियात्तत्सहस्रमप्रज्ञात्रꣳ । सुवर्गं लोकं न प्रजानीयात्प्रतीचीमुत्सृजति । ताꣳ सहस्रमनु पर्यावर्तते । सा प्रजानती सुवर्गं लोकमेति । यजमानमभ्युत्सृजतीति । तां पुरस्तात्प्रतीचीं यजमानमभ्युत्सृजति । त्रिषे सहस्रं प्रजायत उत्तमा नीयते प्रथमा देवाग्गच्छतीति ब्राह्मणं । तेन हैतेन रौहिणेयः क्रोष्टुनिः[1] कौशाम्बो[2] यास्क ऋतुमुखेषु विहृतेनेजे[3] । ऽथो[3] हाजमाम[3] मशको गार्ग्य आरुणेरन्तेवासी । स[4] ह[4] सꣳस्थामदृष्ट्वोवाच[4] ननु मत[5] एकाहाꣳ इति । नेति हैनं प्रत्युवाच । तꣳ होपेयाय । तस्मा उ हैनꣳ स उवाच । तेन ह क्षा[6] समस्तेनैव[6] यजते । तमेतं गर्गत्रिरात्र इत्याचक्षते । ॥ २७ ॥ सप्तमः ॥

चतुरो वीरानवरुन्धमानश्चतूरात्राय दीक्षते । °तस्यापरिमिता दीक्षा द्वादशोपसदस्संस्थाहान्यग्निष्टोमा एवैते चतु-

---

1 Thus M, क्रापुनि B Bo 11 D; क्रापनि Be.

2 कौशाम्बो B

3 Thus M, विहृतेनेजेनाजमाम B Bo 11 DU, विहृतेनैषजेनाथो षाजमाम Be.

4 Thus M, संदसद्भुस्थो (स्था) हृष्टोवाच B Bo 11 UD, सदर्थ दृष्टोवाच Be.

5 Doubtless corrupt, thus reads M, मर Bo 11 D; मर BU; मष Be.

6 Thus M, क (क्ष) त्समस्ते (स्तै) नैव the other MSS.

° From here unto दीक्षते, p 274 5, left out in M

विꣳशाः पवमाना[1] उक्थ्यस्तोमाः[1] स्युरित्येतदेकमेको ऽग्निष्टोमो द्वावुक्थ्यावथातिरात्रश्छन्दोगानु[2] सामविकल्पं[3] पृच्छेयुरित्येतदपरमंचिꣳ श्रद्धादेवं यजमानं चत्वारि वीर्याणि नोपानमन्तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यमित्येतान्कामानवरुरुत्समानश्चतूरात्राय[4] दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्त्र्याहान्यग्निष्टोमा एवैते चतुष्टोमाः स्युरित्येतदेकमेको ऽग्निष्टोमो द्वावुक्थ्यावथातिरात्रश्छन्दोगानु[2] सामविकल्प पृच्छेयुरित्येतदपरं । पुष्टिकामश्चतूरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदो । ऽथ वै भवति पुरोडाशिन्य उपसदो भवन्तीति । प्रथमे चतूरात्र आग्नेय आज्य आग्नेयमष्टाकपालꣳ सायंप्रातरन्ववधाय जुहोति । द्वितीये चतूरात्रे सौम्य आज्ये सौम्यं चतुष्कपालꣳ सायंप्रातरन्ववधाय जुहोति । तृतीये चतूरात्रे वैष्णव आज्ये वैष्णवं त्रिकपालꣳ सायंप्रातरन्ववधाय जुहोति । तस्य त्रिवृत्सप्तदशौ विपर्यासꣳ स्तोमौ भवतः । प्राणो वै त्रिवृदन्नꣳ सप्तदशः प्रजापतिः । प्राणाच्च खलु वा इदमन्नाद्याच्च ।

---

१ Thus (without visarga) Be, पवमानस्तोमा B Be 11 UD.

२ I am in doubt whether छन्दोगानु सा॰ पृ॰ or छन्दोगानमु सा॰ पृ॰ should be put into the text, Be has each time the last mentioned reading, M presents once the first, once the last mentioned, the other MSS छंदोगानमु or ॰नु or छंदोगान ।

३ स्तोमवि॰ B Be 11 DU, सामवि॰ Be.

४ Thus Be, ॰नवरुरुत्स (त्सु) कामय॰ B Be 11 UD

परिगृह्य प्रजापतिः प्राजायत । प्राणांश्चैवैतद्वाचाश्च परिगृह्य यजमानः प्रजायते । तस्माद्वान्यग्निष्टोमा एवैते चतुस्त्रिंशपवमानाः स्युरित्येतदेकमेको ऽग्निष्टोमो द्वावुक्थ्यावथातिरात्रश्छन्दोगानु[1] सामविकल्पं पृच्छेयुरित्येतदपरम् । ॥ २८ ॥

प्रजातिकामो[2] वा व्यावृत्कामो वा पशुकामो वा[3] वाचो[3] वान्तं[3] परिजिगांसन्नन्यस्मिन्नाराय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चविंशो ऽग्निष्टोमो महाव्रतवान्विश्वजित्सर्वपृष्ठो ऽतिरात्रः । सारस्वतेनायनेनैष्यन्तो[4] दृषीगर्या उपकल्पयन्त ऋषभैकादशा[5] अन्या[6] ऋषभैकशता[7] अन्यास्तेषामाश्वत्थी हविर्धानं चाग्नीध्रं च भवतस्तद्धि सुवर्ग्यं । चक्रीवती भवत । उलूखलबुध्न एषां यूपो भवति । ते सरस्वत्यै जघन्योदके[8] दीक्षन्ते । तेषामयमेव त्रिवृदग्निष्टोमः संतिष्ठते । तस्मिन्संस्थिते ऽभि यूपं वहन्त्यभि धिष्णियान्हरन्त्यग्निष्ठे ऽनसि

१ Cp page 274, note 2.
२ प्रजापतिकामो all MSS exc. M
३ Thus M Be, वाचाश्वतं Be 11 वाचावामत BUD
४ •नैष्यतो (•ते) MSS exc M.
५ Thus M , ऋषभैकादश Be , ऋषभैका Be 11 BUD.
६ om M
७ Thus all, exc M, which has ऋषभैकादशता ।
८ Thus B Be 11 UD , जघनेनोदके Be M

समवगमयन्ते[1] यदेषाꣳ समवगमयितव्यं[1] भवति । ते[2] ऽनेनैव[2] पृष्ठ्येन[2] षडहेन प्रतिपद्यन्ते । ऽहरहः शम्यान्यासेऽशम्यान्यासे यजमाना आक्रोशन्तो ऽज्यानिमिच्छमाना यदा दश शतं कुर्वन्त्यथैकसुत्यानं । यदा शतꣳ सहस्रं कुर्वन्त्यथैकसुत्यानं । यदैषां प्रमीयेत यदा वा जीयेरन्नथैकसुत्यानं प्लाक्षे वा प्रस्रवणे । ॥ २९ ॥

अथातो मुन्ययनमित्याचक्षते । अमणः खारीविवधो[3] सरस्वत्यै जघन्योदके[4] ऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथैताꣳ सवनेष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालमिति । तया समस्तया वा[5] विहृतया वा प्रतिपद्यते । ऽहरहः शम्यान्यासेऽशम्यान्यासे यजमान[6] आक्रोशन्ज्यानिमिच्छमानो[7] यदैनं[8] प्रतिराध्नुवन्ति यदा वास्यैतं खारीविवधमाच्छिन्दन्त्यथैकसुत्यानं[9] प्लाक्षे वा प्रस्रवणे । ॥ ३० ॥ अष्टमः ॥

---

१ Thus Be, समागम॰ M, the other MSS. are wholly corrupt.

२ Thus M; तनेनषडहेन B Be II UD, तेनैवषड्हेन Be.

३ Thus M; ॰विवधः Be, शारीवधा the other MSS.

४ Corrected; जघमोदके M Be II, जघनेनोदके the other MSS

५ All exc. M om.

६ यजमाना M.

७ Corrected, ॰क्रोशमज्या॰ B Be II UD, ॰क्रोशंज्या॰ Be, ॰क्रोशं-मोज्या॰ M.

८ Thus MU Be II; यदैनं BD, यदेनं Be

९ Thus M Be, शारीविविधमा॰ Be II, राशीविवेधुना BUD.

पशुकामः सप्तरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य एकविंश उक्थ्यस्त्रिणव उक्थ्यः पञ्चविंशोऽग्निष्टोमो महाव्रतवान्विश्वजित्सर्वपृष्ठोऽतिरात्रो । बृहद्रथन्तरे पूर्वेष्वहःसूपेत्य प्रत्यक्षं विश्वजिति पृष्ठान्युपयन्ति । ब्रह्मवर्चसकामोऽष्टरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य एकविंश उक्थ्यस्त्रिणव उक्थ्यस्त्रयस्त्रिंश उक्थ्यः पञ्चविंशोऽग्निष्टोमो महाव्रतवान्विश्वजित्सर्वपृष्ठोऽतिरात्रः । प्रजासु वा चुचुकासु ज्योगामयावी वा नवरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहानि ज्योतिर्गौरायुरित्येतमेव त्र्यहं त्रिरुपयन्ति । तेषामायुरतिरात्र उत्तममहर्भवति । प्रजातिकामो वा व्यावृत्कामो वाभिचरन्वाभिचर्यमाणो[1] वा दशरात्राय दीक्षिष्यमाणो दशहोतारं कृत्वा दशरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहानि त्रिवृदग्निष्टोमोऽग्निष्टुदाग्नेयीषु भवति । पञ्चदश उक्थ्य ऐन्द्रीषु । त्रिवृदग्निष्टोमो वैश्वदेवीषु । सप्तदशोऽग्निष्टोमः प्राजापत्यासु तीव्रसोम । एकविंश उक्थ्यः सौरीषु । सप्तदशोऽग्निष्टोमः प्राजापत्यासूपहव्यस्त्रिणवावग्निष्टोमावभित ऐन्द्रीषु । त्रयस्त्रिंश उक्थ्यो वैश्वदेवीषु । विश्वजित्सर्वपृष्ठोऽतिरात्रः । ॥ ३१ ॥

---

१ वाभिचरन left out in all exc M

प्रजाकामा एकादशरात्राय दीक्षन्ते ' तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहानि ज्योतिरतिरात्रः ' पृष्ठ्यः षडहस्त्रयश्छन्दोमा ' अथातिरात्रो ' ऽथाहीनविधिः पृष्ठ्यः षडहस्त्रयश्छन्दोमा ' दशममहरथातिरात्रो ' ऽथायं पौण्डरीक एकादशरात्रो ऽयुतदक्षिणो ऽश्वसहस्रदक्षिणस्तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहान्यभ्यासङ्ग्यः षडहस्त्रयश्छन्दोमा ' दशममहरथातिरात्रो ' ऽश्वाष्टसहस्रं ददात्युत्तमे ऽहन्यश्वसहस्रं[1] ददात्यथातो ज्योतिरयनमित्याचक्षते ' स भरतद्वादशाह इत्येक आचक्षते ' तस्यापरिमिता दीक्षा द्वादशोपसदस्तस्याहानि ज्योतिरतिरात्रो[2] ' ज्योतिरग्निष्टोमो ' ऽष्टौ ज्योतींष्युक्थ्या[3] ' ज्योतिरेवाग्निष्टोमो ' ज्योतिरेवातिरात्र ' एषो द्वादशाहो ' दशमं चाहरतिरात्रं च महाव्रतं चोपदधाति ' स एवैव[4] त्रयोदशरात्रः ' ॥ ३२ ॥ नवमः ॥

अथ पूर्वश्चतुर्दशरात्रो ' ऽतिरात्रः ' पृष्ठ्यः षडहः ' प्रत्यङ् षडहो ' ऽथातिरात्रो ' ऽथोत्तरश्चतुर्दशरात्रो ' ऽतिरात्रो ' ज्योतिर्गौरायुरिति त्र्यहः ' पृष्ठ्यः षडहः ' प्रत्यङ् त्र्यहो ' ऽथातिरात्रो ' ऽथ पूर्वः पञ्चदशरात्रो ' ऽतिरात्रो ' ज्योतिर्गौरायुरिति त्र्यहो ' दशरात्रो ' ऽथातिरात्रो ' दशमं चाहरतिरात्रं च

---

१ क्राष० M

२ Thus MUD, ज्योतिरात्रो B Be, Be 11 def

३ Thus M (sec. m.) BUD, ०क्थ्यानि M (pr. m.) Be; Be 11 def.

४ Thus Be B 11 DU, स चैव B, स एव M

महाव्रतं[1] व्यवदधाति । स एवैवाब्राह्मणः[2] षोडशरात्रो । ऽथोत्तरः पञ्चदशरात्रो । ऽतिरात्रस्त्रिवृदग्निष्टोमो[3] । ज्योतिर्गौरायुरिति[1] त्र्यहः । पृष्ठ्यः षडहः । प्रत्यङ् त्र्यहो । ऽथातिरात्रो । ऽथ सप्तदशरात्रो । ऽतिरात्र । एकः पञ्चाहो । दशरात्रो । ऽथातिरात्रो । दशमं चाहरतिरात्रं च महाव्रतं[1] व्यवदधाति । स एवैवाब्राह्मणो[2] ऽष्टादशरात्रो । ऽथ विंशतिरात्रो । ऽतिरात्रो । ज्योतिर्गौरायुरिति त्रयस्त्र्यहाः । पृष्ठ्यः षडहः । प्रत्यङ् त्र्यहो । ऽथातिरात्रो । ऽथैकविंशतिरात्रो । ऽतिरात्रः । पृष्ठ्यः षडहः । सप्तैतानि मध्यमानि सांवत्सरिकाण्यहानि भवन्ति । प्रत्यङ् षडहो । ऽथातिरात्रः । ॥ ३३ ॥ दशमः ॥

अथ पूर्वश्चतुर्विंशतिरात्रो । ऽतिरात्रो ज्योतिर्गौरायुरिति चत्वारस्त्र्यहा दशरात्रो ऽथातिरात्रो । दशमं चाहरतिरात्रं च महाव्रतं[1] व्यवदधाति । स एवैवाब्राह्मणः[2] पञ्चविंशतिरात्रो[4] । ऽथोत्तरश्चतुर्विंशतिरात्रो । ज्योतिरतिरात्रः । पृष्ठ्यः षडहस्त्रयस्त्रिंशात्त्रयस्त्रिंशमुपयन्त्यथानिरुक्तं पृष्ठ्यं षडहमुपयन्ति । त्रिवृत आयतने त्रयस्त्रिंशमुक्थ्यमुपयन्ति[5] रथंतरसामानं । तस्य चतुर्विंशाः पवमाना भवन्ति । पञ्चदशस्यायतने त्रिणव-

---

१ All MSS. exc M ins च ।

२ Some of the MSS एवैवब्राह्मणः ।

३ त्रिवृदग्निष्टुत्यो॰ M

४ Thus M Be; चतुर्विंशति॰ B Be II DU

५ अग्निष्टोमम् I S O उक्थ्यम् M

उक्थ्यमुपयन्ति बृहत्सामानं । तस्याष्टाविꣳशाः पवमाना भवन्ति । सप्तदशस्यायतन एकविꣳशमुक्थ्यमुपयन्ति वैरूपसामानं । तस्य द्वात्रिꣳशाः[1] पवमाना भवन्ति । स एवायतन[2] एकविꣳशमुक्थ्यमुपयन्ति वैराजसामानं । तस्य षट्त्रिꣳशाः पवमाना भवन्ति । स एवायतने[2] त्रिणवमुक्थ्यमुपयन्ति शाक्वरसामानं । तस्य चत्वारिꣳशाः पवमाना भवन्ति । स एवायतने त्रयस्त्रिꣳशमुक्थ्यमुपयन्ति रैवतसामानं । तस्य चतुश्चत्वारिꣳशाः पवमाना भवन्ति । त्रयस्त्रिꣳशात्त्रयस्त्रिꣳशमुपयन्ति । तस्याष्टाचत्वारिꣳशाः पवमाना भवन्त्यथावृत्ते पृष्ठ्यꣳ षडहमुपयन्ति । ॥ ३४ ॥

त्रिवृतो ऽधि त्रिवृतमुपयन्ति । स्तोमानाꣳ संपत्त्यै प्रभवाय । ज्योतिरग्निष्टोममुपयन्त्यथातिरात्रो । ऽथ त्रिꣳशद्रात्रो । ज्योतिरतिरात्रः । पृष्ठ्यः षडहस्त्रयस्त्रिꣳशात्त्रयस्त्रिꣳशमुपयन्ति । त्रिणवमुपयन्त्येकविꣳशमुपयन्ति । त्रिवृतमग्निष्टुतमुपयन्ति । पञ्चदशमिन्द्रस्तोममुपयन्ति । सप्तदशमुपयन्त्येकविꣳशमुपयन्ति । चतुर्विꣳशमुपयन्ति । चतुर्विꣳशात्पृष्ठान्युपयन्ति । त्रयस्त्रिꣳशात्त्रयस्त्रिꣳशमुपयन्ति । त्रिणवमुपयन्ति । द्वावेकविꣳशावुपयन्ति । चतुरश्चतुष्टोमान्स्तोमानुपयन्त्यथातिरात्रो । ऽथ द्वात्रिꣳशद्रात्रो । ऽतिरात्रो । ज्योतिर्गौरायुरिति नव त्र्यहाः । प्रत्यङ् त्र्यहो । ऽथातिरात्रो । ऽथ त्रयस्त्रिꣳशद्रात्रो । ऽतिरात्रस्त्रयः

---

१ Thus M Be 11, द्वाविꣳशाः the other MSS.
२ एव om M

पञ्चाहा' विश्वजित्सर्वपृष्ठो ऽतिरात्र' एकः पञ्चाहो' दशरात्रो' ऽथातिरात्रो' दशमं चाहरतिरात्रं च महाव्रतं[1] व्यवदधाति' स एवैवाब्राह्मणश्चतुस्त्रिंशद्रात्रः[2]' ॥ ३५ ॥ एकादशः ॥

अथ षट्त्रिंशद्रात्रो' ज्योतिरतिरात्रश्चत्वारो ऽभिप्लवाः षडहा' दशरात्रो' ऽथातिरात्रो' दशमं चाहरतिरात्र च महाव्रतं व्यवदधाति' स एवैवाब्राह्मणः[2] सप्तत्रिंशद्रात्रो' ऽथैकस्मात्पञ्चाशद्रात्रो' ऽतिरात्रस्त्रयस्त्रिवृतो ऽग्निष्टोमा' अथातिरात्रो' दश पञ्चदशा उक्थ्या' अथातिरात्रस्तेषां षोडशिमद्दशममहर्भवति' द्वादश सप्तदशा उक्थ्या' अथातिरात्रः' पृष्ठ्यः षडहो' ऽथातिरात्रो' द्वादशैकविंशा उक्थ्या' अथातिरात्रो' ऽथ संवत्सरक्लृप्त एकस्मात्पञ्चाशद्रात्रो' ऽतिरात्र' आरम्भणीयमहस्त्रयो ऽभिप्लवाः षडहास्तान्यष्टादशाहानि' प्रायणीयारम्भणीयौ' तानि विंशतिरभिजित्त्रयः परःसामानो' ऽथ वैषुवतं' त्रयो ऽर्वाक्सामानो' ऽथ विश्वजिदावृत्तो ऽभिप्लवः षडहो' गोआयुषी' दशरात्रो' महाव्रतं चातिरात्रश्चाथैकषष्टिरात्र[3]' एतस्यैव सतो ऽभितो नवरात्रं पृष्ठ्यौ षडहावुपोहति' तयोरावृत्त उत्तरौ' ऽथ

---

१ All MSS exc. M ins च।

२ एवैत्रा° Be.

३ The passage अथैकषष्टिरात्र up to चातिरात्रश्च (p 282 2) is left out in all the MSS exc M Be, and the tradition preserved by Be is rather corrupt, cp Pañc br XXIV 19 1

शतरात्रो' ऽतिरात्रो ज्योतिर्गौरायुरिति त्र्यहश्चतुर्दशाभिप्लवाः षडहा दशरात्रो महाव्रतं चातिरात्रश्चाथ सहस्ररात्रो' ऽतिरात्रो नवनवतिस्त्रिवृतो ऽग्निष्टोमाः शतं पञ्चदशा उक्थ्याः शतꣳ सप्तदशा उक्थ्याः शतमेकविꣳशा उक्थ्याः शतं त्रिणवा उक्थ्याः शतं त्रयस्त्रिꣳशा उक्थ्याः शतं चतुर्विꣳशा उक्थ्याः शतं चतुश्चत्वारिꣳशा उक्थ्याः शतमष्टाचत्वारिꣳशा उक्थ्या नवनवतिरेव[1] त्रिवृतो ऽग्निष्टोमा अथातिरात्रः' ॥ ३६ ॥ द्वादशः ॥

॥ इति षोडशः प्रश्नः ॥

---

१ Thus Be, °नवतिमेव the other MSS.

अतिरात्रं करिष्यन्नुपकल्पयते चतुरो ऽतिरात्रपशूनरुणपिशङ्गमश्वमौदुम्बरꣳ षोडशिपात्रं चतुस्स्रक्ति ज्यायसो ऽन्हणाज्ज्यायस एकधनानं दीक्षते । रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति । द्वादशोपसदः । प्रसिद्धेन कर्मणोपवसथादित्यथ[1] वसतीवरीः परिहृत्य पयाꣳसि विशिष्योपवसन्त्यथातो महारात्र एव बुध्यन्ते । प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यद्भिरुदैत्यतिरात्रं[2] क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्माग्रयणाद्ग्रहादाग्रयणं[3] गृहीत्वा षोडशिनं गृह्णात्यातिष्ठ वृत्रहन्रथमित्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं[4] गृहीत्वा चतस्रो रशना आदाय यूपमभ्यैति । स्वर्वन्तं यूपमुत्सृज्य चतुरो ऽतिरात्रपशूनुपाकरोत्याग्नेयमैन्द्राग्नमैन्द्रꣳ[5] सारस्वतीं

---

१ Thus U, cp. supra XVI 3 (p 247. 6), °णोपवसथादित्याथ M; °णोपवसथादित्यथ D; °णोपवसथादित्याथ Tr, °णोपवसथादित्य Be, °णोपवसथादथ B Be 12; °णोपवसथ्यादथ H

२ उदेति M, उदैति the other MSS

३ ग्रहं ins. B 12 D.

४ om. B Be.

५ हरिवꣳ ins M

मैत्रीमिति[१] तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय। तदृजुधा संतिष्ठते। प्रसर्पन्ति माध्यंदिनाय सवनाय। प्रसिद्धो ऽभिषवः। प्रसिद्धं ग्रहा गृह्यन्ते। समानं कर्माग्रयणाद्ग्रहादाग्रयणं[२] गृहीत्वा[२] षोडशिनमभिगृह्णातीन्द्रमिद्धरी वहत इत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णात्यृजुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते। प्रसर्पन्ति तृतीयसवनाय। प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णात्यथ षोडशिनमभिगृह्णात्यसावि सोम इन्द्र त इत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति। ॥ १ ॥

समानं कर्म पवमानात्पवमानेन चरित्वा स्वे धामन्यभ्यभिश्चरन्ति[३]। तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः समानो वनस्पतिः समानः स्विष्टकृत्पेषवान्समानीडा समान्यो दिशो। नाना दिश इत्येके। समानं कर्म ध्रुववद्भ्यश्चमसेभ्यो। ध्रुववद्भि-

---

१ Instead of इति B Be and U (sec. m.) have the clause: यदि वा सारस्वतौ मैत्रीमैत्रोपाकुर्यात्; Tr. has the same words after इति; they are clearly an interpolation, cp the Dvaidha.

२ D ins सर्वं and reads गृहीत्वा।

३ Thus Tr Be 12 HD, चरन्ति the other MSS.

चमसैश्चरित्वा त्रिभिरुक्थ्यपर्यायैश्चरतीन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामित्यथ षोडशिना चरिष्यन्प्राडायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति । होतृचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्त्संमुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति । तदेतꣳ षोडशिनꣳ सह सꣳसादयन्त्यथैनमुपतिष्ठते ॥ २ ॥

यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥ एष ब्रह्मा य ऋत्वियः । इन्द्रो नाम श्रुतो गणे ॥ प्र ते महे विदथे शꣳसिषꣳ हरी । य ऋत्वियः प्र ते वन्वे । वनुषो हर्यतं मदम् ॥ इन्द्रो नाम घृतं न यः । हरिभिश्चारु सेचते । श्रुतो गण आ त्वा विशन्तु । हरिवर्पसं गिर इत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा समयाविषिते सूर्ये हिरण्येन षोडशिन स्तोत्रमुपाकरोति । पुरस्तात्प्रत्यञ्चमरुणपिशङ्गमश्वं धारयन्ति श्यामं वा । हिरण्यꣳ संप्रदाय स्तुवते । ॥ ३ ॥

होत एवोत्तमेति प्राक्होतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शꣳसति । प्रतिगृणात्यथ यच होतुरभिजानात्या त्वा वहन्तु हरय इति तदुभयतोमोदं[1] प्रतिगृणात्योथा मोद इव मदे मदा मोद

---

१ ॰मोदं M Tr Be B, ॰मदं Be 12 DU, मद H

इवोमथेत्यथ[1] यत्र होतुरभिजानाति मम वह्निष्टुभमिति तस्मिन्नुक्थे[2] प्रतिगीर्य प्राङेत्योपच्छन्न एतꣳ षोडशिनं ग्रहमनूपच्छन्ते चमसान्ध्वर्याश्रावयाथो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृते[3] षोडशिनं जुहोतीन्द्राधिपते ऽधिपतिस्त्वं देवानामस्यधिपतिं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वाꣳ-श्चमसाञ्जुहुत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण षोड-शिना पीतस्येति । तस्य[3] व्युदितो[4] भक्षो । यजमानवशो हि[5] यजमानस्य होतृवशो होतुस्तावु चेदध्वर्यवे प्रब्रूयातां वषट्कर्तुर्भक्ष इत्येव ब्रूयात्तयोस्तर्पं भक्षाक्षान्तरेति[6] । तस्य भक्षः ॥ ४ ॥

इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् । तयोरनु भक्षं भक्षयामि वाग् जुषाणा सोमस्य तृप्यतु तस्य त इन्द्रेण षोडशिना पीतस्य मधुमत उपहूतस्योपहूतो भक्षया-मीति । निर्णिज्य पात्रं प्रयच्छत्यथैतमरुणपिशङ्गमश्वं ददाति

---

१ The pratigara thus only in the Vivaraṇa; all the MSS. (exc. only M, which has the first time also मोद इव) and Keś read मोदैव i.s o. मोद इव ।

२ तत् only found in MDUBe 12

३ Thus M Tr Be 12 Be UD Keś.; वषट्कृतानुवषट्कृते HB.

४ Thus MDH(= विविधमुक्तः); तस्याप्युदितो the other MSS.

५ Thus Be 12 HDU Keś, च Be B; om. M Tr.

६ Thus M (writing भक्षा°); भक्षांतरेति Be 12; भक्षांतरेतेति H Tr. भक्षानियोति U, भक्षांतरे Be, भक्षान्तरे B, D om this passage.

ऽग्रासं वा । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसाध्वर्यव इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्सर्वभक्षा[1] मार्जयन्ते । ऽथ संप्रैषमाह प्रतिप्रस्थातराग्रयणस्तृतीयं गृहतृतीयानि जाघनीः पृषदाज्यं गोपायाग्नीद्राश्विनं ते द्विकपालꣳ शृतमप्यपररात्रे[2] ऽस्त्विति । यथासंप्रैषं तौ कुरुतो । ऽथ विनिःसृप्य रात्रये प्रसर्पन्ति । संप्रसृप्तान्विदित्वाध्वर्युः प्राङायन्नाह ॥ ५ ॥

होतुश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति । होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्त्संगृह्णीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाग्यमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । होत एषोत्तमेति प्राङ्होतुः कालात्पराङावर्तते ऽध्वर्युरध्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शꣳसति । प्रतिगृणाति । प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राङेत्योपयच्छत एतꣳ होतृचमसमनूपयच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहुत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुमदनभक्ष इन्द्रेण पीतस्येति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसाध्वर्यव स

[1] M here and infra ॰भक्षा ।

[2] Thus HB Tr Bo and cp Karmānta, शृतमधापर॰ U, शृतमध्यपर॰ M Bo 12 D. Keś

इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसांस्संभक्षा मार्जयन्ते । ऽथ प्राङायन्याह ॥ ६ ॥

मैत्रावरुणस्य चमसमनूनयध्वमुन्नेतः सोमं प्रभावयेति । मैत्रावरुणचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्संसुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । मैत्रावरुणायैषोत्तमेति प्राङ्मैत्रावरुणस्य कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते मैत्रावरुणः । प्रत्याह्वयते ऽध्वर्युः । शꣳसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योपच्छत एतं मैत्रावरुणचमसमनूपच्छन्तो चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहोत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति । मैत्रावरुणचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसाꣳश्चिन्व स इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसांस्संभक्षा मार्जयन्ते । ऽथाह प्रतिप्रस्थातश्चमसगणौ ते प्रचरेति । तत्कृत्वा प्रतिप्रस्थाता प्राङायन्याह ॥ ७ ॥

ब्राह्मणाच्छꣳसिनस्य चमसमनूनयध्वमुन्नेतः सोमं प्रभावयेति । ब्राह्मणाच्छꣳसिचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान्संसुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । ब्राह्मणाच्छꣳसिन्नेषोत्तमेति प्राङ्ब्राह्मणाच्छꣳसिनः काला-

BIBLIOTHECA INDICA

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL
New Series No 1282

# बौधायन श्रौतसूत्रम् ।

# BAUDHAYANA SRAUTA SŪTRAM




EDITED BY
DR W CALAND OF UTRECHT

VOL II FASCICULUS IV

CALCUTTA
PRINTED AT THE BAPTIST MISSION PRESS
AND PUBLISHED BY THE
ASIATIC SOCIETY 1 PARK STREET
1911

त्पराङावर्तते प्रतिप्रस्थातारमभ्येनमाह्वयते ब्राह्मणाच्छꣳसी। प्रत्याह्वयते प्रतिप्रस्थाता। शꣳसति। प्रतिगृणाति। प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं ब्राह्मणाच्छꣳसिचमसमनूद्यच्छन्ते चमसानथाश्रावयत्याश्रावयास्त्वौषडुक्थशा यज सोमानामिति। वषट्कृतानुवषट्कृते द्विर्जुहोति। तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहोत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति। ब्राह्मणाच्छꣳसिचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसाꣳश्च स इत्यात्मानं प्रत्यभिमृशन्ते। आप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते। ऽथ प्राङायन्नाह ॥ ८ ॥

अच्छावाकस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेत्यच्छावाकचमसमेव प्रथममुन्नयन्ति। यथोपपादमितरान्समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति। स्तुवते। ऽच्छावाकायैषोत्तमेति प्राङच्छावाकस्य कालात्पराङावर्तते प्रतिप्रस्थातारमभ्येनमाह्वयतेऽच्छावाकः। प्रत्याह्वयते प्रतिप्रस्थाता। शꣳसति। प्रतिगृणाति। प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतमच्छावाकचमसमनूद्यच्छन्ते चमसानथाश्रावयत्याश्रावयास्त्वौषडुक्थशा यज सोमानामिति। वषट्कृतानुवषट्कृते द्विर्जुहोति। तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहोत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येत्यच्छावाकचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसाꣳश्च स

इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसांस्तेभक्षा आसं-दन्ते । होत्रे प्रथमꣳ स्तुवते ऽथ मैत्रावरुणायाथ ब्राह्मणा-च्छꣳसिने ऽथाच्छावाकायाध्वर्युः पूर्वाभ्यां चमसगणाभ्यां प्रच-रति प्रतिप्रस्थातोत्तराभ्याꣳ । सर्वं ऐन्द्रा[१] महाव्रतमगणा[१] भव-न्तीति[१] ज्ञा[१] अथ[२] प्रथमश्चतुःपर्यायः[३] संतिष्ठते । एवमेव द्वितीयः संतिष्ठते । एवं तृतीयो । मध्यमेन पर्यायेण श्रित्वन्त इव चरन्तोय विनिःसृप्य राथंतराय संधये प्रसर्पन्ति । ॥ ९ ॥

संप्रसृप्तान्विदित्वाध्वर्युः प्राडायप्राह होतृचमसमनून्नयध्व-मुपेतः सर्वत्र एव राजानमुन्नय मातिरीरिच इति । होतृ-चमसमेव प्रथममुन्नयन्ति । यथोपपादमितरांस्तेष्व एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सादयन्ति । [४]तदेतमाश्विन-मुपस्तीर्णाभिघारितꣳ सह सꣳसादयन्त्ययाप[५] उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । होत्र एषोत्तमेति प्राकर्होतुः काशात्पराडावर्तते ऽध्वर्युरध्येन-माह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शꣳसति । प्रतिस्टपाल्या

---

१ Thus Be 12, M (the last however चमसा॰); HTr DU om. सर्वा; Be B चमसगणाभ्यां प्रचरति 1, 8, 0 सर्वे ... भवन्तीति ज्ञा ।

२ भवन्तीतीज्ञा अथ M; भवन्तीनीज्ञाथं U, the other MSS. om. इति ज्ञा or ज्ञा alone.

३ चतुष्पर्याय M.

४ Thus Tr, तदेतदाश्वि॰ all the other MSS , after आश्विनम् some of the MSS. have पुरोडाशम् here and *infra* (p 291, 4 and 6).

५ Thus MTr Be DHU, सꣳ om Be 12 B.

मध्याह्नाच्छ्रयते[1] । परःसहस्रमाश्विनं भवतीति ब्राह्मणं । प्रसिद्धमुक्थं प्रतिगीर्य प्राङायन्नाहाश्विभ्यां तिरोअह्नियानाꣳ सोमानामनुब्रूहीति । प्राङेत्याधावन्त एतꣳ होतृचमसमनूद्यन्त आश्विनमुपोद्यन्ते चमसानध्वर्युराश्रावयत्याश्रावयास्तु श्रौषडश्विभ्यां तिरोअह्नियान्सोमान्प्रस्थितान्प्रेष्येति । वषट्कृते जुहोति । [2]तदेतमाश्विनमुपस्तीर्णाभिघारितꣳ सह जुह्वति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांꣳश्चमसाञ्जुहुत्यथ भक्षैः प्रत्यक्ष आद्रवन्त्यनुसवनभक्षो ऽश्विभ्यां पीतस्येति । तस्य भक्षः सर्वगणस्य ते सर्वगणाश्विभ्यां पीतस्य तिरोअह्नियस्य सोमस्य सुतुतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । होतृचमसमेवैते चयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हित्य स इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसाञ्सर्वभक्षा मार्जयन्ते । ऽथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्याहरन्त्येतानाग्नीध्रादौपयजानङ्गाराꣳस्तानघेण होतारं निवपत्युपसीदत्युपयष्टा गुदतृतीयैश्चैतानि गुदतृतीयान्येकादशधा छत्त्वोपयष्टोपयजति । समानमत ऊर्ध्वꣳ संतिष्ठते ऽतिरात्रः । ॥ १० ॥ प्रथमः ॥

---

1 Thus HD, मध्येरमा॰ Tr, मध्यामन्दा॰ M, मध्यमाध्या॰ Bo 12 B; मध्यमाध्या॰ U, मध्यमाध्यात् Bo, my copy of the vivaraṇa (Burnell MSS) reads चाध्यरात्रमात्, the words are explained thus यावद्विषुव आतपो भवति तावत्।

2 तदेतदा॰ all the MSS exc Tr

व्यतिषजेदितरानिति व्यतिषजति । स एवमेव[1] दक्षिणमुत्तरमित्यष्टौ यूपान्व्यतिषजति । ॥ १२ ॥

अथ वै भवति यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाꣳसमित्युत्तरार्ध्यमेव वर्षिष्ठं मिनोति दक्षिणार्ध्यꣳ ह्रसीयाꣳसमेषा वै गर्तमिद्यस्यैवं मिनोति ताजक्प्रमीयत इति ब्राह्मणं । दक्षिणार्ध्यं वर्षिष्ठं मिनुयात्सुवर्गकामस्याथ ह्रसीयाꣳसमिति दक्षिणार्ध्यमथ वर्षिष्ठं मिनोत्युत्तरार्ध्यꣳ ह्रसीयाꣳसमाक्रमणमेव तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्या इति ब्राह्मणमथ वै भवति यदेकस्मिन्यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते । यन्नैकाꣳ रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दत इति ब्राह्मणमथ वै भवति यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेदित्युपान्ते तस्य व्यतिषजति । स्त्र्येवास्य जायत इति ब्राह्मणमथ वै भवति यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्रवेष्टयेदित्यान्तं तस्य प्रवेष्टयति । पुमानेवास्य जायत इति ब्राह्मणमेतमुपशयं दक्षिणतो न्यस्यति तूष्णीꣳ । सर्वांस्तान्यूपानुत्सृज्याग्नेयमेवाग्निष्ठ उपाकरोति ॥ १३ ॥

सारस्वतीमुत्तरे सौम्यं दक्षिणे पौष्णमुत्तरे बार्हस्पत्यं दक्षिणे वैश्वदेवमुत्तर ऐन्द्रं दक्षिणे मारुतमुत्तर ऐन्द्राग्नं दक्षिणे सावित्रमुत्तरे वारुणं दक्षिणे । ऽथ वै भवति यदि

---

१ एव om M, एवम् om Ms

कामयेत योऽवगतः सोऽपरुध्यतां योऽपरुद्धः सोऽवगच्छत्वित्यैन्द्रस्य लोके वारुणमालभेत वारुणस्य लोक ऐन्द्रं । य एवावगतः सोऽपरुध्यते योऽपरुद्धः सोऽवगच्छतीति ब्राह्मणमंय[1] वै[1] भवति[1] यदि कामयेत प्रजा मुह्येयुरिति पशून्व्यतिषजेदिति । पशूनेवात्र[2] व्यतिषजति । प्रजा एव मोहयतीति ब्राह्मणमंय वै भवति यदभिवाहतोऽपां वारुणमालभेत प्रजा वरुणो गृह्णीयाद्दक्षिणत उदञ्चमालभतेऽपवाहतोऽपां प्रजानामवरुणग्राहायेति ब्राह्मणमंयैतस्मिन्नुपप्रैषे मनसैव यं द्वेष्टि तमुपाकरोति । यद्यु वै न द्विष्यादाखुस्ते पशुरित्यनुदिशति । समानं कर्मा पर्यग्निकरणात्पर्यग्निकृतानामेतेषां पशूनां पश्चाद्दक्षिणार्ध्यान्पशूनुपक्रम्यैव स्थापयित्वा द्वावुपातिनीयाथेतरैर्व्यतिषजत्यथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते । तेषां वारुण उत्तरार्ध्यो भवत्याग्नेय उपचारत । आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्तस्तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय । तदृजुधा संतिष्ठते । ॥ १४ ॥ द्वितीयः ॥

अथ वै भवतीष्टं वपया भवत्यनिष्टं वशयाथ पात्नीवतेन प्रचरतीति । स यत्रैकादशिन्या अनुबन्ध्यस्येष्टं[3] वपया भवत्यनिष्टं वशया तज्जघनेन गार्हपत्यमौपसदायां वेद्याः

---

१ ब्राह्मणमंय वै भ॰ om. Be BU.

२ एव om MH Ms

३ ॰बंधस्ये॰ MH.

सम्प्रयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रियजुषा तूष्णीं चतुर्थं । पूर्वं परिधाहं परिगृह्णाति । करणं जपत्युद्धन्युद्धता-दग्नीभिस्त्रिर्हरति । यदग्नीभिस्त्रिर्हरत्यथापेण¹ गार्हपत्यं प्राचीनतस्य यूपावटं परिलिखति । समानं कर्मा स्रुचाऽऽसादना-त्सादयित्वा, स्रुचौ ऽपेण गार्हपत्यं प्राचीनतमुच्छ्रित्य तस्मिन्ना-स्ताऽऽञ्छागमजं पशुमुपाकरोति² । तं पर्यग्निकृतमुदञ्चमाज्येन संस्थां करोत्यथ चतुर आज्यस्य गृहीत्वाऽऽह त्वष्ट इत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह त्वष्टारमित्युपांशु यजेत्युच्चैर्वषट्कृते जुहोतीति नु वपायाः प्रतिचरति । चतुर एवाज्यस्य गृहीत्वाऽऽह त्वष्ट इत्युपांश्वनुब्रूहीत्युच्चैः । ॥ १५ ॥

अत्याक्रम्याश्राव्याह त्वष्टारमित्युपांशु यजेत्युच्चैर्वषट्कृते जुहोतीति नु पशुपुरोडाशस्य प्रतिचरति । चतुर एवाज्यस्य गृहीत्वाऽऽहाग्नय इत्युपांश्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याहाग्नि-मित्युपांशु यजेत्युच्चैर्वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोतीति नु पशुपुरोडाशस्य स्विष्टकृतः प्रतिचरति । चतुर एवाज्यस्य गृहीत्वाऽऽह त्वष्ट इत्युपांश्वनुब्रूहीत्युच्चै-रत्याक्रम्याश्राव्याह त्वष्टारमित्युपांशु यजेत्युच्चैर्वषट्कृते जुहो-तीति नु हविषः प्रतिचरत्याज्येन द्विर्जुहोति । पृषदाज्येन वनस्पतिमाज्यस्य स्विष्टकृतमाज्यस्येडामवद्यति । पृषदाज्येनानू-

१ यदग्निभिस्त्रिर्हरति found in MUH only

२ पशुम् om. Ms

याजान्यजति । सो ऽत्रैव पत्नीः संयाज्याश्चैव समिष्टयजूंषि[1] जुहोति । संतिष्ठते पात्नीवतः । ॥ १६ ॥ तृतीयः ॥

अथ वै भवति यो ऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमाधत्ते यो ऽग्निं चित्वा नर्ध्नोति स पुनश्चितिं चिनुत इत्यग्निं चित्वा व्यानानो द्वादशेष्टका उपकल्पयते ऽष्टौ याजुषीस्तस्रो लोकंपृणाः । स यत्र[2] होत्तरवेदिर्व्याघारितोपन्नप्तसंभारा[2] भवति तद्द्वाभ्यामात्मन्यग्निं[3] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । श्वेतमश्वमभिमृश्याष्टौ याजुषीरुपदधाति येनर्षयस्तपसा सत्रमासतेति । चतस्रो लोकंपृणा लोकं पृण छिद्रं पृणेत्यथ चितिकॢप्ताभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या गायत्र्यैतां चितिमभिमृश्य द्वाभ्यामवद्रवति वाश्च आसन्प्राणदा इति । तायते पशुबन्धो वाग्निष्टोमो वा । स प्रज्ञातः संतिष्ठते । ॥ १७ ॥ चतुर्थः ॥

[4]जर्वरो गृहपतिर्धृतराष्ट्र ऐरावतो ब्रह्मा दत्तस्तापसो होता पृथुश्रवा दूरेश्रवा[5] उद्गाता ग्लावश्चाजगावश्च[6] प्रस्तोतृप्रति-

---

१ ॰ष्टयजुर् MH.

२ Thus M, सचेहोत्त॰ D, यत्रावोत्त॰ the other MSS.

३ Thus M Bo B U, ॰व्यग्निं or ॰न्यग्निं Bo 7 D.

४ On the following cp Baudh gṛhs. III, adhy 10 and Pañc br XXV, 15

५ Found in M only

६ Thus M, ग्लाव॰ or गाव॰ the other MSS

र्तारौ शितिपृष्ठो मैत्रावरुणस्तक्षको वैशालेयो ब्राह्मणाच्छꣳस्युपरीतिसार्द्यः[1] सदस्यः शिखातिशिखौ नेष्टापोतारावरुणो[2] ऽरुणो[2] ऽच्छावाकश्चक्रपिशङ्गावाग्नीध्रावजिरो[3] माठेयः सुब्रह्मण्यो ऽर्बुदो ग्रावस्तुत्साण्ड उन्नेता पशुको[4] भुवगोपः कौतुस्तावध्वर्यू[5] अरिमेजयश्च जनमेजयश्चैते वै सर्पाणाꣳ राजानश्च राजपुत्राश्च खाण्डवे प्रस्थे सत्रमासत पुरुषरूपेण विषकामास्तेषां दशस्तोमान्यन्यान्यहान्यासन्दशस्तोमान्यन्यान्याचीर्यन्ति[6] च स यद्दशदशेति तस्मात्सर्पा दꣳशुका दꣳशुवीर्यास्तदेतल्लोके[7] पौचीयं पगव्यꣳ सत्त्रं य एतदुपयन्ति नैतान्सर्पा हिꣳसन्ति ॥ १८ ॥ पञ्चमः ॥

तपो गृहपतिरिरा पत्नी ब्रह्मैव ब्रह्मा सत्यꣳ होतामृतमुद्गाता भूतं भविष्यच्च प्रस्तोतृप्रतिहर्तारावृतं मैत्रावरुण ऋतवः सदस्या आर्तवा उपगातारस्तेजो ब्राह्मणाच्छꣳसी यशो ऽच्छा-

1 Thus (उपरीतिस्) M; उपरिमिस् Be, उपरिमीस् U, उपगरस् Be 7 D; उपरिमौस् B.

2 Uncertain; •वरुणोच्छा M, •वरुणारुणो Be Bo 7, वरुणारुणो BUD; the Pañc. br has अरुण आटः।

3 Thus M; •चक्रपिशं• Be 7 D, •चक्रपिशग आग्नीध्रोऽजिरो B Be U.

4 Thus M; उन्नेतापशुको Be (thus also the MSS. of the Gṛhya); •पशुगोपौ Be 7 BUD

5 Thus M, कौस्तुभाव• BU, कौस्तुव• Be, कौपिशाव• Be 7 D.

6 •हान्यासन्दश ... न्यन्यान्य• om M.

7 Thus M, दंशवीया• Be, दशवीया• U, दशवीया• B; in Be 7 the whole passage is left out.

वाकस्त्रिपिशापचितिश्च नेष्टापोतारावग्निरेवाग्नीध्रो वाक्सुब्रह्मण्यो भगो यावस्तुद्गुन्नेता बलं[1] ध्रुवगोपो[1] मनो ऽध्वर्युश्चक्षुः प्रतिप्रस्थाता सेदिश्चामनया[2] चेध्मवाहो दिष्टिर्विशास्ता[3] मृत्युः शमितैते वै विश्वसृजः प्रथमाः सत्त्रमासां चक्रिरे । तेषाꣳ शतꣳ समा दीक्षा आसञ्छतमुपसदः सहस्रं प्रसुतास्तदेषाभिवदति विश्वसृजः प्रथमाः सत्त्रमासत सहस्रसमं प्रसुतेन यन्तः। ततो मिषदमिषत्संबभूव ततो ह जज्ञे भुवनस्य गोपा इत्यग्निष्टोमैर्वाव[4] ते[4] तदीयुस्तदेतद्वृद्धमयनं[4] प्रजननं[5] यदग्निष्टोमाः । ॥ १९ ॥ षष्ठः ॥

कुण्डपायिनामयनेनैष्यन्तो दीक्षन्ते । पञ्च सर्वतो धुरास्तेषामियमेव प्रज्ञाता संवत्सरदीक्षा । समानं कर्मारम्भणीयादारम्भणीयेनेष्ट्वैन्द्रं पयो दोहयति सांनाय्यस्य वाहता तूष्णीं वाथ वसतीवरीः परिहृत्याविशिष्य[6] पयाꣳस्युपवसन्त्यथ[6] श्वो भूत आमावास्येन हविषा यजन्ते । तेन यन्त्यष्टाविꣳशति-

---

१ Thus M, बमंभु॰ U, बमभु॰ Be B, बमङु॰ Be 7 D.

२ Thus MUDBe 7; सेदौशामनया Be, सेदिमशामनयो B

३ विशिर् । ४ ० दिष्टिर् M, but cp. Pañc. br. XXV. 18 4

४ Thus M (reading only नदिपु॰ १८० नदीपु॰); ॰मैर्वाविवेतविदिरहे॰ Be, ॰मैर्वाविवेतविदिरहे॰ BU ॰मैर्वावञ्जतेभिरिदुहरे॰ D, ॰मैर्वावचेभियुहरे॰ Be 7.

५ Uncertain, प्रजन M, प्रजनि all the other MSS.

६ Thus corrected with some hesitation; cp. Karmānta-Sūtra III. 25, पर्याहृत्य पर्याप्ति विशिष्य M, but all the other MSS. पर्याहृत्यविशिष्य पयांस्यु॰ ।

रहानि । प्रायणीयारम्भणीयौ । स मासः[1] । पौर्णमासहविर्भिर्यन्ति मासं । वैश्वदेवहविर्भिर्यन्ति[2] मासं । वरुणप्रघासहविर्भिर्यन्ति मासꣳ । साकमेधहविर्भिर्यन्ति । मासꣳ शुनासीरीयहविर्भिर्यन्ति षड्विꣳशतिरहान्यभिजित्त्रयः[3] परःसामानः । स मासो । वैषुवतं । त्रयो ऽर्वाक्सामानो । ऽथ विश्वजित्त्र्यस्त्रिꣳशेन[4] यन्ति मासं । त्रिणवेन यन्ति मासमेकविꣳशेन यन्ति मासꣳ । सप्तदशेन यन्ति मासं । पञ्चदशेन यन्ति मासं । त्रिवृता यन्ति द्वादशाहानि । गोआयुषी । तानि चतुर्दश । चत्वार्यूर्ध्वं वैषुवतात्तान्यष्टादश । दशरात्रो महाव्रतं चातिरात्रश्च । स मासः । ॥ २० ॥

अथैषां कुण्डानि । ते यथैव विवेदसो[5] भवन्ति तदेषां कुण्डमथ यदन्योऽन्यमनुपरिसर्पं[6] याजयन्ति तदेषां कुण्डमथ यदृत्सरकैश्मश्रूभैचयन्ति[7] तदेषां कुण्डं । तेषां य एव ब्रह्मा स एव[8] ब्राह्मणाच्छꣳसी स पोताथ यो होता स एव मैत्रावरुणः यो ऽच्छावाको । ऽथ य उद्गाता स एव

---

१ Thus MB Be, Be 7 D present here a lacuna of two akṣaras.

२ UBD here and *infra* each time यर्न्ति i s o. यन्ति ।

३ षट्विꣳशति॰ i s o षड्विꣳशति॰ M

४ After विश्वजित् Be ins मास ।

५ Thus M, ॰वेदसौ the other MSS.

६ Thus M, परि om all the other MSS.

७ यत्सरकै॰ M

८ एव om all exc M

प्रस्तोता स प्रतिहर्ताथ यो ऽध्वर्युः स एव प्रतिप्रस्थाता स नेष्टाथ य आग्नीध्रः स एव ग्रावस्तुत्स[1] सुब्रह्मण्यः स उन्नेताथोपनिषद्यो[2] ऽग्निश्चतुर्होता[3] वायुः पञ्चहोता चन्द्रमाः षड्ढोता प्रजापतिः सप्तहोतासावादित्यो नवहोतैता वै देवता एतेनायनेनायꣳस्ता वै ता आर्ध्नुवन्त्सुवर्गं[3] लोकमायन्त्य एवं विद्वाꣳस एतेनायनेन यन्त्यृध्नुवन्त्येव सुवर्गं[4] लोकं यन्ति। ॥ २१ ॥ सप्तमः ॥

उत्सर्गिणामयनेनैष्यन्तो दीक्षन्ते । तेषामियमेव प्रज्ञाता संवत्सरदीक्षा । समानं कर्मा पृष्ठ्यात्षडहात्पृष्ठ्येन षडहेनेष्ट्वैन्द्रं पयो दोहयति सांनाय्यस्य वाहृता तूष्णीं वाथ वसतीवरीः परिहृत्याविप्रिय्य[5] पयाꣳस्युपवसन्त्यथ प्रातरहरुत्सृज्य[6] ज्योतिष आयतने प्राजापत्यं पशुमालभन्ते । तस्य पशुपुरोडाशमनुवर्तते ऽग्नये वसुमते पुरोडाशो ऽष्टाकपालो । माध्यंदिन इन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपन्त्यैन्द्रꣳ सांनाय्यꣳ । सा दिह्वविरिष्टिः संतिष्ठते । ऽस्यैतदैन्द्रꣳ सांनाय्यꣳ समुपह्वय भक्षयन्त्यथापराह्णे वैश्वदेवं द्वादशकपालं निर्वपन्ति वैश्वदेवं चरुं । ताभ्यां चरन्ति देवताप्रभृतीभ्यामिडान्ताभ्या-

---

१ All MSS. exc M ins. एव ।
२ Thus M Be 7, ॰निषद्यग्नि॰ Be D U, ॰निषद्योग्नि॰ D.
३ स्वर्गं all.
४ सुवर्गं M, स्वर्गं the other MSS
५ परिहृत्यवि॰ MSS, cp *supra* p 200, n. 6
६ अहर् om. Be 7 D.

मंथ[1] पशुना चरति मनोताप्रभृतिनेडान्तेनाथानूयाजैश्चरित्वा प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य वसतीवरीः परिहृत्य पयांसि विग्रिह्योपवसन्त्यथ श्वो भूते गवा प्रतिपद्यन्ते । त एवमेवैतेन[2] यन्तो[2] मासिमास्युत्सृजन्तः पञ्च ज्योतींष्युत्सृजन्त्यथामुत आवृत्तांश्चतुरस्[4] त्रयस्त्रिंशस्तोमानुत्सृजन्त्येकं[3] च ज्योतिरथ श्वो भूत आयुषैव प्रतिपद्यन्ते । ॥ २२ ॥ अष्टमः ॥

तपश्चितामयनेनैष्यन्तो[5] दीक्षन्ते । तेषामियमेव प्रज्ञाताग्निदीक्षा । समानं कर्मा संनिवापात्प्रसिद्धः संनिवापो । ऽथ प्रायणीयेन चरति । प्रायणीयेन चरित्वा पदेन चरति । पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्यैतां पञ्चहविषमिष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालमिति । तया सकृदेवेष्ट्वा नाद्रियेरन्नित्येक आहुरेतयैवाहरहः संवत्सरं यजेरन्नित्येके । प्रथमे ऽहन्सर्वैरन्वहमेकैकया[6] षष्ठे ऽहन्सर्वैरन्वहमेकैकया । प्रथमे द्वादशाहे ऽग्निं चिन्वीतेत्येक आहुस्तद्

१ °प्रभृतीभ्या° MD Be 7, °प्रभृतिभ्या° Be BU.
२ Thus M, एवनैषोद्यतो Be BU, एवतोत्यतो Be 7 D.
३ च om. M.
४ Thus M, त्रयस्त्रिंशाञ्ज्यो° the other MSS.
५ ताप° all exc M
६ °न्वासर्वै° M.

वा आङ्[१] रुद्रो वा एष यदग्निः । स एतर्हि जातो यर्हि सर्वश्चितः । स यथा वत्सो जात स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति । संवत्सर एवैवास्यातो भागधेयं । नैतस्याग्नां चनेयादित्युत्तमे[२] द्वादशाहे ऽग्निं चिन्वीतेत्येतदपरम् । ॥ २३ ॥

अथातो ऽहरहश्चयनस्यैव मीमांसा । सद्यश्चितिं निस्तिष्ठन्त्यथ लोकंपृणा इष्टका उपदधन्मासमेति । मासि तयादेवतं कुरुते । द्वितीये मासे पुरीषचितिः । सद्यश्चितिं निस्तिष्ठन्त्यथ सुच्छिन्नो ऽनु प्रकारं[३] मासमेति । मासि तयादेवतं कुरुते । तृतीये मासे वण्डचितिश्चतुर्थे[४] मासे पुरीषचितिः । पञ्चमे मासे मध्यमा चितिः । षष्ठे मासे पुरीषचितिः । सप्तमे मासे वण्डचितिरष्टमे[५] मासे पुरीषचितिर्नवमे मासे सप्त स्कन्ध्या उपदधात्या नक्षत्रेष्टकाभ्यो । दशमे मासे[६] पुरीषचितिरेकादशे मासे[६] संयच्च प्रचेताश्चेत्येता उपदधात्या विकर्णीद्वादशस्य[७]

---

१ स्वाङ्ग all exc. M.

२ My conjecture, between ॰ग्नां and नेया॰ M has a blank of one akṣara, all the other MSS ॰ग्नांजनेया॰ ।

३ Thus Be BU, सुच्छिन्नानुप्र॰ M Be 7 D

४ Thus M, (मासे)ऽस्वकुदंदचितिः Be, न्यदंदचितिः the other MSS. I am not sure about the meaning of वण्ड; it occurs repeatedly *infra* and once in the Karmānta. Perhaps वण्ड "without the tail (of the Agni)"

५ Thus M, वंद॰ the other MSS

६ मासि all exc M

७ Thus M D U, विकर्णदांदा॰ B Be 7 विकर्णांदा॰ Be

मासस्याष्टाविंशतिरश्मानि पुरीषमेकान्नत्रिंशे शतरुद्रीयꣳ श्वो भूते वसोर्धारा ॥ २४ ॥

अथोपरिष्टान्मासमित्याचक्षते मासस्य प्रथमे ऽहन्स्वयञ्चितिं निक्षिपन्ति यतयादेवतꣳ[1] ससूददोहसं [2]मासं प्रवर्ग्योपसद्भ्यां यन्ति द्वितीयस्य मासस्य प्रथमे ऽहन्पुरीषचितिः मध्यचितिं निक्षिपन्ति यतयादेवतꣳ ससूददोहसं द्वितीयं[3] मासं प्रवर्ग्योपसद्भ्यां यन्ति तृतीयस्य मासस्य प्रथमे [4]ऽहन्वष्टचितिश्चतुर्थस्य मासस्य प्रथमे ऽहन्पुरीषचितिः पञ्चमस्य मासस्य प्रथमे ऽहन्मध्यमा चितिः षष्ठस्य मासस्य प्रथमे ऽहन्पुरीषचितिः सप्तमस्य मासस्य प्रथमे ऽहन्वष्टचितिरष्टमस्य मासस्य प्रथमे ऽहन्पुरीषचितिर्नवमस्य मासस्य प्रथमे ऽहन्नाम स्कन्ध्या उपदधात्या नक्षत्रेष्टकाभ्यो दशमस्य मासस्य प्रथमे ऽहन्पुरीषचितिरेकादशस्य मासस्य प्रथमे ऽहन्संयच्च प्रचेताश्चेत्येता उपदधात्या विकर्णीद्वादशस्य मासस्य प्रथमे ऽहन्पुरीषचितिरेकान्नत्रिंशे शतरुद्रीयꣳ श्वो भूते वसोर्धारा ॥ २५ ॥

अथ पुरस्तान्मासमित्याचक्षते मासं प्रवर्ग्योपसद्भ्यां यन्ति

---

१ Thus all, not ०देवमाꣳ, also *infra*.

२ Be 7 BU ms. द्वितीयं।

३ om B

४ The whole passage from ऽहन्व० up to मासस्योत्तमे (p. 305, 4) left out by all exc. M

मासस्योत्तमेऽहन्मध्यचितिं निस्तिष्ठन्ति सतयादेवतꣳ ससूददोहसं। द्वितीयं मासं प्रवर्ग्योपसद्भ्यां यन्ति। द्वितीयस्य मासस्योत्तमेऽहन्पुरीषचितिः। मध्यचितिं निस्तिष्ठन्ति सतयादेवतꣳ ससूददोहसं। तृतीयस्य मासस्योत्तमेऽहन्पण्डचितिश्चतुर्थस्य[१] मासस्योत्तमेऽहन्पुरीषचितिः। पञ्चमस्य मासस्योत्तमेऽहन्मध्यमा चितिः। षष्ठस्य मासस्योत्तमेऽहन्पुरीषचितिः। सप्तमस्य मासस्योत्तमेऽहन्पण्डचितिरष्टमस्य[२] मासस्योत्तमेऽहन्पुरीषचितिर्नवमस्य मासस्योत्तमेऽहन्सप्त स्कन्ध्या उपदधात्या नचचेष्टकाभ्यो। दशमस्य मासस्योत्तमेऽहन्पुरीषचितिरेकादशस्य मासस्योत्तमेऽहन्संयच्च प्रचेताश्चेत्येता उपदधात्या विकर्णींद्वादशस्य[३] मासस्याष्टाविꣳशेऽहन्पुरीषमेकान्नत्रिꣳशे[४] शतरुद्रीयꣳ। श्वो भूते वसोर्धारा। ॥ २६ ॥

अथात उत्थानानामेव मीमाꣳसाभिजितेष्टोत्तिष्ठेयुरित्येतद्ब्राह्मणसंपन्नमपि वाभिजितेष्टाथैताꣳ[५] सवनेष्टिं [६]निर्वपन्त्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपाल-

---

१ Thus M Be 7, ॰स्कन्द॰ B, ॰स्कन्दं॰ Be.

२ Thus M Be 7, ॰स्कन्दंचि॰ B, ॰स्कन्दंचि॰ Be

३ Thus M, the other MSS as *supra* (p. 303, 13)

४ ॰विꣳशे Be 7 D

५ Thus MU, ॰ष्टाथैताꣳ B Be, ॰ष्टाथैता D, ॰ष्टयेता Be 7.

६ Thus M Be BU, निर्वपत्या॰ Be 7 D

मिति । तया समस्तया वा विहृतया वा प्रतिपद्यन्ते । वसतीवरीषु मृत्पिण्डमन्ववधायाहरन्त्वसतीवरीः[1] परिहरमाणा यन्त्येष संवत्सरसंपन्नं ब्रह्मणोऽयनमित्याचक्षते[2] । चतुरो मासो दीक्षाभिर्यन्ति चतुर उपसद्भिश्चतुरो मासः प्रसुतास्तदाहुः क एतावन्तमन्त्यमाधारणं कुर्वीतान्तेवासिषु वोपहवमिच्छेत[3] दक्षिणावता वैनं याजयेयुरिति । सो ऽन्तेवासिषु[4] वैवोपहवमिच्छते[4] दक्षिणावता वैनं याजयन्ति । ॥ २७ ॥ नवमः ॥

अथ वै भवति छन्दश्चितं चिन्वीत पशुकाम इति । स छन्दश्चिच्च क्व चाहुतिरागच्छति[5] जुहोत्येव तत्राथ[6] यदन्यदाहुतिभ्यः शरीरवद्यजुरेव तत्र जपति यजुरेव रशनयोर्यजुरश्वगर्दभयोर्यजुरुख्यायै प्रहञ्जने[7] । यजते[7] वायव्येन पशुना । दीक्षते । विमायाग्निं परिखायापस्यायतने यजुरेव[8] तत्र[8] जपति यजुः सर्वासामिष्टकानामुपधाने । जुहोति शतरुद्रीयं । कुरुते वसोर्धाराम् । श्येनचितं चिन्वीत सुवर्गकाम इत्ययमे-

---

१ ॰मन्ववधाय॰ MB Be U, ॰मन्वाधाय॰ Be 7 D.

२ Thus M; ब्राह्मणायन॰ the other MSS.

३ वा om Be BU.— इच्छेते i. s. o. इच्छेत Be 7 D

४ Thus M Be; ॰वुवोपहव॰ Be 7 D, ॰वूपहव॰ BU.— इच्छेते i. s. o. इच्छते all exc. M

५ चाहुतीरागच्छंति M.

६ Thus M Be BU; तद् Be 7 D.

७ प्रहंजनेयजते M, प्रहंजनेयजते B Be, प्रहञ्जेय DU

८ ॰रेवम B Be U.

वैष[1] श्येनचित्कङ्कचितं[1] चिन्वीत यः कामयेत शीर्षण्वानमुष्मिंल्लोके स्यामित्येतस्यैव सतो ऽरत्निमात्रेण प्राक् शिर इव निरूहति । स तथा विमितो भवति यथा न बहिर्वेदि यूपः स्यादलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकाम इत्येतस्यैव सतो ऽरत्निमात्रेण पक्षावणीयांसौ भवतस्तावन्मात्रेणापिपक्षौ वरीयांसौ । तौ मनागपनतौ परोऽणीयांसौ[2] भवत । एकैकास्त्वचा[3] सीतां कृषति । प्रउगचितं चिन्वीत भ्रातृव्यवानित्येतस्यैव सतः समुद्गृह्यांसौ[4] प्रागायातयति । स तथा विमितो भवति यथा न बहिर्वेदि यूपः स्यादुभयतःप्रउगं चिन्वीत यः कामयेत प्रजातान्भ्रातृव्यान्नुदेय प्रतिजनिष्यमाणानित्येतस्यैव सतः समुद्गृह्यैव श्रोणी प्रत्यगायातयति । स तथा विमितो भवति यथा न बहिर्वेदि यूपः स्यात् । ॥ २८ ॥

रथचक्रचितं चिन्वीत भ्रातृव्यवानिति विज्ञायत । आकृतिविकारः शब्दसंयोगाद्यावानग्निः[5] सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां कृत्वानुशर्करमन्तःशर्करमिष्टकाः परिचिनोत्यथान्ततो[6] ऽयान्तरत । एवमेवा[7] स्वयमातृण्णाया । अथा-

---

1 Thus M only, इत्युपमावैष (or इत्यथायमेवैष) श्येनचितिः the other MSS

2 परो om all exc. M

3 एकैकामव M, त्वचा om. Be

4 Thus M Bo BU; समुद्गृह्यैव श्रोणी Be 7 D.

5 Thus MBU; शुभसंयो॰ Be, श्वाषा॰ संयो Be 7 D

6 Thus MD Be 7, ॰यांतरतो Be U, B om

7 Thus M, एवमेव the other MSS

मितः स्वयमातृण्णां । मध्ये नाभिमिव करोति । तस्या [1]अनुदिशमवान्तरदिशमरानिव[2] नेमिमिवेष्टका[2] आयातयति । स एष रथचक्रचित्प्रौगवतः परिक्ष्यो । द्रोणचितं चिन्वीतान्नकाम इत्येतस्यैव सतो ऽरत्निमात्रेण प्रागोष्ठमिव निरुह्यार्थ[3] मध्ये निम्नमिव[4] करोति । स एष द्रोणचिदन्नकामस्य परिक्ष्यः । समूह्यं चिन्वीत पशुकाम इति विज्ञायते । पुष्करपर्णꣳ रुक्मꣳ हिरण्मयं पुरुषꣳ स्रुचावित्येतत्सञ्चयमित्याचक्षते[5] । कुरुत एव तदर्थो पुरीषस्यैवेष्टका[6] आयातयति । स एष समूह्यः पशुकामस्य परिक्ष्यः । परिचाय्यं चिन्वीत ग्रामकाम इत्यनुशर्करमन्तःशर्करमिष्टकाः परिचिनोत्यर्थान्तो[7] ऽयान्तरत[7] । एवमेवा[8] स्वयमातृण्णाया । अथाभितः स्वयमातृण्णामिष्टकाः परिचिनोति । स एष परिचाय्यो ग्रामकामस्य परिक्ष्यः ॥ २९ ॥

---

१ °मवान्तरदिश° M Be, °मवांतरदेश° B Be 7 UD.

२ °मराग्ननेमिमिमिवेष्टका MSS. exc M, which has °मरानिवनेमिमिवेष्टका ; perhaps an allusion to R V. I. 32, 15, TBr. II. 8 4. 3

३ °यं । s. o. °य all exc M.

४ Thus M Be ; ग्निमिव the other MSS

५ °तत्संचय° M.

६ पुरुष° M

७ Thus M, °यांतमोयांतम B Be ; °योतयोखांतर Be 7 D, °यांततोयोतयांतत U

८ Thus M, एवमेव the other MSS

श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति । षट् प्राञ्चः पुरुषास्त्रयः पुरस्तात्तिर्यञ्चौ[1] द्वौ पश्चात्तिर्यञ्चौ स आत्मा । तस्य मात्रा । यदि ग्रीवदघ्नं पुरस्तान्नाभिदघ्नं पश्चाद्यदि नाभिदघ्नं पुरस्ताज्जानुदघ्नं पश्चाद्यदि जानुदघ्नं पुरस्ताद्गुल्फदघ्नं पश्चाद्यदि गुल्फदघ्नं पुरस्तात्समं भूमेः पश्चात्स एष श्मशानचित्पितृलोककामस्याथ हैष कूर्मचिद्ब्राह्मणो मध्य उत्पृष्ठः[2] परिलिख्य । एतस्यैव मतो ऽरविमात्रेण प्राक् शिर इव निरूहति । तस्यावान्तरदिशं पादानिवेष्टका आयातयति । स एष कूर्मचिद्ब्राह्मणो मध्य उत्पृष्ठः परिलिख्यः । ॥ ३० ॥ दशमः ॥

सौत्रामण्या यक्ष्यमाणो भवति । स उपकल्पयते रोहितं चर्मानडुहꣳ सीसं च क्लीबं च शष्पाणि च तोक्माणि[3] च सौहीन्नमꣳ[4] चूर्णकृतं[5] त्रीणि नानावृक्ष्याणि पात्राणि त्रयान्सक्तूꣳस्त्रयाणि लोमानि यूपं च श्येनपत्त्रं च गर्भिणीं वडबामासन्दीमिण्ड्वं कुम्भं कारोतरं विशाख्यौ दीर्घवꣳशाꣳ शिक्यꣳ शतातृण्णाꣳ शतमानꣳ हिरण्यꣳ सतं च वालं च ब्राह्मणमाङ्गत्या उच्छेषणस्य पातारं यदि ब्राह्मणं न विन्दति

---

१ •तिर्यञ्चौ all, but cp J As. Soc of Bengal, 1875, p 265

२ Thus M Be BU, उत्पृष्ठः Be 7, उत्पृष्ट D

३ तोक्माणि M and thus also all the MSS. of the gṛhyasutra 8; तोक्मानि the other MSS

४ सायुश्रू॰ M

५ •कृता all exc. MT

वल्मीकवपामथासावास्येन वा हविर्धाना नयन्ते वायेण शालाद् रोहिते चर्मणि सुरासोमः सङ्ग्रन्त्रः[1] शेते । तं दक्षिणतः क्लीब उपास्ते । सीसेन क्लीबाच्छष्पाणि क्रीणातीदं तवेदं ममेति । क्रीतः सुरासोम इत्यथैनमादाय पूर्वया द्वारा शालां प्रपाद्य जघनेन गार्हपत्यमुपसादयत्यथैतेषां व्रीहीणामर्धानवहन्त्यथे-तरान्गार्हपत्ये[2] एककपालमधिश्रित्य[2] भर्जन्ति[3] । तेषां ये फलन्ति लाजास्ते[4] भवन्त्यथ ये[5] उ[5] न फलन्ति तास्तर्यो । गार्हपत्ये नवां कुम्भीमधिश्रित्य प्रोदकमिवौदनं[6] श्रपयन्त्य-थैनं विस्राव्य कठिने[7] वा पाजके वा विषजन्त्यथैनाञ्छ्ग्णान-बध्नन्ति[8] । तेषां यानि च क्षुद्राणि याश्च तर्यस्ता उल्मुके संप्रकिरन्ति । तं मासर इत्याचक्षते । अथ मानमादाय विमिमीत[9] एकं शष्पाणां द्वे तोक्मानां[10] त्रीणि लाजानां

---

१ Thus (संग्रन्त्रः or संतंनः) MT Be U (pr. m.), संपंनः Bc Tr U (sec. m.), समन H, Bhav. periphr सादितः।

२ Thus Be Tr; •पत्येकपाल• U; •पत्य एकपाल• T; MHB om. एक•, but cp. supra XIII. 25 (p. 136 2).

३ Thus M, as supra l. c., भर्जयन्ति the other MSS.

४ ते लाजा MT Tr.

५ Thus MT Tr, ये (omitting उ) the other MSS

६ •मिवौदन MH Be, •मिवौदनं Tr TBU

७ Thus T Tr H, कठिनं MB Be, U corrupt

८ Thus M, भुग्नान Tr, भुग्नान् or शुग्नान् the other MSS; Bhav. once, भुग्नान्, once भुग्नान्।

९ वि om. M Tr T.

१० Thus Be, तोक्मानां the other MSS

चत्वारि नग्नहोरित्येतमोदनं चूर्णैरनुप्रकिरन्मासरेणावोचन्संपादयति[1] ॥ ३१ ॥

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन सृजामि सꣳ सोमेनेत्यथैतामासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधात्यासन्द्यामिण्ड्वमिण्ड्वे कुम्भं कुम्भे कारोतरमवदधात्यथैतमोदनमभितः कारोतरं परिचिनोत्यथैनमपिधायाभिमृशति सोमो ऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति । तिस्रः सꣳसृष्टा वसति । तिस्रो हि रात्रीः क्रीतः सोमो वसतीति ब्राह्मणमथ तिसृषु व्युष्टासु तायते त्रिपशुर्वा चतुष्पशुर्वा पशुबन्धो । ऽथास्यैषा पूर्वेद्युरेव सौत्रामणिकी, वेदिर्विमिता भवति । तां परिस्तीर्य स्तम्भयजुर्हरति ॥ ३२ ॥

इदमेव प्रसिद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथ चात्वालस्यावृता चात्वालं परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्थाप्य यूपावटं[2] चात्वालाग्नेरावृता[2] द्वावग्नी प्रणयत आहवनीयादेवाध्वर्युरन्वाहार्यपचनात्प्रतिप्रस्थाताग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपिता तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादये-

---

१ ०नुप्रकारं 180 ०नुप्रकिरन् M T, संपादयति M (pr m), संपावयति M (sec m)

२ यूपा० चात्वा om. M Tr

भावर्हिरुपसाद्य स्रुवꣳ स्वधितिꣳ स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यग्रहणीं पत्नीꣳ संभार्याज्येन च दध्ना चोदेहि प्रतिप्रस्थातः सुरासोमस्य विह्वीत्यध्वर्युरेव प्रसिद्धं पाशुबन्धिकं कर्म चेष्टत्यथ प्रतिप्रस्थाता सुराꣳ[1] संपवय्य[1] सग्रहामादाय पूर्वया द्वारोपनिर्हृत्यान्तर्वेद्यामासादयति ॥ ३३ ॥

यावदेवाध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थाता सत उदीचीनदशेन वालेन सुरां पुनाति पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता । वारेण शश्वता तनेति वायुः पूतः पवित्रेणेति यदि सोमातिपवितो भवत्यथादत्ते पर्णमयं पात्रं तेन गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामीति बर्हिषी अन्तर्धाय कलसक्तुभिश्च[2] सिꣳहलोमभिश्च श्रीणात्यपोद्धृत्य बर्हिषी श्येनपत्रेण परिमृज्य सादयत्येष ते योनिरश्विभ्यां त्वेत्यथादत्ते नैयग्रोधं पात्रं तेन गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतोऽसि सरस्वत्यै त्वा जुष्टं गृह्णामीति बर्हिषी अन्तर्धाय बदरसक्तुभिश्च व्याघ्रलोमभिश्च श्रीणात्यपोद्धृत्य बर्हिषी श्येनपत्रेण परिमृज्य सादयत्येष ते योनिः सरस्वत्यै त्वेत्यथादत्त आश्वत्थं पात्रं तेन गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति

१ सुरासोमस्यपवय्य M

२ च om here and every time *infra* B Be H

बर्हिषी अन्तर्धाय कर्कन्धुसक्तुभिश्च वृकलोमभिश्च श्रीणात्यपोद्धृत्य बर्हिषी श्येनपत्त्रेण परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा सुत्राम्ण इति । ॥ ३४ ॥

ताञ्जघनेन स्रुग्दण्डान्प्राचो वोदीचो वायातयत्यथैताꣳ सुराꣳ सप्रैकामादाय दक्षिणमग्निमुपसꣳसर्पति[1] । तमभितो[2] गर्तौ[2] खानयति । तदुपसादयति विशाख्यौ[3] दीर्घवꣳशाꣳ शिक्यꣳ शतातृण्णाꣳ शतमानꣳ हिरण्यꣳ सतं च बालं चाथ दक्षिणमग्निमपरेण पुराणभस्मनः[4] खरं करोति । तदुपसादयति ब्राह्मणमाहृत्या उच्छेषणस्य पातारं । यदि ब्राह्मणं न विन्दति वल्मीकवपामथाप उपस्पृश्य यूपस्यावृता यूपमुच्छ्रयति । स्वर्वन्तं यूपमुत्सृज्याथैतान्पशूनुपाकरोत्याश्विनं धूम्रꣳ सारस्वतं मेषमैन्द्रमृषभं । बार्हस्पत्यं पशुं चतुर्थं यदि सोमातिपवितो भवति । तेषां प्रसिद्ध वपाभिश्चरित्वाश्विनसारस्वतावध्वर्युरादत्त । ऐन्द्रं प्रतिप्रस्थाता । ग्रहावादायोपोत्तिष्ठन्नाहाश्विभ्याꣳ[5] सरस्वत्या इन्द्राय सुत्राम्णे सुराम्णाꣳ[6] सोमानामनुब्रूहीति । युवꣳ सुराममश्विनेत्येतामन्वाहात्याक्रम्याश्रा-

---

१ Thus M Tr TBH सर्पति Be U

२ Thus (with ग) B Be (pr. m) H, -भितः क॰ MT Tr, ॰भितो क॰ Be (sec. m)

३ विशाख्यै M

४ Thus MT Tr, भस्मना B Be U H

५ Thus M Tr, उपतिष्ठन् 1 s o उपोत्तिष्ठन् the other MSS.

६ Thus (cp Āp. XIX. 2. 18) M Tr, सुराम B H Be U, T def.

व्याघ्राश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सुराम्णः सोमान्प्रस्थितान्प्रेष्येति। मैत्रावरुणो होता यक्षदश्विना सरस्वतीमिन्द्रꣳ सुत्रामाणमिति। पुत्रमिव पितरावश्विनोभेति यजत्यथाग्ने हविरास्ये त इति वषट्कृते जुहोति। ॥ ३५ ॥

यस्मिन्नश्वास ऋषभास उक्षण इत्यनुवषट्कृते हुत्वाश्विनस्य मङ्खावꣳ सारस्वते ऽवनयति। सारस्वतस्य मङ्खावमैन्द्रे। तं ब्राह्मणो भक्षयति नाना हि वां देवहितं यदचेति द्वाभ्यां। [1]यदि ब्राह्मणं न विन्दति वल्मीकवपायामवनयत्येतेनैव मन्त्रेणाथैतानि पात्राणि वल्कसस्य[2] पूरयित्वा पर्णमये श्येनपत्त्रमवगूहति। नदिगाख्यावुच्छ्रित्य दक्षिणाग्नौ वंशं प्रोहति वंशे शिक्यꣳ सजति[3] शिक्ये शतातृण्णाꣳ शतातृण्णायां वालं वाले शतमानꣳ हिरण्यमथैताꣳ सुराꣳ सम्परेकामादाय शतातृण्णायाꣳ समवनयति सोमप्रतीकाः पितरस्तृप्णुतेति। क्षरति[4] शतातृण्णेत्युपतिष्ठन्ते[5] पवमानः सुवर्जन इत्येतेनाष्टर्चेनाथ यदि सोमातिपवितो भवति पितॄणां याज्यानुवाक्याभिरुपतिष्ठन्त उदीरतामवर उत्पराम आहं पितॄन्सुविद-

---

१ अथ ins. MT Tr.

२ Thus H वल्कसस्य MTB Be U ; बिलसस्य Tr

३ Thus M Tr सजयति T, सचति B Be U, सचयति H.

४ Thus Tr Be HU (sec m.), क्षरि (sic) B, चरति U (pr. m.) ; क्षरति MT

५ Plural T Tr U (pr. m.), sing. the other MSS

चाꣳ अविक्षीदं पितृभ्यो नमो अस्त्वित्यध्वर्युर्होता ब्रह्मा त उपतिष्ठन्ते । यत्रैव शताहृषां धारयति तच्चिद्धाति प्रतिष्ठित्या इति ब्राह्मणं । तदेवैनां निधाय दक्षिणतो निदधात्यथैतानि पात्राणि पुराणभस्मनः खरे सादयति ॥ ३६ ॥

पितृभ्यः स्वधाविभ्यः स्वधा नमः पितामहेभ्यः स्वधाविभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधाविभ्यः स्वधा नम इत्यथैव गर्भिणीं वडबां ददात्यथाप उपस्पृश्य बार्हस्पत्यस्य पशुपुरोडाशं याचति । तेन प्रचरति[1] देवताप्रभृतिनेडान्तेनाथ पशुभिश्चरति मनोताप्रभृतिभिरिडान्तैरथैतान्पुरोडाशान्याचत्यैन्द्रमेकादशकपालꣳ सावित्रं द्वादशकपालं वारुणं दशकपालमिति । तैश्चरति देवताप्रभृतिभिरिडान्तैरनूयाजैश्चरित्वा प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूꣳषि जुहोति यज्ञ यज्ञं गच्छैष ते यज्ञो यज्ञपते देवा गातुविद इत्यथैतमवभृथꣳ सꣳसादयन्ति[2] यत्किंचित्सुरालिप्तं भवति तत्सह हृदयशूलानि भवन्त्येतत्समादायान्तरेण[3] चात्वालोत्करावुदङुपनिष्क्रामन्ति ॥ ३७ ॥

द्वे सृती अशृणवं पितृणामह देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वं भुवनꣳ समेत्यन्तरा पूर्वमपरं च केतुमिति ।

---

१ चरति M Tr

२ Thus M Tr Be , ॰सादयति HBU , संप्रकिरंति T

३ भवंत्ये॰ HU , भवंतीत्ये॰ M , भवसौत्ये॰ T भवत्ये॰ B Be

प्रसिद्धम् हृदयशूलैस्तरिलाथैलानि पात्राण्युदकान्ते पराञ्चि सादयति यस्ते देव वरुण गायत्रच्छन्दाः पाशो ब्रह्मन्प्रतिष्ठितः। तं त एतेनावयज इति पर्णमयं ' यस्ते देव वरुण त्रिष्टुप्छन्दाः पाशः क्षत्रे प्रतिष्ठितः। तं त एतेनावयज इति नैयग्रोधं ' यस्ते देव वरुण जगतीछन्दाः पाशो विक्षु प्रतिष्ठितः। तं त एतेनावयज इत्याश्वत्थं ' यस्ते देव वरुणानुष्टुप्छन्दाः पाशः पशुषु प्रतिष्ठितः। तं त एतेनावयज इति शताह्वम् ' तूष्णीम् सतं वालं च ' प्रसिद्धो ऽवभृथः ' साम चैव नाह देवीराप एष वो गर्भ इति चाथाप्रतीक्षमायन्ति वरुणस्यान्तर्हित्यै ' प्रपथे समिधः कुर्वीत एधो ऽस्येधिषीमहीत्येत्याहवनीये ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषम् रसेन समसृक्ष्महि। पयस्वाम् अग्न आगमं तं मा सम्सृज वर्चसेत्यथ कुसीदेन सकृद्धोमेन चरत्यथ देवता उपस्थाय यूपमुपतिष्ठते। संतिष्ठते सौत्रामणी[१] ' ॥ ३८ ॥ एकादशः ॥

[२]वेदमधीत्य स्वाध्यायमुपकल्पयत एरकां चोपबर्हणं च

---

१ सौत्रामणि all exc M, at the close of this adhyāya T adds इति चरकसूत्रम्।

२ The text of adhyāya 12 is based on M(ackenzie), cp. Preface, p II, and on the following MSS of the Gṛhyasūtra: Madras], on the whole a very good copy in grantha, E(gmore), nāgarī copy of grantha original, T(anjore), grantha, breaking off after the words चरतो स्तोत्रकारेण in kh 41 H(aug), B(enares), these two closely related and on the whole rather bad. I made

नापितं च क्षुरं च दारूणि चोपस्तरणं च इक्कलाꣳश्च दन्तधावनमुष्णाश्चापः शीताश्च सर्वसुरभिपिष्टं[1] चाञ्जनं च स्रजं चादर्शं चाहतं च[2] वासः प्रावरणं[3] च वसनान्तरं बादरं मणिꣳ सुवर्णोपधानꣳ सूत्रं च[4] प्रवर्तौ च दण्डं चोपानहौ च[5] छत्त्रमानडुहं चर्म सर्वरोहितमित्येते ऽस्य संभारा उपक्लृप्ता भवन्ति । स्नानस्य मीमाꣳसा । रोहिण्याꣳ स्नायादित्येकं । प्राजापत्यं वा एतन्नक्षत्रं । तदस्य प्राजापत्य एव नक्षत्रे स्नातं भवत्यथो सर्वाँल्लोकान्रोहाणीति[6] । तिष्ये स्नायादित्येकं । बार्हस्पत्यं वा एतन्नक्षत्रं । तदस्य बार्हस्पत्य एव नक्षत्रे स्नातं भवत्यथो बृहस्पतिप्रसूतो ऽश्नानीत्युत्तरयोः फल्गुन्योः स्नायादित्येकं । भाग्यं वा एतन्नक्षत्रं । तदस्य भाग्य[7] एव

---

also use of G (gṛhyaprayoga MS Burnell cvii, which cites often literally passages of the Gṛhya), Prm (Prayogamālā printed at Bombay), Pś (Prayogaśikhāmaṇi, No 3108 of the Leiden collection), Ks (Kanakasabhapati's kārikā, Burnell cix) and Pc (Prayogacūḍāmaṇi, Telugu MS, collection Mackenzie No 21). Adhyāya 13 is contained only in M and E The two adhyāyas 12 and 13 are now also printed in the Grantha Edition of the Baudhāyana smārtasūtra, designed by me as "Ed"

१ सार्व॰ EG

२ only in Ed. TE.

३ Thus EHG, प्रावारं MT, प्रपार Ma प्रवारण Ed

४ om HBM (see m)

५ om. THB Ma

६ Thus B, रोहणीति i.s.o. रोहाणीति the other MSS. and Ed

७ भाग्य TM Ma

नक्षत्रे स्नातं भवत्यर्थो भग्यो ऽस्नानीति । हस्ते स्नायादित्येकम् । सावित्रं वा एतन्नक्षत्रं । तदस्य सावित्र एव नक्षत्रे स्नातं भवत्यर्थो सवितृप्रसूतो ऽस्नानीति । चित्रायाम् स्नायादित्येकमैन्द्रं वा एतन्नक्षत्रं । तदस्यैन्द्र एव नक्षत्रे स्नातं भवत्यर्थो चित्रो ऽस्नानीति । विशाखयोः स्नायादित्येकमैन्द्राग्नं वा एतन्नक्षत्रं । तदस्यैन्द्राग्न एव नक्षत्रे स्नातं भवत्यर्थो विशाखो ऽस्नानि[1] प्रजया पशुभिरित्येतेषामेकस्मिन्नापूर्यमाणपक्षे[2] पुरादित्यस्योदयाद्व्रजमभि प्रपद्यते । नैनमेतदहरादित्यो ऽभितपेत्तदह[3] स्नातानामु[3] ह[4] वा[4] एष एतत्तेजसा यश्यमा तपत्यन्तर्लोम्ना चर्मणा व्रजमभिविशन्ति[5] । पूर्वार्धमध्ये व्रजस्याग्निमुपसमाधाय संपरिस्तीर्याहरन्त्येतान्संभारान्सहैव सर्वान्त्सह[6] सर्वाणि मानुषाणीत्येतस्माद्ब्राह्मणाद्दक्षिणतो[7] ब्राह्मण[8] उपविशन्त्युत्तरत[8] उदपात्रं पालाशीं च समिधं निदधात्य-

---

१ Thus HB, स्नानीति the other MSS. and Ed.

२ Thus MB, ॰त्येषामेकस्मिन्॰ H, ॰त्येकेषामेकस्मिन्॰ Ma TE and Ed

३ Thus all exc. Ma and Ed, which have तदहरु i.s.o. तदह and E· ॰तपेन्मध्यंदिनंतदहरु स्नाता॰; Bhāradvāja also has the reading accepted by me on the authority of the best MSS (= तदहः-स्नातानाम् as a compositum ?)

४ ॰मु ह वा only MT, ॰मुषा वा Ma, ॰मुखं the other MSS., मुख वा Ed

५ ॰भिविशन्ति MSS (and Ed) exc E, which om. the second prepos., cp. *supra* XI 10 (p. 79, 4), XVI. 20 (p. 267, 1), XVIII. 18.

६ Thus MT, सर्वाणि i.s.o. सर्वान् HB; संभरन्ति i.s.o. सर्वान् E Ma., Ed.

७ Before दक्षिणतो Ma ET and Ed. ins. इध्मेषु।

८ Thus M Ma HB; ब्राह्मणमुपवेशयन्त्यु॰ E; ब्रह्माणमुपविशन्त्यु॰ T.

परेणाग्निमुदीचीनप्रतिवेषणामेरकाꣳ साधीवासामास्तीर्य[1] तस्यां प्राङ्मुख उपविशत्युत्तरतो नापित । उत्तरत उपबर्हणमामध्यंदिनं भिक्षां दद्यादपीह[2] गां पचेदपि वेदस्य[3] स्यादचैतां[3] पालाशीꣳ समिधमाज्येनाक्त्वा मध्यंदिने ऽभ्यादधाति ॥ ३८ ॥

इमꣳ स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया । भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहेत्यथैरकायामुदीचीनशिरा निपद्यते त्र्यायुषं[4] जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य[4] त्र्यायुषमृषीणां[4] त्र्यायुषं[4] यद्देवानां त्र्यायुषं[4] तन्नो अस्तु त्र्यायुषमित्युप्यमानमनुमन्त्रयते[4] शिवा मे भवथ सꣳस्पृश इति । क्षुरमभिमन्त्रयते क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीरित्युप्यमानमनुमन्त्रयते यत्क्षुरेण वर्चयसि[5] वप्ता वपसि केशश्मश्रु वर्चय मे मुखं मा म आयुः प्रमोषीरिति । सम्रूद्वेवापि वपते ऽथोपपद्यावथ केशान्यथोपपादमितराण्यङ्गान्यनिशमाद्यपा[6] जरमा[6] पूर्वं आयुषि प्रयान्ति पूर्वं आयुष्यस्मादा भवन्ति

[1] Thus Ma TE, Ed , °मुपस्तीर्य M , HB om. this passage

[2] °इपिह Ed.

[3] Thus E Ma, वेदस्य स्याद° TH , वेदस्य स्याद° B; वेदस्याद° M , चेदस्यस्याद° Ed.

[4] Thus EM Ma G, Ed., त्रियायुष° THB Prm

[5] Thus all exc. E · वर्चयसि and T वर्चसि ।

[6] Or should we write °जरसा° ? What may be the sense of these words ?

य एवं विद्वाꣳसो लोमानि वापयन्ते । स यदि लोमानि वापयिष्यमाणः स्यात्केशश्मश्रु वापयित्वा लोमानि सꣳहृत्य नखानि निकृन्तयीतार्थैतानि समुच्चित्य ब्रह्मचारिणे प्रयच्छन्नाहेमानि हृत्वा दर्भस्तम्बे वोदुम्बरमूले वा निधत्तादिति । तानि स तत्र निदधात्यपरेणाग्निं प्राङ्मुख उपविश्य मेखलां विस्रꣳसयत इमां विष्यामि वरुणपाशमिति । यो ऽस्य तत्र[1] रातेः[1] पुत्रो ऽन्तेवासी वा भवति तस्मै प्रयच्छन्नाहेमाꣳ हृत्वा न्यग्रोधे वोदुम्बरमूले वा निधत्तादिति । ताम्[2] स तत्र निदधातीदमहममुष्यामुष्यायणस्य क्षुधा पाप्मानमवगूहाम्युत्तरस्य[3] द्विषन्न इति । वृकलैः प्रधाव्य दन्तान्विधावयते[4] ऽन्नाद्याय व्यूहध्वं सोमो राजायमागमत् । स मे मुखं प्रमार्क्ष्यते यशसे च भगाय चेत्युभयीरपः संनिषिञ्चत्युष्णासु शीता आनयति दैवमानुषस्य[5] व्यावृत्त्या इति । तामाभिरञ्जलिनोपहत्याभिषिञ्चत्यापो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति तिसृभिः । षोढाविहितो वै पुरुष इत्येतस्माद्ब्राह्मणादर्थैतस्य[6] सर्वꣳसुरभिपिष्टꣳ समुदायुत्य त्रिः प्रमिस्रति ॥ ४० ॥

---

१ सचरातेः T Ma.

२ Thus TM Ma, ताम् EHB, Ed

३ Thus (ऽवगूहामि) MHB Prm Pám, ऽवगू॰ T Ma EG Pe Ed

४ Thus M Prm, ॰धावयते all the other MSS and G, Ed.

५ दैव॰ ET and Bhāradvāja, दैव॰ the other MSS., Ed. and the Prayogas.

६ ॰र्थैतस्य Ma E, Ed., ॰र्थैतस्य MHB T indistinct

नमः शाकजम्भाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीरित्यनुलिम्पते[1] ऽप्सरासु[1] च[2] यो गन्धो गन्धर्वेषु च यशो मम। दिव्यो यो मानुषो गन्धः स मामाविशतादित्यथाहतं परिधत्ते स्वा मा तनूराविश शिवा मा तनूराविशेत्येवमेवोत्तरामञ्जमेवमेवात[3] ऊर्ध्वमथैतं बादरं मणिꣳ सुवर्णोपधानꣳ सूत्रे प्रोत्य दर्व्यामाधाय दर्विदण्डे[4] स्रुवेण पर्यस्य जुहोतीयमोषधे त्रायमाणा सहमाना सहस्वती। सा मा करोतु सोमवर्चसꣳ सूर्यवर्चसं ब्रह्मवर्चस्विनमस्मादि[5] करोतु स्वाहेत्यथैनमुदपात्रे[6] ऽनुपरिप्लावयति[6] विश्वा उत त्वया वयं धारा उदन्या इव। अतिगाहेमहि द्विष इत्यपाशो ऽमीत्युक्राह्मणया परिहरति बध्यꣳ हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्याख्या इत्येतस्माद्ब्राह्मणादथैतौ प्रवर्तौ सूत्रे प्रोत्य दर्व्यामाधाय दर्विदण्डे[7] स्रुवेण पर्यस्य जुहोत्यायुष्यं वर्चस्यꣳ सुवीर्यꣳ रायस्पोषमौद्भिदम्[8]। इदꣳ हिरण्यं वर्चसे[9]जैत्रायाविशतादिमꣳ[10]

१ Thus Ma, Ed. ॰मुलिंपेत्यप्स॰ E ॰मुलिंपतेप्स॰ T ॰मुलिंपेदप्स॰ M. ॰मुलिंपेत्स॰ HB

२ MTE and Ed om.

३ Thus (उत्तरांशयम्) ET, Ed ॰मेवात्मयमे॰ M Ma HB corr

४ Thus M Ma दर्वी॰ ET Prm, and Ed, HB om

५ ॰स्विनम॰ HM Ma B ॰स्विनम॰ T, Ed E indistinct

६ Thus M, ॰पात्रेव परि॰ T Ma E Prm, Ed पात्रेवानुपरि॰ HB Ps.

७ Thus M Ma HB, दर्वी॰ EG and Ed.

८ ॰मौद्भिदम् M Ma G and Ed ॰मौद्भिदम् EHB Prm Ps

९ Thus MG, Ed जैत्राय॰ the other MSS and Prm Ps.

१० इमꣳ M Ma EG and Ed. इमाꣳ H इमा B

रयिꣳ स्वाहेति । द्वितीयां जुहोति शुनिमिवाहꣳ[१] हिरण्यस्य पितुरिव नामाग्रभैषम्[२] । तन्मा करोतु सोमवर्चसꣳ सूर्यवर्चसं ब्रह्मवर्चस्विनमन्नादं[३] करोतु स्वाहेति । तृतीयां जुहोत्युच्चैर्वाजि[४] पृतनासहꣳ[५] सभासाहं धनंजयम् । सर्वाः समृद्धीर्ऋद्धयो हिरण्ये याः समाहिताः स्वाहेति । चतुर्थीं जुहोति विराजं च स्वराजं चाभिष्टिर्या[६] च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा सꣳसृजामसि स्वाहेति । पञ्चमीं जुहोति यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु । यशो विश्येषु शूद्रेष्वहमस्मि यशस्तव[७] स्वाहेत्यथैनावुदपात्रे[८]ऽनुपरिप्लावयति[८] विश्वा उत त्वया वयमित्येतया । तयोरन्यतरमादाय दक्षिणे कर्ण आबध्नीत[९] आयुष्यं वर्चस्यमित्येताभिः

---

१ Thus (शुनिम्) M Ma Prm Pś and Ed, शुनीम् EG; शुसिम् HB; शुभम् only Ks

२ Thus Pś; नामाग्रभैजर्ष Prm, नामाग्रहीषमपादं E; नामस्रष M Ma BHG; नामापदं, Ed.

३ ०स्विनम० M Ma HB; ०स्विनङ० EG and Ed

४ ०र्वाजि all exc. G, which has rightly ०र्वादि ।

५ Thus the MSS.; ऋतनाजि the Prayogas

६ Thus Prm, चाभिश्रीया G चाभिश्रीया Ps चाभिश्रीर्या Pc, चाभिश्रीर्या M Ma and Ed.; चाभिश्रीर्या E; चाभिस्रार्या BH.

७ Thus M Prm Pc G, यशस्तप Ma E, Ed., यशस्तव Pś, यशत HB.

८ Thus M, ०पात्रेऽपरि० Ma E Prm, Ed., ०पात्रेषानुपरि० B; ०पात्रेऽनुपरि० H.

९ Thus HB; आबध्नाति M Ma E Prayogas

पञ्चभिरथैनमनुपरिवर्तयत[1] ऋतुभिष्ट्वार्तवैः संवत्सरस्य धायसा[2] तेष्ट्वा यथानुकरोमीत्येवमेवोत्तरं प्रवर्तमावर्तते । अथ स्रजं प्रतिमुञ्चते[3] ॥ ४१ ॥

शुभिके शिर आरोह शोभयन्ती मुखं मम । मुखँ हि मम शोभय भूयाँसं च भगं कुरु ॥ यां त्वा जहार जमदग्निः श्रद्धायै कामायान्यै[4] । तां त्वेमां प्रतिमुञ्चे[5] ऽहं वर्चसे च भगाय चेति । त्रैककुदेनाञ्जनेनाङ्क्ते यदाञ्जनं त्रैककुदं जातँ हिमवत उपरि । तेन वामाञ्जे मयि पर्वतवर्चसमस्त्वित्यादर्शे परिपश्यते यस्मै मनः परागतमादर्शे परिपश्यतः । इदं तस्मयि पश्याम्यायुष्यं वर्चस्यं मे अस्त्वित्यथोपानहावुपमुञ्चते द्यौरसीति दक्षिणे पादे पृथिव्यसीत्युत्तरे । अथ दण्डमादत्ते सखा मा गोपायेति । छत्रमादत्ते दिव्यो ऽसि सुपर्णो ऽन्तरिक्षात्मा पाहीति । सो ऽथैतास्त्वा नक्षत्राणामुदयादथोदितेषु नक्षत्रेषूपनिष्क्रम्य दिश उपतिष्ठते देवीः षडुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वमिति । मा हास्महि प्रजया मा तनूभिरिति नक्षत्राणि । मा राधाम द्विषते सोम राजन्निति चन्द्रमसं ।

१ Thus M, °वर्तयति Ma, Ed., °वर्तति H

२ धायसा MBH, Ed., धायसा Ma [illegible] E (from grantha original!)

३ Thus M Ma E, °मुञ्चते B °मुञ्चते H °मुञ्चति Ed

४ Thus M Prm Ka Pt, कामायान्ये Ma, Ed कामायान्यै HB

५ Thus Prm G, °मुञ्चामि Ma E °मुञ्च M °मुञ्चामि Ed

मसुपस्थाय[1] यद्यच्च[2] कामयते तदेतीत्येतत्समावर्तनम् । ॥ ४२ ॥ द्वादशः ॥

अथेतरत्तूष्णीमिव[3] तीर्थे स्नात्वोदेत्यथ यदि रथं लभते रथंतरमसीति दक्षिणं चक्रमभिमृशति बृहदसीत्युत्तरं वामदेव्यमसीति मध्यमथ रथ प्रवर्तमानमनुमन्त्रयते ऽयं वामश्विना रथो मा दुःखे मा सुखे रिषदित्यथ यदि शमरथं करिष्यन्भवत्यथ उपसृग्येमामभिमृशतीह धृतिरिह विधृतिरिह रन्तिरिह रमतिरिह रमतामित्यथास्मा आचार्यः कूर्चमाहारयति । तं प्रदक्षिणं पर्यस्योदगाहत्त उपविशति पुरस्तादेनं प्रत्यञ्चमुपीहते राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषमित्यथास्मा उदकमाहारयति । तेनास्य पादौ प्रक्षालयत्यवनेक्तः[4] पाणी मृशति मयि महो मयि भगो मयि भर्गो मयि यश इत्यथ उपस्पृश्य मयीन्द्रियं वीर्यमित्युरः प्रत्यात्मानं प्रत्यभिमृशते । ऽथास्मा अन्यदाहारयति । तत्प्रतिष्ठन्त्याया[5] अ[6] अगादर्चमा[5] यशसा सꣳसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनामिति ब्राह्मणः । प्रियं पशूनां कुर्वधिपतिं प्रजानामिति राजन्यस्तदुपस्पृश्य प्राक् सेक्तवा[6] दत्वाह ।

---

१ Thus E. म उपस्थाय M; Ma BB, Ed. om. the first prapos

२ Thus Ma E, Ed., ॰स्थाथैव यच MBH

३ अथेतरत्तूष्णी॰ E अथेतरत्तूष्णी॰ M

४ My conjecture; ॰त्यवनेनृ. M; E omits this passage

५ ॰न्दा मा ॰चाराम्म॰ or ॰चाम्म॰ MSS

My conjecture. सक्त्वा E Pk सेक्तवा M

मधुपर्कं प्रोक्षमभिमन्त्रयते स मावतु स मा पातु स मा गुपतामित्युभाभ्याꣳ हस्ताभ्यां प्रतिगृह्णाति ॥ ४३ ॥

आ[1] मा गन्यशसा वर्चसा सꣳसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनामिति ब्राह्मणः । प्रियं पशूनां कुर्वधिपतिं प्रजानामिति राजन्यस्तस्मिꣳश्चेत्किंचिदापतितꣳ[2] स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपमध्यमया दिशं निरस्यति नेष्टाविद्धं हन्मि या ते घोरा तनूस्तया तमाविश यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य समुदायुत्य त्रिः प्राश्नाति प्राण[3] इदं[3] ते बलिꣳ हरामि श्रेष्ठं माधिपतिं कुर्विति । सोमो ऽसि सोमपं मा कुर्विति द्वितीयमन्नमन्नादं मा कुर्विति तृतीयं । त्रिः पीतोच्छिष्टं ददाति[4] । यमात्मनः श्रेयाꣳसमिच्छेत्तस्मै शेषं दद्यादुपनीतां[5] गामनुमन्त्रयते[4] जहि मे पाप्मानमुपनेतुश्चेति[6] । तां कुर्वन्ति वोत्सृजन्ति वा । स यदि करिष्यन्भवति कुरुतेत्याह तां यद्युत्स्रक्ष्यन्भवति तामनुमन्त्रयते गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनाꣳ स्वसादित्यानाममृतस्य नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामनागाम-

1 The mantras are abbreviated in the MSS
2 °तस्मिꣳश्चित्किं° MSS
3 प्राण MSS, probably read प्राणेद ।
4 om. M
5 Thus E. °दुपनीतामिडाम° M
6 °मुपनेतुश्चेति MSS

दितिं वधिष्ट ॥ पिबतूदकं तृणान्यत्त्वोमुत्सृजतेत्यथास्मा ओदनमाहारयति । तमश्नाति ब्रह्म त्वाश्नातु ब्रह्म त्वाश्नात्विति । तच्चतुष्टयो ऽर्थो दधि मधु घृतमाप इति । पञ्चतय इत्येके दधि पयो मधु घृतमाप इति । ॥ ४४ ॥ त्रयोदशः ॥

ब्राह्मणो ह सोमार्थः शुक्लेन पिङ्गाक्षेण मूर्धभिन्नेन[1] विस्रवता पथि समाजगाम । तꣳ होवाच कथा[2] विद्यां भगवन्तमिति । सोमो राजास्मीति हैनं प्रत्युवाच । तं मा कदध्वर्युर्नैक्षायनविद्भ्यसौषीदिचो[3] मा कदध्वर्युर्नैक्षायनविदभिषुणोतीत्यमहं[4] तत्र विस्रवाण्यसावसौ ब्राह्मणो नैक्षायनानि वेद । तं गमिष्यामि । स मे[5] इमान्वर्णान्सꣳरोपयिष्यतीति[6] । ते यत्रावभृथमवयन्ति[7] तदौदुम्बर्या शाखया पलाशशाखया वा स्रुवेण वानाभ्यलिप्तेन दध्ना पयसा वा मधुमिश्रेण नैक्षायनैस्तंजीषमभिजुहोति । यत्ते ग्राव्णा चिच्छिदुः सोम राजन्नित्येतेनानुवाकेनाभिर्गीभिर्यद्तो न ऊनमित्येतया

[1] मूर्धभिन्नेन M Be , मूर्धभिभिन्नेन the other MSS

[2] Thus M कथं the other MSS.

[3] The reading कदध्व॰ is my conjecture M reads कहकध्व॰, but a horizontal stroke has been put above the ह, cancelling this akṣara कुरध्व॰ Be 7, कुदध्व॰ the other MSS — भ्यसौषीद् my conjecture ॰भ्यसौषीद् M, ॰भ्यासोषीद् the other MSS.

[4] हरध्व॰ M हरध्व॰ Be 7, मध्वध्व॰ or कुदध्व॰ the other MSS.

[5] om. M

[6] ब्राह्मणाम् । s o सर्वान् M , ॰रोपयिष्यामीति M.

[7] गवभृथम॰ M.

य चतुर्दशभिर्ऋजीषमभिजुहुति । ते यत्रावभृथꣳ सꣳस्विष्येयुस्तान्ब्रूयाद्येँ नु राजस्त्वचं भित्त्वा क्रूरं हत्वेह ग्रावभिः । ॥ ४५ ॥

अश्रमयित्वा नैष्ठयनैर्यन्त्येवैवं कृतागसः ॥ ये सोममसꣳस्थाप्याप: सꣳयाद्य सोमिनः[२] । सꣳस्थितो न हत्वायन्त्यमुत्रैनाम्हिनस्ति सः ॥ अग्निशूलैरुत्तुदन्ति यमस्य प्रतिषादने । योऽश्रमयित्वा नैष्ठयनैरथ नाकमधिरोहति ॥ वायुर्भूत्वा पवते त्रिदिवं नाकमुत्तमम् । यः श्रमयित्वा नैष्ठयनैरथ नाकमधिरोहति ॥ अध्वर्योर्यजमानस्य प्रतिप्रस्थातुरग्नीधः[४] । ब्रह्मणो होतुरुद्गाातु राजैषां लोकमादत्ते न चाहोपुश्चतुर्दश ॥ ये चतुर्दश जुह्वति दध्न[५] एताः स्वाहुतीः । नैषां राजा लोकमादत्ते न प्रजां नोत[६] वाजिनम् ॥ आप्याययन्तो राजानं ग्रावभिः क्रूरमृत्विजः । पयसा श्रमयन्तोऽस्य जुह्वतैव चतुर्दशेति । ॥ ४६ ॥ चतुर्दशः ॥

अथ वै भवति ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति । वैमृधः पूर्णमासेऽनुनिर्वाप्यो

१ यो । ० o वे M

२ My conjecture, •नैयन्त्यैवैव M, •नैष्ठान्येवं, ञान्तिवं, ञालियं the other MSS.

३ सौमिनः M

४ Thus Be 7, •स्थातुराग्नीध· D Be, thus also but •प्र· Be, स्थातोनेताग्नीधः M

५ दध्न Be 7, दध्ना the other MSS

६ मोत M नोह the other MSS

भवति । तेन पूर्णमासः सेन्द्रः । ऐन्द्रं दध्यमावास्यायां । तेनामावास्या सेन्द्रेति । केनो स्विदनीजानस्य सेन्द्रौ भवत इत्यैन्द्राग्नेन पुरोडाशेनेत्येव ब्रूयादित्यथ वै भवति देवा वै यज्ञमकुर्वत तदसुरा अकुर्वत । ते देवा एतामिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं । तां पौर्णमासꣳ सꣳस्थाप्यानुनिरवपंस्ततो देवा अभवन्परासुरा । यो भ्रातृव्यवान्स्यात्स पौर्णमासꣳ सꣳस्थाप्यैतामिष्टिमनुनिर्वपेत्पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याग्नावैष्णवेन देवताश्च यज्ञं च भ्रातृव्यस्य वृङ्क्त इति ब्राह्मणꣳ । स एष भ्रातृव्यवतो यथाकामप्रयोगो[1] । मिथुनान्पशून्सारस्वताभ्यां । यावदेवास्यास्ति तत्सर्वं वृङ्क्त इति ब्राह्मणमथ वै भवति ॥ ४७ ॥

पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यामिति । स[2] पौर्णमासीं पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याꣳ । हत्वा भ्रातृव्यं नाप्याययतीति ब्राह्मणं । तदेतत्स्तरणावगधं वापरोध्यावगधं[3] वेत्यथ वै भवति साकंप्रस्थायीयेन यजेत पशुकाम इत्येतयेष्ट्वा यक्ष्यमाण उपकल्पयत औदुम्बरं महत्पात्रं प्रभूतमाज्यमित्यथ देवस्य त्वा सवितुः प्रसव इति[4] प्रतिपदं कृत्वाग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालमैन्द्रꣳ

---

१ यथाकामप्र॰ M

२ om M.

३ परोध्यावगध M, omitting वा, वापरोध्यावगधं all the other MSS.

४ इत्येवमेव M

सांनाय्यं । प्रसिद्धमाग्नेयेन चरित्वाथेतरयोर्हविषोरौदुम्बरे महति पात्रे समवद्यन्नाहेन्द्रायानुब्रूहीति महेन्द्रायेति वा यदि महेन्द्रयाजी भवति । महता पूर्णꣳ होतव्यमित्यथाक्रम्याश्राव्याहेन्द्रं यजेति महेन्द्रमिति वा यदि महेन्द्रयाजी भवति । वषट्कृते सहैव पात्रेण जुहोति । दृश एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति ब्राह्मणमथ वै भवति दारुपात्रेण जुहोति । न हि मृन्मयमाहुतिमानश । औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव । ऊर्जैवास्मा ऊर्जं पशूनवरुन्द्ध इति ब्राह्मणं । तदेतल्लब्धावगधं[1] वा निर्वैदावगधं[2] वेत्यथ वै भवति ॥ ४८ ॥

नागतश्रीर्महेन्द्रं यजेत । त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यस्तेषां महेन्द्रो देवतेति । स[3] यो[3] ऽन्य[3] एतेभ्यो महेन्द्रमियक्षेत[4] स संवत्सरमिन्द्रमिष्ट्वाग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ याममावास्यामागच्छति तस्यां महेन्द्रं यजते । सो ऽत ऊर्ध्वं महेन्द्रयाज्येव भवत्यथ वै भवति संवत्सरमिन्द्रं यजेत । संवत्सरꣳ हि व्रतं नाति । स्वैवैनं देवतेज्यमाना भूत्या इन्द्धे वसीयान्भवतीति ब्राह्मणमथ वै भवति संवत्सरस्य परस्तादग्नये व्रतपतये

१ Thus M, °लभ्यावगतो Be °लब्धावगतो Be 7 U D °लब्धावगतो B

२ Thus M Be U, °गर्धं B Be 7 D

३ M सतयान्य i. e. स यो ऽन्य।

४ Thus, °क्षेत, all

पुरोडाशमष्टाकपालं निर्वपेत्संवत्सरमेवैनं वृत्रं जघ्निवांसमभिमतपतिर्मतमालम्भयति । ततो ऽधि कामं यजेतेति ब्राह्मणमेव वै भवति ॥ ४९ ॥

नासोमयाजी संनयेदनागतं वा एतस्य पयो यो ऽसोमयाजी । यदसोमयाजी संनयेत्परिमोष एव सो ऽनृतं करोत्यथो परैव सिच्यते । सोमयाज्येव संनयेत्पयो वै सोमः पयः सांनाय्यं । पयसैव पय आत्मन्धत्त इति ब्राह्मणमेव वै भवति वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति । त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधञ्श्चरुं ये ऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमिति । तस्या एता भवन्त्यग्ने दा दाशुषे रयिं दा नो अग्ने प्रदातारꣳ हवामहे प्रदाता वज्री स तत्ते अद्य किमित्ते विष्णो परिचक्ष्यं [1]भूदितोऽन्वौजानस्यायामीजानस्य[2] । व्यापन्नयैव[3] पूर्वया यजते[3] ऽव्यापन्नयोत्तरया[3] । न द्वे यजेत । यत्पूर्वया संप्रति यजेतोत्तरया छम्बट् कुर्याद्यदुत्तरया संप्रति यजेत पूर्वया छम्बट् कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो जायत । एकामेव यजेत

---

१ भूदितोन्वौजान° all

२ Thus MDU Be 7, °नस्याया° Bc.

३ Thus M, यजेतव्यापन्नयैवोत्तरया BK यजेताव्यापन्नयोत्तरया Be, thus also but यजेते D. The avagraha added by me

प्रगल्भो ऽस्य जायते । ऽनादृत्य तद्दूर्श एव यजेत । यज्ञमुखमेव पूर्वयालभते । यजत उत्तरया । देवता एव पूर्वयावरुन्द्ध इन्द्रियमुत्तरया । देवलोकमेव पूर्वयाभिजयति मनुष्यलोकमुत्तरया । भूयसो यज्ञक्रतूनुपैतीति ब्राह्मणमथ वै भवत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोके ऽर्धुकं भवतीति ब्राह्मणमथ वै भवति ॥ ५० ॥

दाक्षायणयज्ञेन सुवर्गकामो यजेत । पूर्णमासे संनयेन्मैत्रावरुण्यामिक्षयामावास्यायां यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते ऽहतं वासो । ऽथ पौर्णमास्या उपवसथे ऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथास्यैतदहरिन्द्राय वत्सा अपाकृता भवन्त्यैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपत्यैन्द्रꣳ सांनाय्यꣳ । सा द्विहविरिष्टिः संतिष्ठते । ऽथैतदैन्द्रꣳ सांनाय्यꣳ समुपहूय भक्षयन्त्यथाहतं वासः परिधायापरपक्षं व्रतं चरति । तस्यैतद्व्रतं नानृतं वदति न माꣳसमश्नाति न स्त्रियमुपैति नास्य पल्पूलनेन वासः पल्पूलयन्त्यथ यामावास्यागच्छति[1] तस्या उपवसथे ऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथास्यैतदहर्मित्रावरुणाभ्यां वत्सा अपाकृता भवन्ति । मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेय-

1 All the MSS exc. M om. the relative pronoun

मष्टाकपालं निर्वपति मैत्रावरुणीमामिक्षाꣳ । सा द्विहविरिष्टिः संतिष्ठते । वाजिनस्य काले वाजिनेन चरति । निधत्ते वासो । विसृजते व्रतं । विसृष्टव्रत एतं[1] पूर्वपक्षं भवत्यथ पौर्णमास्या-गच्छत्युपवसथीयेऽहनि व्रतपतिर्यद्देवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते । तदेतत्संवत्सरावमधꣳ[2] सोमसꣳस्थम्[3] । ॥ ५१ ॥

अथैडादध इत्याचक्षते । समानं वाससश्च व्रतपतेश्च । तथैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपत्यग्नीषोमीयमेकादशकपालमैन्द्रꣳ सांनाय्यꣳ । सा त्रिहविरिष्टिः संतिष्ठते । ऽत्रैतदैन्द्रꣳ सांनाय्यꣳ समुपहूय भक्षयन्ति । तथाहतं वासः परिधायापरपक्षं व्रतं चरत्यागच्छत्यमावास्या । [4]तस्या उपवसथे यजते । तथा मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालं मैत्रा-वरुणीमामिक्षाꣳ । सा त्रिहविरिष्टिः संतिष्ठते[4] । वाजिनस्य काले वाजिनेन चरति । निधत्ते वासो । विसृजते व्रतं । विसृष्टव्रत एतं[5] पूर्वपक्षं भवत्यथ पौर्णमास्यागच्छत्युपवसथीयेऽहनि

[1] एवं M.

[2] Thus M ; °रावरुंध Be, °रावमधे Be 7 BDT

[3] °सꣳस्था M

[4]...[4] Thus M only, the other MSS are partly defective, partly corrupt

[5] एवं M

व्रतपतिर्यद्देवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते। तदेतत्संवत्सरावगधꣳ[1] सोमसꣳस्थम्[2]। ॥ ५२ ॥

अथ चतुष्को भ्रातृव्यवतो यज्ञः। समानं वाससश्चैव व्रतपतेश्च। तथैवैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपति सरस्वत उपाꣳशुयाजमग्नीषोमीयमेकादशकपालमैन्द्रꣳ सांनाय्यꣳ। सा चतुर्हविरिष्टिः संतिष्ठते। ऽथैतदैन्द्रꣳ सांनाय्यꣳ समुपह्वय भक्षयन्ति। तथैवाहृतं वासः परिधायापरपक्षं व्रतं चरत्या-गच्छत्यमावास्या। नैवोपवसथे यजते। तथैव मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेय-मष्टाकपालं निर्वपति सरस्वत्या उपाꣳशुयाजमैन्द्रमेकादश-कपालं मैत्रावरुणीमामिक्षाꣳ। सा चतुर्हविरिष्टिः संतिष्ठते। वाजिनस्य काले वाजिनेन चरति। निधत्ते वासो। विसृजते व्रतं। विसृष्टव्रत एतं[3] पूर्वपक्षं भवत्यथ पौर्णमास्यागच्छत्यु-सीदति व्रतपतिर्यद्देवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते। तदेतत्सं-वत्सरावगधꣳ[1] सोमसꣳस्थम्[2]। ॥ ५३ ॥

स एष चतुष्को भ्रातृव्यवतो यज्ञः। स यथा ह वा इदमनश्चतुर्युक्तं व्यवप्लावमेत्येवꣳ[4] ह वा एष एतेन यज्ञक्रतु-

---

1 Thus M •संवत्सरावगधं Be •संवत्सरावराध्यं the other MSS

2 •संꣳस्था M

3 एवं M

4 Thus M व्यवप्लावं स्त्ये• Be Bl व्यवप्लाव स्त्ये• Be 7 D

नेद्वा पाप्मानं भ्रातृव्यं व्यवधान इति । स एष वसिष्ठयज्ञः केशियज्ञः सार्वसेनियज्ञो । वसिष्ठो ह यत्र सौदासानभिचचारैवꣳ हैनानभिचचार । केशी ह यत्र खाण्डिकमभिचचारैवꣳ हैनमभिचचार । सार्वसेनिर्ह यत्र भ्रातृव्यानभिचचारैवꣳ हैनानभिचचार । ॥ ५४ ॥ पञ्चदशः ॥

चातुर्मास्यैः सोमैर्यक्ष्यमाणो भवति । स द्वयान्त्संभारानुपकल्पयत आग्निष्टोमिकाꣳश्च वैश्वदेवसंभाराꣳश्च[1] । स[2] पुरस्तात्फाल्गुन्यै[2] वा चैत्र्यै वा पौर्णमास्या आमावास्येन हविषेष्ट्वा दीक्षते । तस्यापरिमिता[3] दीक्षास्तिस्र उपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञिये[4]ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति । वैश्वदेवं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाꣳसि विमथ्योपवसन्त्यथ प्रातस्त्रिवृद्बर्हिर्मदेकवदेव[5] स्तृणात्यथाग्नेयं पशुमुपाकरोति । तस्य वैश्वदेव उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते वैश्वदेवहवीꣳषि । प्रैयवन्तः सवनीया । अनुब्रूहि यजेतीतरे-

---

१ Thus MD Be 7, वैश्वदेविकसंभा॰ Be BU.

२ Thus M; स om. B Be, पुरस्तात् om. B Be 7 DU.

३ Thus M Be 7; तस्या अपरि॰ Be BUD.

४ Thus MDI; यज्ञिये the other MSS.

५ भवति Be BU ins. after बर्हिषि.

त्र्यंयास्यैतद्दर्वरुणाय वत्सा अपाकृता भवन्ति । वारुणं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाग्नमि विग्निय्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्य वारुण उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तते वारुणी च कायश्च[1] । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरयोर्हविर्षोऽत्युधा सप्तदश उक्थ्यः संतिष्ठते । पुरस्ताद्धानासोमानां वाजिनाभ्यां चरति । समानं कर्मावभृथाद्यैतस्मिन्नवभृथ उपाददते वारुणं निष्काम तुषानिति । वारुणस्य वारुण्यामिचाध्यवदानीया भवत्यृजीषेण सह तुषान्संप्रकिरन्ति । प्रसिद्धो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै कायोपालम्भ्या[2] भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति । संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाय पौर्णमासवैमृधाभ्यामिष्ट्वोत्क्रमेतदर्शातस्तुषुं मासेषु ॥ ५६ ॥

शाकमेधैः सोमैर्यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञिये ऽहन्नुतीयसवः संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्याथ वसतीवरीः परिहृत्य पयाग्नमि विग्निय्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति ।

१ कायाश्च M

२ Thus M Bo 7 काय उपालंभ्यौ or कायोपालंभ्यौ the other MSS.

तस्यानीकवत उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तत आनीकवतः । प्रैषवन्तः सवनीया । अनुब्रूहि यजेत्यानीकवतस्य । माध्यंदिनीयाननुवर्तते सांतपनः । प्रैषवन्तः सवनीया । अनुब्रूहि यजेति सांतपनस्यर्जुधैकविंश उक्थ्यः संतिष्ठते । अहीनसंततिं करोत्यथ वसतीवरीः परिहृत्य पयांसि विग्रिह्योपवसन्त्यथ सायं गृहमेधीयेन चरत्यथापररात्रे पूर्णदर्व्येण[1] चरत्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्य क्रैडिन उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तते क्रैडिनः । प्रैषवन्तः सवनीया । अनुब्रूहि यजेति क्रैडिनस्यर्जुधा त्रिणव उक्थ्यः संतिष्ठते । अहीनसंततिं करोत्यथ वसतीवरीः परिहृत्य पयांसि विग्रिह्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्य प्राजापत्यस्तूपर उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते महाहवींषि । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरेषां हविषां । तृतीयसवनीयाननुवर्तन्ते महापितृयज्ञहवींषि । स यत्र तृतीयसवने धिष्ण्यान्विहरति तदजस्रं मार्जालीयं करोति । समारूढेषु हविःषु गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये प्रचरति । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरेषां हविषामृजुधा त्रयस्त्रिंश उक्थ्यः संतिष्ठते । पुरस्ताद्दामाभोमानां दैयमक्तैश्चरति । समानं कर्मावभृथात्प्रसिद्धो ऽवभृथ । उदय-

---

१ Thus Be L., °दर्व्येण M Be 7 D

नीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै वैश्वकर्मण्युपालम्भ्या[1] भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति । तावनुवर्तेत आदित्यः । प्रैषवन्तौ पशुपुरोडाशावनुब्रूहि यजेत्यादित्यस्य । संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाय पौर्णमासवैमृधाभ्यामिष्ट्वोक्तमेतदेयातश्चतुर्षु मासेषु ॥ ५७ ॥

शुनासीरीयेण सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षास्तिस्र उपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यैव वसतीवरीः परिहृत्य यथाऽस्मि विशिष्योपवसथ्यं यथास्यैताꣳ रात्रिं वायवे वत्सा अपाकृता भवन्ति । प्रातर्वायव्यं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाग्नेयं पशुमुपाकरोति । तस्यैन्द्र ऋषभ उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते शुनासीरीयहवींषि । प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाꣳ हविषामृजुधा ज्योतिरग्निष्टोमः संतिष्ठते । समानं कर्मावभृथात्प्रसिद्धो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै[2] सौर्युपालम्भ्या[3] भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ

---

१ Thus Be 7; °कर्मण्योपा° Be, °कर्मण उपालंभ्यो M.

२ तस्यै MU Be, तस्या· Be 7 D; B om

३ Thus Be 7, सौर्योपालंभ्या M, सौर्य उपालंभ्यो Be U.

निर्वपति । संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाय पौर्णमासवैमृधाभ्यामिष्ट्वेत्युक्तमेतत् । ॥ ५८ ॥ षोडशः ॥

अथातो ज्योतिरयनमित्याचक्षते । वैश्वदेवेन सोमेन यक्ष्यमाणो भवतीति समानौ प्रतिपदेतावदेव नाना । त्रिवृदग्निष्टोमो । ज्योतिरित्याथातश्चतुर्षु मासेषु वरुणप्रघासेन सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षाः षडुपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहर्दया वत्सा अपाकृता भवन्ति मरुद्भ्यो वरुणायेति । द्वयं पयो दोहयति सांनाय्यस्य वाहता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाꣳसि विमिथ्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्य मारुतो वारुण इत्युपालम्भ्यौ भवतस्तस्य प्रातःसवनीयाननुवर्तन्ते सप्त वरुणप्रघासहवीꣳषि । स यत्र प्रातःसवने धिष्ण्यान्विहरति तदजस्रं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्निकृत्वा तैर्मार्जालीये प्रचरति । प्रैषवन्तः सवनीयाः । अनुब्रूहि यजेतीतरेषाꣳ हविषां । माध्यंदिनीयामनुवर्तते[1] वारुणी च कायश्च । प्रैषवन्तः सवनीयाः । अनुब्रूहि यजेतीतरयोर्हविषोर्द्वेधा ज्योतिरुक्थ्यः संतिष्ठते । समानमुत्तरं कर्म यथा द्विरात्रे तथाथातश्चतुर्षु मासेषु ॥ ५९ ॥

---

[1] Thus MDU, ॰वर्तते the other MSS

साकमेधेन सोमेन यक्ष्यमाणो भवति ' दीक्षते ' तस्यापरिमिता दीक्षाः षडुपसदः ' स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञियेऽहन्सुत्या संपत्स्यत इति ' तस्य तथा संपद्यते ' प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयांसि विग्रिह्योपवसत्यथ प्रातराग्नेयं पशुमुपाकरोति ' तस्यानीकवतः क्रीडिनः प्राजापत्यस्तूपर इत्युपालम्भ्या भवन्ति ' तस्य प्रातःसवनीयाननुवर्तन्त आनीकवतः ' प्रैषवन्तः सवनीया ' अनुब्रूहि यजेत्यानीकवतस्य ' माध्यंदिनीयाननुवर्तन्ते सांतपनाः ' प्रैषवन्तः सवनीया ' अनुब्रूहि यजेति सांतपनस्य ' तृतीयसवनीयाननुवर्तन्ते[1] ' गृहमेधीयप्रभृतीनि महाहवींषि ' स यत्र तृतीयसवने धिष्णियान्विहरति तदग्रस्थं मार्जालीयं करोति ' महाहविर्भिश्चरित्वा गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये प्रचरति[2] ' प्रैषवन्तः सवनीया ' अनुब्रूहि यजेतीतरेषां हविषामंशुधा ज्योतिरुक्थ्यः संतिष्ठते ' समानमुत्तरं कर्म यथा त्रिरात्रे तथा ' स एवैष[3] शुनासीरीयः ' ॥ ६० ॥ सप्तदशः ॥

अथातो महायज्ञ[4] इत्याचक्षते ' ज्योतिरतिरात्र इत्येक आहुर्दीक्षते ' तस्यापरिमिता दीक्षा द्वादशोपसदः ' स तथा

---

१ Thus MD, ॰र्न्ते the other MSS.

२ ॰रति Be Bo 7 DU

३ Thus M, ॰संदेव Bo 7, ॰एकोन Be BDU

४ Thus M Be BC Ks, महापितृयज्ञ Be 7 D

राजानं क्रीणाति यथा मन्यते पौर्णमासे मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति। तस्य तथा संपद्यते। प्रसिद्धेन कर्मणोपवसथा- देत्यथास्यैतदहस्तया वत्सा अपाकृता भवन्ति विश्वेभ्यो देवेभ्यो मरुद्भ्यो वरुणायेति। त्रयं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयांऽसि विमथ्योपवसथ्यय [1]प्रातस्त्रिवृद्बर्हिर्देकवदेव[2] कृणात्यथाग्नेयं पशुमुपाकरोति। तस्य वैश्वदेवो मारुतो वारुण आनीकवतः क्रैडिनः प्राजापत्यस्तूपर ऐन्द्र ऋषभ इत्युपालम्भ्या भवन्ति। तस्य प्रातःसवनीयाननुवर्तन्ते वैश्वदेवहवींऽषि। प्रैषवन्तः सवनीया। अनुब्रूहि यजेतीतरेषाऽं हविषां। माध्यंदिनीयाननुवर्तन्ते सर्वाणि वरुणप्रघासहवींऽषि। ॥ ६१ ॥

स यत्र माध्यंदिनीये सवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति। समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्निकृत्वा तैर्मार्जालीये प्रचरति। प्रैषवन्तः सवनीया। अनुब्रूहि यजेतीतरेषाऽं हविषां। तृतीयसवनीयाननुवर्तन्त आनीकवतप्रभृतीनि महाहवींऽषि। स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति।

---

1 Between प्रातस् and त्रिवृद् Bo 7 has the following words (प्रात)- राग्नेयं पशुमुपाकरोति मस्यानीकवतः क्रैडिनः प्राजापत्यस्तूपर इत्युपालम्भ्या भवंति मस्य प्रातःसवनीयाननुवर्तंत आनीकवत ऐन्द्रवतः सवनीया अनुब्रूहि यजेत्यानीकवत- (त्रिवृद्)।

2 Thus (एकवदेव) M Be 7, एकधैव Be U, एकवैव B, D om.

महाहविर्भिश्चरित्वा गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये प्रचरति । प्रैषवन्तः सवनीयाः । अनुब्रूहि यजेतीतरेषाꣳ हविषामृतुधा ज्योतिरतिरात्रः संतिष्ठते । पुरस्ताद्धूमासोमानां वाजिनैश्चरित्वा त्रैयम्बकैश्चरति[1] । समानं कर्मावभृथादेतस्मिन्नवभृथ उपाददते वारुण्यै निष्कासं तुषानिति । वारुणस्य वारुण्यामिक्षायाश्चावदानीया भवन्त्यृजीषेण सह तुषान्संप्रकिरन्ति[2] । प्रसिद्धोऽवभृथः । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै द्यावापृथिव्या काया वैश्वकर्मणी सौरीत्युपालभ्या भवन्ति । तासां प्रसिद्धं वपाभिश्चरित्वा पशुपुरोडाशान्निर्वपति । ताननुवर्तन्त आदित्यप्रभृतीनि शुनासीरीयहवींषि । प्रैषवन्तः पशुपुरोडाशाः । अनुब्रूहि यजेतीतरेषाꣳ हविषाꣳ । संतिष्ठते यथा पशुपशुः पशुमन्थस्तायांच पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य केश्या श्मश्रूणि लोहितापमथ्य च क्षुरेण शीर्षणि च वर्तयते परि च वपते पुरस्तादेवाग्रेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथोपरिष्टाथ संतिष्ठन्ते चातुर्मास्याः सोमाः संतिष्ठन्ते चातुर्मास्याः सोमाः । ॥ ९२ ॥ अष्टादशः ॥

॥ इति सप्तदशः प्रश्नः[3] ॥

१ ब्दैव्ये॰ MSS

२ ॰किरन्ति M

३ अथ ( ? इति ) बौधायन[illegible] प्रश्नः C

बृहस्पतिसवेन यक्ष्यमाणो भवति । स उपकल्पयते ऽश्वचतुस्त्रिꣳशा दक्षिणाः कृष्णाजिनꣳ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रमाज्यमभिषेचनार्थाय वै ब्राह्मणं भवति परिस्रजी होता भवत्यरुणो मिर्मिरस्त्रिशुक्र इत्येष ह वै परिस्रजी यः खलतिः परिकेश्यो[1] । ऽथ[1] हैष मिर्मिरो यः शुक्लो विक्लिधस्तिलककवान्पिङ्गाक्षो[2] । ऽथ हैष त्रिशुक्रो यस्त्रिवेदो[3] । दीक्षते । तस्यैकरात्रीणस्य सोमं क्रीणन्ति । तिस्र उपसदस्तायते त्रिवृदग्निष्टोमो रथंतरसामा प्रवर्ग्यवान्गायत्रीष्वेव स्तोमः । प्रज्ञातं देवसुवाꣳ हविषां करणं । तस्य बार्हस्पत्यो[4] ऽतिग्राह्यो[4] । बार्हस्पत्यः पशुरुपालभ्यः । समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्र आज्यमानीयाभिषिञ्चति बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् । सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमाꣳसि ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण बृहस्पतिसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति[5] समानमा मुखस्य विमार्जनात् । ॥ १ ॥

---

१ Thus MB Be, परिकेश्यय the other MSS

२ Thus D, तिलकावा॰ M Be 7 U, तीलकवा॰ Be, तीलकावा॰ B

३ Thus M, त्रिवेदी the other MSS

४ Thus M Be 7 D, ॰पत्यश्चातिग्रा॰ Be BU

५ M reads समुत्क्रोशन्त्यभ्यंचमायमसौ + बृहस्पतिसवेनेति ।

तस्य प्रातःसवने सन्नेषु नाराशंसेष्वेकादश दक्षिणा नीयन्त । एकादश माध्यंदिने सवने सन्नेषु नाराशंसेष्वेव द्वादशास्तृतीयसवने सन्नेषु नाराशंसेषु । माध्यंदिन एव सवने ऽश्वं दद्यादिति ह स्माह मौद्गल्यः । स वा एष वैमार्जनो[१] यज्ञः । स यथा ह वा इयं गैरेयी[२] नदी[३] निमृजन्त्येवं[३] ह वा एष एतेन यज्ञक्रतुनेष्ट्वा पाप्मानं भ्रातृव्यं निमृजतेति[४] । स एतस्मिन्नेव पूर्वपक्षे चतुष्टोमेनाग्निष्टोमेन यजेत पुरा भैषाच्छान्धे । राजा राजसूयेनेजान इच्छति बृहस्पतिसवेनाभिषिच्येयेति[५] । तद् वा आहुर्न वै राजसूयाभिषिक्तो ऽन्येन यज्ञक्रतुनाभिषिच्येतामत्यवरोही ह[६] भवतीत्युभाभ्यां ब्रह्मक्षत्राभ्यामभिषिच्या[७] इत्यभिषिच्येतैवेति[७] । दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदः । समानमाभिषेकस्य कालादभिषेकस्य काले माध्यंदिनीया एवैनं पवमा निमृजन्तो यन्ति । चतुर्विंश एव भवति ।

---

१ Thus M Bo 7 D, स्वयवनैमार्जनो BU, स्व यद्योषमिमार्जनो Be

२ Thus M; गौरेयो the other MSS (U गौरेयोर्)।

३ नदी निमृजं स्वेवं M, नदीर्निमृज्येत्येवं B, नदीर्निमृज्यगेत्येवं Be 7 D; नदीर्निमृज्यतेवं U, नदी नीला पांसुनिमृजत्येवं Be Read perhaps: नदी निमृजन्त्येवं i.e. निमृजती इति, cp. *infra* निमृजन्तोति।

४ निमृज्यस्वेति Be 7.

५ Thus MD Bo 7, °भिषिच्येति Be U, °भिषिच्येयेति B.

६ om M

७ Thus M only, °भिषिच्यात इत्यभिषिच्येतैवेति U Be 7 D, °भिषिच्यात इत्यभिषिच्येतेति B, °भिषिच्याभिषिच्येतैवेति Be

राजा राजसूयेन यक्ष्यमाण आध्यायति[1] त्रिषु वर्णेष्वभिषिक्तेष्वथाभिषिच्येय[2] पुरोहिते स्थपतौ सूत इति । पुरोहितो दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदः । समानमाभिषेकस्य कालादभिषेकस्य काले शुक्रामन्थिनोः संस्रावेणाभिषिञ्चति । चतुष्टोम एष भवति । ॥ २ ॥

स्थपति[3] स्थपतिसवेन यक्ष्यमाणो भवति स उपकल्पयत आर्षभं चर्म सुवर्णरजतौ च रुक्मावौदुम्बरं पात्रं दध्यभिषेचनाय । दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसद । आग्नेयस्य मारुती पृश्निः पष्ठौह्युपालम्भ्या भवति । सप्त हवींषि प्रातःसवनीयाननुवर्तन्ते यदाग्नेयो भवत्यग्निमुखाह्यृद्धिरित्येतानि । समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतन आर्षभं चर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्यौदुम्बरे पात्रे दध्यानीयाभिषिञ्चति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै वाचो यन्तुर्यन्त्रेण स्थपतिसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात्स एष स्थपतिसवः सप्तदशो ऽग्निष्टोम । एष एव स्थपतिसव । एष वैश्यसव[4] । एष मासवो । मासा हैनेनातः[5] पूर्वमीजिरे । ॥ ३ ॥

---

१ ॰ध्यायतीति M  २ Thus MD Be 7, ॰षिच्येत् Be BU
३ om Be BU  ४ वैश्यस्य सव Be 7
५ ६.६ ० स्वत Be 7 स्वत, D सर्व ।

सूतः[1] सूतसवेन यक्ष्यमाणो भवति स उपकल्पयते कृष्णाजिनꣳ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रꣳ हिरण्यं घृतमभिषेचनाय । दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदो । ऽग्नौ हवींꣳषि प्रातःसवनीयाननुवर्तन्ते यदाग्नेयो भवत्याग्नेयो वै ब्राह्मण इत्येतानि । समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे घृतमानीय हिरण्येनोत्पूयाभिषिञ्चति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण सूतसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात् । एष सूतसवः सप्तदशोऽग्निष्टोम । एष एव सूतसव । एष ग्रामणीसव[2] । एष ऋतुसव । ऋतवो ह्येनेनातः पूर्वमीजिरे । ॥ ४ ॥ प्रथमः ॥

सोमसवेन यक्ष्यमाणो भवति स उपकल्पयते सौमीꣳ सूतवशां कृष्णाजिनꣳ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रं पयो ऽभिषेचनायाथ वै ब्राह्मणं भवति यत्किंच राजसूयस्तेन सोमं तद्वै भवतीति । स आमावास्येन हविषेष्ट्वाथवान्यानुमतप्रभृतिभिरेति संवत्सरं चातुर्मास्यैः सप्तेन्द्रतुरीयप्रभृतिभिरथ रत्निनाꣳ हविर्भिर्यजते । ऽथ देवसुवाꣳ हविर्भिर्यजते ।

---

१ om M.

२ ग्रामणि० M Bc.

ऽथैताꣳ सौमीꣳ सूतवशामालभते[1] । तस्या अभ्युदिते यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे पय आनीयाभिषिञ्चत्यषाढं[2] युत्सु पृतनासु पप्रिꣳ सुवर्षामप्सां वृजनस्य गोपाम् । भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण सोमसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनादथ सꣳसृपाꣳ हविर्भिर्यजते । ऽथ पञ्चहविषा दिशामवेष्ट्या यजते । ऽथ द्विपशुना पशुबन्धेन यजते । ऽथ सात्यदूतानाꣳ हविर्भिर्यजते । ऽथ पूर्वैः प्रयुजाꣳ हविर्भिर्यजते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वोत्तरैः प्रयुजाꣳ हविर्भिर्यजते । ऽथ देविकाहविर्भिर्यजते । ऽथ त्रैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संतिष्ठते सोमसवो ऽर्धचतुर्दशैर्मासैः । ॥ ५ ॥

पृथिसवेन[3] यक्ष्यमाणो भवति स उपकल्पयते रोहितं चर्मानडुहꣳ सुवर्णरजतौ च रुक्मावौदुम्बरं द्रोणं चतुःस्रक्ति चतुष्टयीरपो दिग्भ्यः संभृता[4] । अथ वै ब्राह्मणं भवति

---

१ •भते MD Be UB , •भेत Be 7

२ The mantra is abbreviated in all the MSS.

३ पृथिवि• M, पृथिवी Be every time in this kh.

४ Thus M Be, समाहृता the other MSS

यत्किंच राजसूयमनुत्तरवेदीकं तत्सर्वं भवतीति । स आमावास्येन हविषेष्ट्वाष्टावन्यानुमतप्रभृतिभिरेति सप्तेष्टतुरीयप्रभृतिभिरेव रत्निनाꣳ हविर्भिर्यजते । ऽथ देवसुवाꣳ हविर्भिर्यजते । ऽथैतां चतुर्हविषमिष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुमिति । तस्या[1] अश्वमुदिते[1] यजमानायतने रोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्यौदुम्बरे द्रोणे चतुष्टय्योरपः समवनीयाभिषिञ्चति[2] ये ते पञ्चाशतं ददुरश्वानाꣳ सधस्तुतिः । द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणाम् ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण पृथिव्यैनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनादथ सꣳसृपाꣳ हविर्भिर्यजते । ऽथ पञ्चहविषा दिशामवेष्ट्या यजते । ऽथोपातीत्य द्विपशुं पशुबन्धꣳ सात्यदूतानाꣳ हविर्भिर्यजते । ऽथ पूर्वैः प्रयुजाꣳ हविर्भिर्यजते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वोत्तरैः प्रयुजाꣳ हविर्भिर्यजते । ऽथ देविकाहविर्भिर्यजते । ऽथ त्रैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संतिष्ठते पृथिसवो ऽध्यर्धेन[3] मासेन[3] । ॥ ६ ॥

---

१ Thus M, Be 7 DUB, तस्याश्व॰ Be.

२ Thus Be 7 DU; समानीय M Be D, but cp XII. 8 (p. 98, 5).

३ Thus M, ध्यर्धे, र्धे, मासेन the other MSS.

गोसवेन यक्ष्यमाणो भवति स उपकल्पयतेऽयुतं दक्षिणाः सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रं प्रतिधुगभिषेचनाय[१] दीक्षते । तस्य षड् दीक्षाः षडुपसदः । समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनमास्तं वेदेरनुद्धृतं भवति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे प्रतिधुगानीय[२] दहत स्तोत्रं प्रत्यभिषिञ्चति देवस्रातः सहसा दृढः क्षत्राणां क्षत्रभृत्तमो वयोधाः । महान्महित्वे तस्तभानः क्षत्रे राष्ट्रे च जागृहि । प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चामि ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण गोसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात्स एष गोसवः षट्त्रिꣳशः सर्व उक्थ्य उभयसामायुतदक्षिणः[३] । पवमाने कथरथंतरं कुर्वन्ति[४] । ॥ ७ ॥ द्वितीयः ॥

ओदनसवेन यक्ष्यमाणो भवति स उपकल्पयते रोहितं चर्मानडुहꣳ सुवर्णरजतौ च रुक्मौ शतमानं च प्रवर्तं चतुरो वर्णान्ब्राह्मणꣳ राजन्यं वैश्यꣳ शूद्रं चतुरो रसान्मधु सुरां

१ Thus M Be 7 D, प्रतिधुग॰ the other MSS.

२ Thus M; प्रतिधुक्समानीय all the other MSS., but cp. Maitr. S. II. 2 7, where the word is also used as a neuter (sc. पयः)

३ Thus Be 7 D, ॰सामायुतदक्षिणा॰ M, ॰सामाक्षयुतदक्षिण॰ the other MSS.

४ Thus M, भवति the other MSS.

अथ चत्वारि[1] पात्राणि सौवर्णꣳ राजतं कांस्यं मृन्मयं चतस्रो दक्षिणाः शतमानꣳ हिरण्यं तिसृधन्वसष्टौ माषैः पूर्णं कमण्डलुं चतुष्टयीः शलाकाः पर्णमय्यौ नैयग्रोध्यावाश्वत्थ्यौ फाल्गुनपाण्यौ[2] चत्वारि नानावृक्ष्याणि पात्राणि सकूꣳस्तीर्णि दर्भपुञ्जीलान्यौदुम्बरं द्रोणं चतुःस्रक्ति चतुष्टयीरपो दिग्भ्यः संभृताः शतं[3] च[3] रथं चैतेनोपक्लृप्तेन रोहिणीमायतीमुपरमत्यथ[4] रोहिण्येति पूर्वाग्निमश्ववद्युक्तपर्णीयꣳ[5] प्राचीनो ऽन्वाहार्यपचनमाहिताग्निर्याध्वर्युरपरराच आहृत्य सꣳगाध्ये-कौदनꣳ[6] श्रपयतीति । तं तथा श्रपयन्ति यथा पुरादित्यस्योदयाच्छृतो[7] भवत्युत्तरा सूर्यस्य कार्यं इति श्राणमेवैतमोदनꣳ श्रपयित्वाभिघार्योद्वासयत्यथैतौ पार्श्वौ निर्णिज्योपस्तीर्य तस्यारेनमसंस्त्रिवोद्धरति । सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयायैताꣳश्चतुरो वर्णान्दक्षिणत उदङ्मुखानुपवेशयत्यथान्वारब्धे यजमाने जुहोति सिꣳहे व्याघ्र उत वा

---

१ चाप॰ all.

२ Thus M; फाल्गुनपाण्यौ Be B; पाल्गुनपावौ DU; पाल्गुन्यौ पार्श्वौ Be.

३ Uncertain, शतं च M, शतं च Be 7 D; वर्षं च BU; चितं (omitting च) Be

४ Read perhaps चय i.s.o चथ, cp. XIII. 36 (p. 145, 3), XV. 2 (p 205, 10) and XVIII. 16.

५ ॰ष्वयुक्त॰ M Be 7, ॰ष्वयुक्त॰ Be BUD.

६ Thus Be BU; सध्योदनꣳ M, चौदनं Be BU.

७ Thus M Be 7 D, पुरस्तादादित्य॰ Be BU.

पृदाकाविति पतसः सुवाङ्गतौ ऋताङ्गत्येव सङ्स्रावैः प्रवर्तमभिघारयति राडसि विराडसि सम्राडसि स्वराडसीत्यथैनं[1] प्रवर्तमपेणाहवनीयं[2] पर्याहृत्य दक्षिणतो निदधाति । ॥ ८ ॥

अथैतत्सौवर्णं पात्रं याचति । तस्मिंस्तिरः पवित्रं मध्वानीय सक्तूनोप्य पर्णमयीभ्यां शलाकाभ्यामुपमन्थतीन्द्राय त्वा तेजस्वते तेजस्वन्तं श्रीणामीति । तेजो ऽसीति ब्राह्मणाय प्रयच्छति । तत्ते प्रयच्छामीति ब्राह्मणः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्टे तेजस्वदस्तु मे मुखं तेजस्वच्छिरो अस्तु मे । तेजसाग्निश्वतः प्रत्यङ् तेजसा संपिपृग्धि मेति । शिरावत्य प्रसंस्पति । तस्मा एतच्चैव पात्रं ददाति यजमानं च हिरण्मयमेतद्राजतं पात्रं याचति । तस्मिंस्तिरः पवित्रं सुरामानीय सक्तूनोप्य नैयग्रोधीभ्यां शलाकाभ्यामुपमन्थतीन्द्राय त्वौजस्वत ओजस्वन्तं श्रीणामीत्योजो ऽसीति राजन्याय प्रयच्छति । तत्ते प्रयच्छामीति राजन्यः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्ट ओजस्वदस्तु मे मुखमोजस्वच्छिरो अस्तु मे । ओजसाग्निश्वतः प्रत्यङ्ङोजसा संपिपृग्धि मेति । शिरावत्य प्रसंस्पति । तस्मा एतच्चैव पात्रं ददाति तिसृधन्वं चाथैतत्कांस्यं पात्रं याचति । तस्मिंस्तिरः पवित्रं पय आनीय सक्तूनोप्याश्वत्थीभ्यां शलाकाभ्यामुपमन्थतीन्द्राय त्वा पयस्वते पयस्वन्तं श्रीणामीति । पयो ऽसीति वैश्याय

१ ॰वैकं all exc. M

२ ॰वेधार्थं M.

प्रयच्छति । तत्ते प्रयच्छामीति वैश्यः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्टे पयस्वदस्तु मे मुखं पयस्वच्छिरो ऽस्तु मे । पयस्वान्विश्वतः प्रत्यङ् पयसा संपिपृग्धि मेति । चिराचम्य प्रगृह्णाति । तस्मा एतच्चैव पात्रं ददात्यश्वं चाथैतन्मृन्मयं पात्रं धापयति । तस्मिंस्तिरः पवित्रमप आनीय मधू-मोघ फाल्गुनपालीभ्याऽ[1] शलाकाभ्यामुपमन्थतीन्द्राय त्वायुष्मत आयुष्मन्तऽ श्रीणामीत्यायुरसीति शूद्राय प्रयच्छति । तत्ते प्रयच्छामीति शूद्रः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्ट आयुष्मदस्तु मे मुखमायुष्मच्छिरो ऽस्तु मे । आयुष्मान्विश्वतः प्रत्यङ्ङायुषा संपिपृग्धि मेति । चिराचम्य प्रगृह्णाति । तस्मा एतच्चैव पात्रं ददाति मार्येश्च पूर्णं कमण्डलुमथैतमोदनमभ्युत्सृज्य प्राश्नाति । तस्य यत्र यद्दते तदप्सु प्रवेशयत्यथ हिरण्याहुतं निष्पिबति । निष्पिबन्तमनुमन्त्रयत इममग्न आयुषे वर्चसे कृधि प्रियऽ रेतो वरुण सोम राजन् । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासदित्यथैतं प्रवर्तमद्भिः प्रक्षाल्य दक्षिणे कर्णं आबध्नीत आयुष्टे विश्वतो दधदित्यथैनमनुपरिवर्तयत[2] आयुरसि विश्वायुरसि सर्वायुरसि सर्वमायुरसीत्यथैनं त्रिभिर्दर्भपुञ्जीलैः पवयति यतो वातो मनोजवा यतः क्षरन्ति सिन्धवः । तासां त्वा सर्वासाऽ

---

१ फल्गुनपालिभ्या M, फाल्गुनपालीभ्याऽ Be 7 BUD, फल्गुनीभ्याऽ Be.
२ Thus M, र्तं 1.5.0, र्त the other MSS.

त्वाभिषिञ्चामि वर्चसेत्यथास्य दक्षिणमक्षिकटं[1] न्यज्यति[1] समुद्र इवासि गह्मना सोम इवास्यदाभ्यः। अग्निरिव विश्वतः प्रत्यङ् सूर्य इव ज्योतिषा विभूरिति ॥ ९ ॥

यावदेवात्राध्वर्युश्चेष्टति तावदेव प्रतिप्रस्थातौदुम्बरे द्रोणे चतुष्टयीरपः समवनीय चतुरो ग्रहान्गृह्णात्यपां यो द्रवणे रसस्तमहमस्मा आमुष्यायणाय तेजसे ब्रह्मवर्चसाय गृह्णामीति पर्णमयेनापां य ऊर्मौ रसस्तमहमस्मा आमुष्यायणायौजसे वीर्याय गृह्णामीति नैयग्रोधेनापां यो मध्यतो रसस्तमहमस्मा आमुष्यायणाय पुष्ट्यै प्रजननाय गृह्णामीत्याश्वत्थेनापां यो यज्ञियो रसस्तमहमस्मा आमुष्यायणायायुषे दीर्घायुत्वाय गृह्णामीत्यौदुम्बरेणाथैतद्रोहितं चर्मानडुहं[2] प्राचीनग्रीवमुत्तरलोमोपस्तृणाति तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्याभिषिञ्चत्यपां यो द्रवणे रसस्तेनाहमिममामुष्यायणं तेजसे[3] ब्रह्मवर्चसायाभिषिञ्चामीति पर्णमयेनापां य ऊर्मौ रसस्तेनाहमिममामुष्यायणमोजसे वीर्यायाभिषिञ्चामीति नैयग्रोधेनापां यो मध्यतो रसस्तेनाहमिममामुष्यायणं पुष्ट्यै प्रजननायाभिषिञ्चामीत्याश्वत्थेनापां यो

---

१ Thus Be, दक्षिणमक्षिकटम्न्यायति M, दक्षिणे अक्षिकटे न्यक्ति BU, दक्षिणे अक्षिकोटं न्यक्ति Be 7 D

२ All MSS. exc. M ins अथनेनाग्नि।

३ In Bo here and infra all the Datives (•वर्चसाय, ओजसे, वीर्याय etc) are changed into Instrumentals M has everywhere Ins trum

यज्ञियो रथस्तेनाहमिममामुष्यायणमायुषे दीर्घायुत्वायाभिषिञ्चामीत्यौदुम्बरेण । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनादुत्तरत एतद्रूपायितः यतं[1] तिष्ठति रथस्य । तदभिप्रैत्यभिप्रेहि वीरयस्वोग्रश्चेत्ता सपत्नहा । आतिष्ठ मित्रवर्धनस्तुभ्यं देवा अधिब्रुवन्नित्यथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं याविति । रथमातिष्ठत्यातिष्ठ वृत्रहन्निति प्रतिपद्यायं पृथक् रश्मी उपस्थमित्यातो ऽथैतच्छतं[2] त्रिः प्रदक्षिणं परियाय[3] पुरस्तात्प्रत्यायाति । तदध्वर्यवे ददाति । स एष ओदनसवो राज्ञो वा ब्राह्मणस्य वा वैश्यस्य वा पुष्टिकामस्य यज्ञः । ॥ १० ॥ तृतीयः ॥

पञ्चशारदीयेन यक्ष्यमाणो भवति । स उपकल्पयते सप्तदश निरष्टान्वत्सतरानेकहायनान्त्स पुरस्तान्मार्गशीर्ष्यै[4] पौर्णमास्या आमावास्येन हविषेष्ट्वा सप्तदश मारुतीः पृश्नीर्वत्सतरीरालभते । ऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिः संज्ञां कुर्वन्ति । संवत्सरे पर्यवेते मरुद्भ्यः सांतपनेभ्यः सप्तदश पृषतीर्वत्सतरीरालभते । ऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव संज्ञां कुर्वन्ति । द्वितीये संवत्सरे

---

१ Uncertain again, cp p. 350, 6, सतं ति॰ रथं च M; स्वं ति॰ रथं च Be 7 D, स्वं ति॰ रथस् (omitting च) UB; सितस्थि॰ रथस् Be.

२ Thus M sec m, ॰संक्षित pr m, ॰तश्च Be 7 BDU; ॰तद्वं Be

३ पर्याय M, परियाय B, परीयाय the other MSS.

४ Thus M Be; ॰शीर्षा Be 7, ॰शीर्ष्ये DU; ॰शीर्ष्यां B.

पर्यवेते मरुद्भ्यो गृहमेधिभ्यः सप्तदश कल्माषीर्वत्सतरीरालभते । ऽभिप्रोचणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथैतराभिरेव संस्थां कुर्वन्ति । तृतीये संवत्सरे पर्यवेते मरुद्भ्यः क्रीडिभ्यः सप्तदशावलिप्ता वत्सतरीरालभते । ऽभिप्रोचणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथैतराभिरेव संस्थां कुर्वन्ति । चतुर्थे संवत्सरे पर्यवेते मरुद्भ्यः स्वतवद्भ्यः सप्तदश राजीवा[1] वत्सतरीरालभते[1] । ऽभिप्रोचणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथैतराभिरेव संस्थां कुर्वन्त्येतदेवाहर्दीक्षते । संवत्सरमुख्यं बिभर्ति । द्वादशोपसदस्तस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चदश उक्थ्यः सप्तदशो ऽतिरात्रस्तस्य मारुत स्तोमो भवत्यथैतेषां पशूनां त्रयः प्रथमे ऽहन्यैन्द्रामारुता उक्षाणः सवनीया आलभ्यन्त । एवं द्वितीय एवं तृतीय एवं चतुर्थे । पञ्चोत्तमे ऽहन्यालभ्यन्ते । वर्षिष्ठमिव ह्येतदहर्मन्यन्ते वर्षिष्ठः समानानां भवतीति ब्राह्मणमथैतेषां पशूनां यदि नश्यति म्रियते वा याश्वमेधे प्रायश्चित्तिस्तां कृत्वाथान्यं तद्दैवत्यं[3] तद्वर्णं तद्वयसं तद्रूपं[4] तज्जातीयं[4] पशुमालभन्ते । स एष पञ्चशारदीयो राज्ञो वा ब्राह्मणस्य वा । यः कामयेत

---

१ Thus Be 7, राजीवा D, राजीवं U, राजीवंवत्स॰ Be, राजीवत्स॰ B, उक्थ्यो राजीवंवत्स॰ M

२ ॰मुख्यां M.

३ तद्दैवत्यं MSS

४ [illegible] M

वसोर्भूयास्यामिति स एतेन यज्ञक्रतुना यजेत वसोरेव भूयान्भवति ॥ ११ ॥

अग्निष्टुता यक्ष्यमाणो भवति तस्य सर्वमेव समानं पुरोरुच एवान्या अस्याजरासो दम आयूꣳषि पवस इत्यैन्द्रवायवस्य यज्ञा नो मित्रावरुणेति मैत्रावरुणस्याश्विना पिबतꣳ सुतमित्याश्विनस्य द्वे विरूपे चरतः पूर्वापरं चरतो माययैताविति शुक्रामन्थिनोस्तोषि यता चौ यद्वज्ञाग्रमग्निमित्याग्रयणस्य मिथुनत्वृक्थ्यस्य नित्या ध्रुवस्याग्निनाग्निः समिध्यत इत्यैन्द्राग्नस्याग्निर्देवानां जठरमिति वैश्वदेवस्याग्निश्रियो यद्-प्रन्म ईडे अग्निꣳ स्ववसमिति निष्को मरुत्वतीयानाꣳ श्रुधि श्रुत्कर्ण वह्निभिरिति माहेन्द्रस्य विश्वेषामदितिर्यज्ञियानां त्वे अग्ने सामग्न इति नित्य आदित्यस्य[1] पहस्य नि त्वा यज्ञस्य साधनमिति सावित्रस्य नित्या पात्नीवतस्य नियुत्वन्निति हारियोजनस्य स एष त्रिवृदग्निष्टुत्पवित्रं यथा ह वा इदं[2] दावादभिद्रुता[2] अभिदष्टाः[2] पुनर्णवा[3] ओषधयो सञ्जु-त्तिष्ठन्त्येवꣳ ह वा एष एतेन यज्ञक्रतुनेष्ट्वा शुचिः पूतो मेध्यो भवति स यदि मुखेन पापकमन्येत विहृतं कुर्वीत य ह वै

---

१ चादित्यपदस्य M

२ My conjecture, इदं दावादभिद्रुतादभिदष्टा M, इदमभिद्रुतादभिया B Bo 7 (pr. m.) D (pr. m.) U Bo (pr. m); इदं दावादभिद्रुतोदं B 7 D in margin; इदं दैवा अभिद्रुतादभिदृष्टा Bo (sec. m.).

३ Thus Bo 7 BDU, पुनर्णवा Bo M.

मुखेन पापं करोति यो ऽनूचानस्य वा सुमेर्वा दुरवगतमवगच्छति । यदि बाहुभ्यां पञ्चदशं कुर्वीतैष ह वै बाहुभ्यां पापं करोति यो ब्राह्मणायोद्यच्छते । यद्युदरेण सप्तदशं कुर्वीतैष ह वा उदरेण पापं करोति यो ऽनाश्यान्नस्यान्नमश्नाति । यदि पद्भ्यामेकविꣳशं कुर्वीतैष ह वै पद्भ्यां पापं करोति ॥ १२ ॥

य[1] आरट्टान्वा[1] गान्धारान्वा[2] सौवीरान्वा करस्करान्वा[3] कलिङ्गान्वा गच्छति । स यदि सर्वत्र एव पापकृन्मन्येत चतुष्टोमेनाग्निष्टोमेन यजेत । तेन हैतेनर्तुपर्णो भाङ्गाश्विन[4] ईजे[4] शफालानाꣳ[4] राजा । तेन हेष्ट्वा मृगयामभिप्रययौ । तꣳ हेन्द्रो ऽनुख्यायैवेर्चां[5] चक्रे ऽयमु त्वा नयातयै[6] यन्मा[7] यज्ञक्रतोरन्तराय[7] इति । स ह क्षिप्र उदकमभ्यवेयाय[8] । तꣳ ह तत्रैव स्त्रियं चकार । सा सुदेवला नामास । सा हैतदेव राष्ट्रमभ्यारुरोह । सा स्त्री सती पुत्राञ्जनयां चकार । तेभ्यो हेन्द्रः समदं दधौ । ते हता विदृढाः शिश्यिरे[9] । तानुभया-

---

१ Thus Bo 7 D, घोराट्टान्वा M Be, सोराट्टान्वा B, घोरा न्वा U

२ सन्धा० M

३ Thus M Ba 7 D, कार० Bo BU

४ ०आश्विनꣳ रंजमीयानाꣳ M

५ ०र्चा M Be 7 U; ०र्चां Be B

६ नयजातयेय M

७ i.e. यन्मा यज्ञ० Bo D यन्म यंमयाम्रा यज्ञ० ।

८ Thus M Bo 7 D; ०मभ्युपेयाय Bo B

९ Corrected, शि (or शि ?) श्रिरे M शिश्यिरे the other MSS

न्तरेण वेद्यामां चक्रे । ततो हैन्द्र आजगाम । तामु[1] हाभ्युपेयाय[1] । ताᳪ होवाच सुदेवला३[2] इति[2] । भगव इति । प्रियं त्वैतदिति[3] । किं मे भगवः प्रियं भविष्यतीत्येवं वै मम तदप्रियमाशीश्चास्या यदृतकतोरन्तरायो वृणीष्व नु यत्र ते पुत्रा जीवेयुरिति । यानेव भगव स्त्री सत्यधर्ममिति होवाच । तस्माद्राज्ञः स्त्रियाः पुत्राः प्रेयाᳪसो भवन्तीति । स एतस्मिन्नेव पूर्वपक्षे चतुष्टोमेनाग्निष्टोमेन यजेत पुरा श्रेष्याक्रान्त्यै । ॥ १३ ॥

इन्द्रस्तुता यक्ष्यमाणो भवति । तस्य सर्वमेव समानं पुरोरुच एवान्यास्तिष्ठा हरी यस्य त्वया सुते अचेत्यैन्द्रवायवस्येन्द्रं वयं महाधन इति मैत्रावरुणस्य । दिवा यो वृत्रहन्तम इत्याश्विनस्य । स सूर आजनयज्ज्योतिरिन्द्रमुत त्यदाश्वश्वियमिति शुक्रामन्थिनोरभिरेभ्यिन्द्रमित्याग्रयणस्य । नित्योक्थ्यस्य । नियुनक्ति[4] ध्रुवस्य । महि चेत्रं पुरु श्चन्द्रमित्यैन्द्राग्नस्योरुं नो लोकमनुनेषि विद्वानिति वैश्वदेवस्य । नित्या मरुत्वतीयानां । नित्या

---

१ My conjecture; तामयोऽभ्युपेयाय B Be, तामभ्युपेयाय M; ताम्युपेयाय Be 7 D; तामभ्युपेयाय U

२ सुदेवलाऽ इति (this is the way in which Nandinâgarî expresses the pluti) M, सुदेवला इति Be Be 7 D; सुदेवलाति BU. Properly speaking we expect सुदेवलाऽ३ इति, pluti from सुदेवले।

३ त्वैतदिति all the MSS exc M, which reads त्वैतार्त्यदिति, is pluti contained again in त्वैतात् ?

४ नित्या M only

माहेन्द्रस्यो नो विश्वाभिरूतिभिः कदाचन स्तरीरसीन्द्राय गाव आशिरमिति त्रिस आदित्यस्य[1] अहर्यमा[1] ते धिय-मिति सावित्रस्य । नियुनक्ति पात्नीवतस्य । नित्या हारियोजनस्य । स एष पञ्चदश इन्द्रस्तुदिन्द्रियकामस्य । यो वा[2] ज्येष्ठबन्धुरपभूतः स्यात्स एतेन यज्ञक्रतुना यजेताश्नुते हैव ज्येष्ठताम् । ॥ १४ ॥

अप्तोर्यामेण यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्त्रिवृद्बहिष्पवमानः पञ्चदशꣳ होतुराज्यꣳ सप्तदशं मैत्रावरुणस्यैकविꣳशं ब्राह्मणाच्छꣳसिनस्त्रिणवमच्छावाकस्य । त्रयस्त्रिꣳशो माध्यंदिनः पवमानश्चतुर्विꣳशꣳ होतुः पृष्ठꣳ रथंतरं च वैराजं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्ति । चतुश्चत्वारिꣳशं मैत्रावरुणस्य वामदेव्यं च शाक्वरं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्त्यष्टाचत्वारिꣳशं ब्राह्मणाच्छꣳसिनो नौधसं च वैरूपं[3] च सामनी अन्यतरेणान्यतरत्परिष्टुवन्त्येकविꣳशमच्छावाकस्य कालेयं च रैवतं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्ति । तमेतमष्टापृष्ठ इति छन्दोगा आचक्षते । त्रिणव आर्भवः पवमानस्त्रयस्त्रिꣳशमग्निष्टोम-सामैकविꣳशान्युक्थानि[4] सषोडशिकानि पञ्चदशानीतराणि

१ आदित्यपत्र° M Bo

२ om Bo 7 DU

३ Thus (and cp Śānkh. XV 7 4) M Tr U Bo Kes ; वैराज वैराजं or वैरूप्यं the other MSS

४ °न्युक्थानि M Tr °न्युक्थ्यानि all the other MSS

चिद्रथंतरः सन्धिस्तंल्तुद्राः पशवो ऽतिषेदुः[1] सोमो वा एतदतिरिच्यमान इयाय[2] ते[2] देवा[2] अब्रुवन्नग्नीर्वा अयमत्यरेचि तस्य को याम इति तदग्नीयामिस्याग्नीयामत्वं तस्मा एतान्यतिरिक्तस्तोत्राण्यवकल्पयां चक्रुरग्निष्टद्धोतुर्जराबोधीयं पञ्चदशं मैत्रावरुणस्य सौहविषं[3] सप्तदशं[3] ब्राह्मणाच्छंसिन उद्वंशीयमेकविंशमच्छावाकस्य वारवन्तीयं तदु वा आहुर्यदच्छावाकचमसमनु यज्ञः संतिष्ठेतान्तं यज्ञं गमयेद्यथो हान्तं यजमानो गामुकः[4] स्यादुत्र एव स्तुवीरन्होतानुशंस्यात्तथा मध्यतो यज्ञः समाधीयत[5] इति तदु वा आहुः सर्वाण्येवाश्विनानि स्तुतशस्त्राणि स्युर्यद्[6] किंच[7] रात्रिमुपातिरिच्यते सर्वं तदाश्विनमिति[8] न्वेकमंथापरं चित्-

---

१ The MSS. of the text seem all to be corrupt. ॰तिषेदु Tr; तिषेदुः M (if I see right!), तिषेदुः all the other MSS, ॰तिषेदुरतिकामतीत्यर्थः Bhav. (read ॰क्रामन्तो॰).

२ Thus M, इयायवेतंदेवा BUD; इयायतंदेवा Bo, इयायवेतंदेवा H; इयायवेतं Tr.

३ सोहविष सप्त॰ MH, सौभरन्विदविदं सप्त॰ UD, सौ (भौ) भरन्विदविंस॰ सप्त॰ Bo Be 7, सौभरन्विदविशिसप्त॰ B, सोभदं सप्त॰ Tr.

४ Thus M only, कामुकः all the other MSS

५ Thus MHTr Keś, समापद्यत the other MSS.

६ Thus all the MSS., स्युः (i. e., ρ यद्) Karmānta (one MS. यदि) Keś. and Rudr on Āp. XIV. 4.15

७ किंच M.

८ Some of the MSS again इतो, read perhaps ॰मितीत्येक॰।

त्रयस्त्रिंशं[1] सप्तदशमेकविंशमित्येतेषां देवता अग्निरिन्द्रो विश्वे देवा विष्णुरिति । ॥ १५ ॥ चतुर्थः ॥

मृत्युसवेन यक्ष्यमाणो भवति । स उपकल्पयते शार्दूलचर्म सुवर्णरजतौ च रुक्मौ वैयाघ्रावुपानहौ[2] वार्मपच्चावुपानहौ तार्प्यवाससं च क्षौमं च तिसृधन्वमासन्दीं साधीवासां दुन्दुभिं विमितमौदुम्बरं द्रोणं चतुःस्रक्ति चतुष्टयीरपो दिग्भ्यः संभृताः शतं[3] च[3] रथं[3] चैतेनोपक्लृप्तेन चित्रामायती-सुपरमत्यय[4] चिचयेति पूर्वाग्निमन्वयस्त्युत्तपनीयं शालीनो ऽन्वाहार्यपचनमाहिताग्निरथान्वारब्धे यजमाने जुहोति व्याघ्रो ऽयमग्नौ चरति प्रविष्ट इति षट् स्रुवाहुतीरथ यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यत्ते शिल्पं कश्यप रोचनावदिन्द्रियावत्पुष्कलं चित्रभानु । यस्मिन्सूर्या अर्पिताः सप्त साकं तस्मिन्राजानमधिविश्रयेममित्यथ वैयाघ्रावुपानहावुपमुञ्चते[5] द्यौरसीति दक्षिणे पादे पृथिव्यसीत्युत्तरे ।

---

१ ॰शं and the following, neutra HTr, पंचदशः सप्तदश एकविंशम॰ M, nominatives masc. the other MSS., cp also Rudr on Āp l. c.

२ वैयाघ्रीयावु॰ M

३ Uncertain again, cp supra p 354, 3, शतं च रथं चै॰ M, सतं च रथ चै॰ Be 7 D, शतं च रथं चै॰ BU, सित च रथंमे(वेमो॰) Be.

४ Probably M reads च्य, perhaps rightly, i s o च्य, cp supra p. 350, 7

५ वैयाघ्राव॰ Be U, वैयाघ्रियावु॰ M Be 7, वैयाभियावु॰ D, वैयाघ्रावु॰ B

ऽथ दक्षिणं जान्वाच्याभिसर्पति व्याघ्रो वैयाघ्रे ऽधि विश्रयस्व दिशो महीः। विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशदित्यथास्मै धनुः प्रयच्छति यथा राजसूये तथा[1] तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्यौदुम्बरे द्रोणे चतुष्टयीरपः समवनीयाभिषिञ्चति ॥ १६ ॥

या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्ष उत पार्थिवीर्याः। तासां त्वा सर्वासाꣳ रुचाभिषिञ्चामि वर्चसा ॥ अभि त्वा वर्चसासिचं दिव्येन पयसा सह। यथासा राष्ट्रवर्धनस्तथा त्वा सविता करत् ॥ इन्द्रं विश्वा अवीवृधन्समुद्रव्यचसं गिरः। रथीतमꣳ रथीनां वाजानां सत्पतिं पतिम् ॥ वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेण छन्दसेति पुरस्तादेता एव तिस्रो ऽनुद्रुत्य रुद्रास्त्वा दक्षिणतो ऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसेति दक्षिणत[1] एता एव तिस्रो ऽनुद्रुत्यादित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसेति पश्चादेता एव तिस्रो ऽनुद्रुत्य विश्वे त्वा देवा उत्तरतो ऽभिषिञ्चन्त्वानुष्टुभेन छन्दसेत्युत्तरत[1] एता एव तिस्रो ऽनुद्रुत्य बृहस्पतिस्त्वोपरिष्टादभिषिञ्चतु पाङ्क्तेन छन्दसेत्युपरिष्टादथास्योर ऊर्ध्वमुन्मृष्टे ऽरूपं त्वा वृकमुपं स्वयंकारमित्यथास्य वाह अनुमार्ष्टि प्र बाहवा सिसृतं जीवसे न इत्यथैनमुपावहरतीन्द्रस्य[1] ते वीर्यकृतो बाहू उपावहरामीत्यथास्मै धनुः प्रयच्छति यदि पुरस्तादप्रत्तं भवति[1] वसुमुष्टे अमुक्तोऽप्यन्तीति यमामभा मुखस्य विमा-

१ ०पुपावहते० B, ०मुपावहरंतो Bc Bc 7 UD, ०मुपावरोवतो० M

आसन्द्यौ निदधाति । तां तथा प्रत्यवरोहति यथा-राजसूये तथा । ॥ १७ ॥

यावदेवाचाध्वर्युर्यजति तावदेष प्रतिप्रस्थाता वारुणेन श्टतेनोपरमति । वारुणस्य[1] वारुणौ भवतः स्विष्टकृतः स्विष्टवत्यावंचास्या[2] एतच्छतं[3] ददात्यथैनं विमितेनाभिविशन्ति[4] । तस्योत्तरार्धे दुन्दुभिमाघ्नयति । तमसंयात्यादित्य आघ्नन्यथैनः सङ्गास्ति यजमान वाचं यच्छ राष्ट्रे च[5] जागृहीति[5] । सो ऽत ऊर्ध्वं वाचंयमो भवति । स यत्किंच[6] व्याहरति ददामीत्येव व्याहरत्युपसंगच्छन्त एनमेते राजगृह्याः सूतग्रामण्यः[7] क्षत्त-संग्रहीतारः कारुविशा इति । तेभ्यः पष्ठौहीं वेहतं ददाति । तां ते पचमाना रमयन्तो जागरयन्त आसते । ऽथाध्वर्युरपर-राच आहुत्य चतुष्टयीनामपां प्ररेके मध्यमुपमथ्यावघ्राय[8] वानवघ्राय वा प्रयच्छति । तं[9] स[9] भक्षयति तूष्णीमथैनं नवनीतेनाभ्यनक्त्येना व्याघ्रं परिषस्वजाना इत्यथादित्यमुपचन्त-

[1] मद॰ all MSS. exc M.

[2] स्विष्टत्या॰ all exc. M.

[3] Uncertain again; एतच्छं Be 7 BUD; एतच्छिं Be, M has a blank of two akṣaras.

[4] Thus M, ॰भिविश्रंति the other MSS.

[5] Thus M; चराजस्र॰ Be BU; चर्मास्र॰ Be 7 D.

[6] ॰किंचिद् M.

[7] ॰ग्रामण्यः M.

[8] उपमथ्य i.e. उपमथ्य all MSS

[9] Thus M Bo; स्व the other MS

सुपतिष्ठत उद्घावेतु सूर्य उदिदं मामकं वचः। उदिह्नि देव सूर्य सह वग्नुना मम। अहं वाचो विवाचनं मयि वागस्तु धर्णसिरिति। राजगृहान्निप्रव्रजतो ऽनुमन्त्रयते यन्तु नद्यो वर्षन्तु पर्जन्याः सुपिप्पला ओषधयो भवन्तु। अन्नवतामोदनवतामामिक्षवतामेषाꣳ राजा भूयासमिति। ॥ १८ ॥

अथैतद्द्वादशाहं[१] व्रतं चरति। स यदि प्राङ् वोदङ् वोच्चरति क्षौमपवीभ्यां क्षौमं वसानो। ऽथ यदि दक्षिणतः पश्चाद्वा वैयाघ्रीभ्यां कृष्णवासं वसानो। ऽथ द्वादशस्य व्युष्टायां द्वे स्रुवाहुती जुहोति ये केशिनो नर्त इति ताभ्यामथ प्रोष्ठमारोहत्यारोह प्रोष्ठं विषहस्व शत्रूनित्यथास्य शिरः प्रमन्दयति[२] यत्क्षौमन्तं कङ्कतस्ते लिलेखेत्यथास्य केशान्वपति येनावपत्सविता क्षुरेणेति। प्रवपतो ऽनुमन्त्रयते मा ते केशाननुगाद्वर्च एतदित्यथैनान्समुच्चित्य दर्भस्तम्बे निदधाति तेभ्यो निधानं बहुधा व्येक्ष्वित्यथैनमुष्णोदकेनाप्लावयति बलं ते बाहुवोः सविता दधात्विति। तेन हैतेन मृत्युरीजे प्रजानामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति। ततो वै स प्रजानामैश्वर्यमाधिपत्यꣳ राज्यं पर्यैद्यः कामयेत समानानामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति स एतेन यज्ञक्रतुना यजेत। समानानामैश्वर्यमाधिपत्यꣳ राज्यं पर्येत्यथ हैतेन सुरथः मैत्र्य[३] ईजे

१ अथैतद्वा॰ M.
२ प्रमदयति M
३ [illegible]

आतिथ्यं परमतामियामिति । ततो वै स आतिथ्यं परमतामैद्यः कामयेतातिथ्यं परमतामियामिति स एतेन यज्ञक्रतुना यजेतातिथ्यꣳ हैव[1] परमतामेति । ॥ १९ ॥ पञ्चमः ॥

सद्यस्क्रिया यक्ष्यमाणो भवति । स यूप्यं च वृक्षं छेदयति लाङ्गलं चैषां यूपस्य कारयति लाङ्गलं लाङ्गलस्य । तौ सꣳहृत्य भुञ्जते वा नि[2] वा[2] दधत्यथास्यैतत्पुरस्तादेव शुष्टे देवयजने वेदिसंमितं विमितं[3] कारितं भवति । तदेतेन लाङ्गलेन[4] परिहार्य[4] कर्षयति । तस्मिञ्जघन्यवाप्यान्यवान्वापयित्वा[5] परिघातयत्यथास्यैते रथा उपक्लृप्ता भवन्ति चतुर्युक्प्रष्टिवाही द्वियोग[6] स्थूरिरिति[6] । तेषु काल एव दधिविनालानासञ्जयन्ति । स ग्रीष्मस्य जघन्याहःसु प्रजहितेषु यवेष्वृत्विजः पदेनाक्रापयतीच्छा वा मा याजयिष्यथ भर्गं वा वः कारयिष्यामीति[7] । तेषूपसमेतेषु काल एव प्रातरग्निहोत्रं जुहोत्युपसंगच्छन्त एनमेत ऋत्विजोऽथैनानाह सद्यस्क्रिया मा याजयतेति । तं तथेतीतरे प्रत्याहुस्तस्मै तदानीमेव

१ एव om. M

२ Thus M only; न वा दधत्य॰ Be; न वा दधात्य॰ BU, निदधाति वा Be 7 DU (bis).

३ om M.

४ Thus MUDB Be 7, ॰लेनापरि॰ Be U (bis).

५ Thus M, तस्मिन्नीहीन् यथान्यावापयित्वा Be 7 DU; तस्मिन् जघन्यवा-प्यान्यवान्वापयित्वा Be, तस्मिन्नीहीन्यवान्वापयित्वा D.

६ Thus M; दिव्यश्वारि॰ the other MSS.

७ Thus M, करिष्यामीति the other MSS

अथ प्रायणीयेन चरति। प्रायणीयेन चरित्वा पदेन चरति। पदेन चरित्वा त्रिवत्सेन षाण्डेन वत्सतरेण राजानं क्रीत्वोद्ध्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्यैकगणा उपसदो भवन्ति। [1]मध्यमयोपसदा प्रचर्योत्तरवेदौ काले खलेवाल्यौ[2] मापयत्यथा-नडुहः संयुज्य यवान्प्रकृत्य[3] स्तृणन्ति[3]। यवपुरीषैवोत्तरवेदि-र्भवत्यथ मध्ये ऽनडुहः संयुज्य प्राचो यवान्प्रस्तृणन्तो[4] यन्ति। यवबर्हिरेवैषा महावेदिर्भवत्यथाहवनीयं प्रणयत्याहवनीयं प्रणीय सदोहविर्धाने संमिनोति। सदोहविर्धाने संमित्याग्नी-षोमौ प्रणयत्यग्नीषोमौ प्रणीय वसतीवरीर्गृह्णाति। तामिदानी-मेव परिहृत्य प्रातरनुवाकमुपाकरोति। परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यग्निष्टोमं क्रतुमुपैति। प्रसिद्धो ऽभिषवः। प्रसिद्धं ग्रहा गृह्यन्ते। समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वा तिस्रो रशना आदाय खाङ्गल्याममभ्येति। तस्यै कटे परमित्र चषालभाजनं भवति। अकंखान्तां[5] खाङ्गल्यामुत्सृज्याये-

---

१ All the MSS, exc. M have अथ before मध्यमयो॰।

२ M reads खलं i.s.o खलेवाल्यौ; are we to correct उत्तरवेदौ काले खलं मापयति? But then somewhere the words खलेवाली यूपो भवति must have fallen out, cp the Karmānta.

३ Thus M, प्रकृत्यस्तृणन्ति B; प्रस्त्यस्तृणन्ति Be; प्रस्त्यस्तृणन्ति U, प्रस्तृणन्ति U (bis), Be 7 D om this passage

४ प्रस्तृणन्तो M, प्रस्तृणन्तो all the other MSS, read perhaps प्रस्तृणन्तो?

५ Uncertain reading, मकंखांतां M Be U (bis), चकचाखांतां Be 7 DL, प्रकंखान्तां B

तान्यशून्तुपाकरोत्यग्नीषोमीयमाग्नेयमनूबन्ध्यमिति । तेषामनूचीनं[१] वपाभिराद्रवन्ति । ॥ २१ ॥

अग्नीषोमीयस्याध्वर्युर्वपया प्रथमया प्रपद्यते[२] । ऽनूचौ इतरे आहरन्ति । परिहितासु स्तोकीयासु श्रृतासु वपास्वग्नीषोमीयस्य वपया प्रचरति । परीतरे श्रपयन्ति । प्रातःसवनीयानामग्नीषोमीयस्य पशुपुरोडाशो मुख्यो भवति । स्तुते माध्यंदिने पवमाने ऽग्नीषोमीयेण चरत्यनन्तर्हितं[३] आग्नेयस्य[३] वपया चरति । स्वे धामन्नाग्नेयेन[४] चरत्यनन्तर्हित[५] एवानूबन्ध्यस्य[६] वपया चरति । तृतीयसवनीयानामनूबन्ध्यस्य पशुपुरोडाशो मुख्यो भवत्यस्तमुदिते ऽनूबन्ध्येन चरति । संतिष्ठते सद्यस्क्रीः । तस्य यदसद्यस्क्रियते व्यृद्धमेवास्य तत्पुनर्यज्ञ[७] एवास्य[७] तदेयादित्याश्च[७] ह वा अङ्गिरसश्च सुवर्गे लोके पस्पृधिरे । ते

---

१ •नूचीनां M.

२ प्रतिपद्यते M.

३ Thus M, •र्हितमाग्नेयस्य the other MSS

४ Thus M Be B U U(bis) D (pr. m) Bo 7 (pr m), •ग्नेयस्य Be 7 (sec m) D (sec. m)

५ चरत्य• M Be 7 BD, चरत्य• Be U U(bis)

६ च ins Be 7 BD

७ Thus my conjecture, तद्नर्यज्ञ एवास्य स तदादित्याय MU(bis), तद् भ्रुवमेवास्य तत्पुनर्यज्ञ एवास्य स तदादित्याय Be तत्स्य यदयस्य • B तत्स्य यदयज्ञ एवास्य तदयादित्याय Be 7 DU •दयादित्याय

ऽङ्गिरस आदित्यानभिप्रजग्मुरग्निना[1] दूतेन श्वःसुत्या न इत्यथाद्याक्रमसुत्येति ॥ २२ ॥

आदित्याः प्रोचुस्तेषां नस्त्वꣳ होतेति । ते ऽमुमादित्यमश्वꣳ श्वेतं भूतं दक्षिणां निन्यिरे[2] हिरण्याभिभूतरश्मनं[3] । तस्मात्सद्यस्क्रिये श्वेताश्वो दक्षिणा हिरण्याभिभूतरश्मनो । यच्चैतास्य आदित्यस्य तद्रूपमथ यद्धिरण्याभिभूतरश्मनो रश्मीनां तत्तस्य त्रिवृतः शतश्चतुर्विꣳशौ माध्यंदिनार्भवौ भवतश्चतुश्चत्वारिꣳशꣳ होतुः पृष्ठं । चतुर्विꣳशमग्निष्टोमसाम । त्रिवृदन्यत्सर्वꣳ । श्वेतमश्वं ददात्यनुक्रिया यक्ष्यमाणो[4] व्रीहिषु दीयते । स द्व्यहेन संतिष्ठत औपवसथ्यादेकमहः[5] सुत्यसेकमहस्तस्य त्रिवृत एव शतश्चत्वारिꣳशौ माध्यंदिनार्भवौ भवतश्चतुश्चत्वारिꣳशꣳ होतुः पृष्ठं । चतुश्चत्वारिꣳशमग्निष्टोमसाम । त्रिवृदेवान्यत्सर्वꣳ । श्वेतां वडवां ददाति । परिक्रिया यक्ष्यमाणो माषेषु दीयते । स त्र्यहेण संतिष्ठत आ क्रयादेकमहरौपवसथ्यादेकमहः[6] सुत्यसेकमहस्तस्य त्रिवृत एव शतो ऽष्टाचत्वारिꣳशौ माध्यंदिनार्भवौ भवतो । ऽष्टाचत्वारिꣳशꣳ होतुः पृष्ठमष्टाचत्वारिꣳ-

---

१ °स° found in M only.

२ Thus M; all the other MSS more or less corrupt.

३ Thus here and infra all the MSS.; are we to read अभिहित° i.e. अभिद्रुत° ?

४ All MSS. exc. M ins. भवति ।

५ चौपवसथाद्° or औपवसथाद्° MSS

६ Thus M., चौपवसथाद्° the other MSS

ममग्निष्टोमयाम । चिद्देवान्यक्षवै । यथाश्रद्धं ददात्यतिक्रिया यक्ष्यमाणस्तिलेषु दीयते । स चतुरहेण संतिष्ठत आ ऋथादेकमहरोत्तरवेदेरेकमहरौपवसथ्यादेकमहः[1] सत्यमेकमहस्स-तुष्टोम एव भवति । ॥ २३ ॥ षष्ठः ॥

व्रात्यस्तोमेन यक्ष्यमाणो भवति । ते राजनि वा ब्राह्मणे वा प्रतिपदमिच्छन्ते व्रात्याय वर्तवे वा । ते यमभिसंजानते तं स्थपतिं कुर्वन्ति । स एषां व्रतानि चरति । सो ऽधः-संवेश्यमांसाश्यस्त्र्युपायी भवति । तद्धि दीक्षितव्रतमथ यत्कृष्णं वासः कृष्णदूषं परिधत्ते दीक्षितवसनस्य[2] तद्रूपमथ यत्कृष्ण-वलक्षावजिने धारयति कृष्णाजिनयोस्तद्रूपमथ यत्सुवर्णरजतौ रुक्मौ बिभर्ति परिचर्म्ययोस्तद्रूपमथ यत्कृष्णमुष्णीषं धारयति दीक्षितोष्णीषस्य तद्रूपमथ यच्चर्ममयैर्बाणवद्भिर्विक्षिप्तधन्वं धार-यति दीक्षितदण्डस्य तद्रूपमथ यद्व्रात्यवादं वदति दीक्षित-वादस्य तद्रूपमथ यत्कुर्वीवुपानहौ[3] धारयति नेद्दीक्षितः सर्वमेध्यमधितिष्ठानीति[4] तत्तस्य ह वा एतद्रूपस्य यज्ञस्य प्रतोददण्ड एव यूपः । प्रतोदपरिषेवणं[5] चषालम् । रथमुखमा-

---

[1] Thus M, °दौपवसथाद° the other MSS.

[2] Thus M, °वसनीयस्य D, °वसनीयस्य Be 7; the other MSS. still more corrupt

[3] Thus M; यत्कुर्वीतावुपानहौ Be 7 D, यत्कुकुपावुपानहौ B Be U

[4] Thus Be 7, °तिष्ठानीति M.

हवनीय । ईषे[1] वेदियुगमुत्तरवेदिरुत्तरयुगमुत्तरनाभिर्धुर्यौ[2] हविर्धाने । पत्न्यौ आग्नीध्रीयमार्जालीयौ । कूबरꣳ सदः । किंकरावतानाः[3] धिष्णिया । वन्धुरं[4] पत्नीशालꣳ । रथोपस्थो गार्हपत्यो । ऽधिष्ठानं पुराणगार्हपत्यस्तं यमजं प्रसार्य[5] पचन्ते ऽस्य एषां पशुयमपूपꣳ स्थालीपाकꣳ स चरुपशुपुरोडाशौ । यां परिष्कन्दꣳ[6] क्वयति सा पुरोनुवाक्या । यदाहरति सा याज्या । यदश्नन्ति स वषट्कारो । यां कुम्भां[7] विमते सा पुरोनुवाक्या । यामधीवाक्याꣳ[8] सा याज्या । यां विगणꣳ[9] क्वयति स शस्त्रस्य[10] प्रतिगरो[10] । यदभिक्रोशन्ति स उद्गीथस्ते य एवमेतं यज्ञक्रतुं परोक्षमुपेत्य[11] प्रत्यक्षं नोपेयुः ॥ २४ ॥

यथा दीक्षितावकीर्णा विच्छिन्नसोमपीथा अनाम्नाता एवꣳ स्युस्तस्माद्व्रात्यावस्थितस्य[12] व्रात्यस्तोमेनानीजानस्य नाश्यं ।

---

१ Thus corrected ; ईषो M , ईषा the other MSS

२ Thus M , धमुर्यो the other MSS.

३ Thus M , किंक (or कु)रावतना the other MSS.

४ बंधुरं M ; बधुरं Be

५ Thus M , प्रसार्यं Be , प्रसार्य Be 7 BUD

६ पस्कंदं MSS exc M

७ कुंभ्यां MSS exc M.

८ ०मधिवाक्यां MSS exc M.

९ ग्रथं MSS exc M.

१० शस्त्रप्रतिगरो MSS exc M

११ परोक्षमुपेत्य Be BU , परोक्षादुपेत्य Be 7 , पुरोक्षादुपेत्य M.

१२ ०व्रत्याव० १८० ०व्र त्याव० M.

विच्छिन्नसोमपीथ इव ह्येषो ऽनाश्यान्त्स्तेषां ये ऽनाहिताग्नयस्ते यथागृहं विपरेत्याग्नीनाधाय त्रयस्त्रिꣳशता त्रयस्त्रिꣳशता दक्षिणाभि स्थपतिमुपसमायन्ति । तेषां ब्रह्मबन्धुर्मागधो मागधवाक्यो ब्रह्मबन्धुर्पुꣳश्चलू पुꣳश्चलूवाक्या जरत्कद्रथो जरत्प्रयोग्याभ्यां[1] युक्तो । वृद्धो वा एष यो ब्रह्मबन्धुर्मागधो मागधवाक्यो । वृद्धा ब्रह्मबन्धुर्पुꣳश्चलू पुꣳश्चलूवाक्या । वृद्धो जरत्कद्रथो जरत्प्रयोग्याभ्यां[1] युक्तो । वृद्धेनैव वृद्धं निरवदयते तदेतद्व्रात्यधनꣳ समवशान्तं दण्डोपानहꣳ श्यामूलाजिनꣳ[2] । रथे तिष्ठन्सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति । दक्षिणानां काल एतदेवास्य भवत्यृत्विजो दक्षिणा विभजन्ते । तस्य प्रातःसवनीयाननुवर्तन्ते संज्ञान्यै हवीꣳष्यसंज्ञातमिव वा एते चरन्ति ये व्रात्यं चरन्ति । समेवैनान्ज्ञापयन्ति । माध्यंदिनीयाननुवर्तन्त[3] ऐन्द्रामारुत[4] एकादशकपाल[5] । ऐन्द्रो वै व्रात्यो मारुतो ग्रामो । ग्रामेणैवैनान्त्समीचो दधाति । तृतीयसवनीयाननुवर्तन्त आदित्येभ्यो भुवद्वद्भ्यश्चरुं भूता इव वा एते चरन्ति ये व्रात्यं चरन्ति । भूतिमेवैनान्गमयन्त्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तन्त आदित्य-

---

१ ०प्रयोगाभ्यां MSS exc M.

२ श्यामूकाजिनं M, शार्दूलाजिनं the other MSS, but cp Karmānta.

३ ०वर्तेन all

४ ०मारुता all

५ ०कपाल M, ०कपाला the other MSS, this passage is missing in Be 7 D

स्वर्गप्रतिष्ठिता इव वा एते चरन्ति ये व्रात्यं चरन्तीयं वा अदितिरस्यामेव प्रतितिष्ठन्ति। ॥ २५ ॥

स एष ज्योतिषामग्निष्टोमस्तस्य चत्वारि षोडशानि द्वौ पवमानावुभे अच्छावाकस्य स्तोत्रे। एष एव[1] शमनीयमामुख्यस्तस्य षट् षोडशानि सर्वे पवमानाः सर्वाण्यच्छावाकस्य स्तोत्राणि। तेन हैतेन मरुत ईजिरे। तेषां विष्णुः स्थपतिरासीद्[2] हैतेन दैव्या व्रात्या ईजिरे। तेषां बुधः सौम्यः स्थपतिरासीद्धैतेन कुरुपञ्चालानां पुत्रा ईजिरे। तेषामौपोदितिर्गौपालायनो वैयाघ्रपद्यः स्थपतिरास। तेन हेष्ट्वा पञ्चालान्व्रात्या अभिप्रययुस्तान्ह पितर ऊचुर्मा पुत्रकाः पञ्चालानभ्यासिष्टोपवादिनो वै पञ्चाला उप वो वदिष्यन्तीति। ताननादृत्यैव प्रययुस्ते ह केशिनो दार्भ्यस्योपवसथमाजग्मुस्तान्ह स्वो भूते बहिष्पवमानं सर्पतो[3]ऽभ्याजेभिरे पवित्रं वै बहिष्पवमान आत्मानं पवयिष्यामह इति वदन्तो। ऽथ ह पञ्चालेषु गन्धर्वायणो वालेय आग्निवेश्यो ऽनूचान आस। तान्ह[4] स ह[4] सर्पतः पप्रच्छ के सर्पन्तीति[5]। वयं मरुत इति। तेषां वः क स्थपतिरित्ययं विष्णुरित्यौपोदितिर्गौपालायनो वैयाघ्रपद्यः प्रत्युवाच। यत्किं चकर्थ कस्तदपारेतीति ह परोक्षमतमनु-

---

१ om M

२ स्थपतिरास तेषो Be.

३ सर्पतो MSS exc M

४ तान्हभाव सच M. तान्ह UB Be, ह्मद Be 7 D.

५ Thus M, प्रसर्पन्तीति the other MSS Read perhaps सर्पथेति ?

निर्दिदेशेति[1] । तान्होवाचाविदुषो व उपावादिशाप वो ऽस्त्विति । पिता वै[2] तत्पुत्रानुपावादीदिति हैनमूचुः पापीयसी ते प्रजा भविष्यतीति । तथा[3] हैवास[3] । ततो[4] ह वा एतत्पश्चालेषु गन्धर्वायणा वालेया आग्निवेश्याः पापायिता इव । महाकुलं[5] ह[6] तत्पुरा[6] बभूव । स यो ब्रात्यमुपवदेदेवमेवैनमुपवदेदथ यो ब्रात्यो ऽलं प्रतिवचनाय स्यादेवमेवैनं प्रतिब्रूयात् । ॥ २६ ॥

अथातो भासविस्तोमा इत्याचक्षते । त्रिवृदभ्यावर्ति पञ्चदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । पञ्चदशमभ्यावर्ति सप्तदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । सप्तदशमभ्यावर्त्येकविंशमग्निष्टोमसाम सर्वे षोडशाः पवमाना । एकविंशमभ्यावर्ति त्रिणवमग्निष्टोमसाम सर्वे षोडशाः पवमानास्त्रिणवमभ्यावर्ति त्रयस्त्रिंशमग्निष्टोमसाम सर्वे षोडशाः पवमानास्त्रयस्त्रिंशमभ्यावर्ति त्रिणवमग्निष्टोमसाम सर्वे षोडशाः पवमानास्त्रिणवमभ्यावर्त्येकविंशमग्निष्टोमसाम सर्वे षोडशाः पवमाना । एकविंशमभ्यावर्त्ति सप्तदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । सप्तदशमभ्यावर्ति पञ्चदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । पञ्चदशमभ्यावर्ति त्रिवृदग्निष्टोमसाम सर्वे षोडशाः पवमानाः । ॥ २७ ॥ सप्तमः ॥

---

१ Conjecturally, परोक्षात्रतमनुदिनिर्देशेति M, परोक्षाद्व्रतमनुनिर्देशेति Be 7 DU, परोक्षाद्व्रतमनुदिदिशेनिने B, परोक्षाद् व्रतमनुदिदिशेति Be

२ All MSS exc M ins the akṣara श्या।

३ तथा हैवासस्ततो MSS.

४ Th M हैवमस्त the other MSS

अथ वै भवति देवा वै यद्यज्ञे ऽकुर्वत तदसुरा अकुर्वतेति। स ईक्षां चक्रे प्रजापतिः कथं[1] न्वहमसुरैर्देवान्व्यावर्तयेयमिति। स एतं यज्ञक्रतुमनिरुक्तमुपहव्यमपश्यत्तं छिद्रेणानुपाक्रयतेति। स यदाह प्रातर्यावभ्यो देवेभ्य इति मरुद्भ्यः प्रातर्यावभ्यो देवेभ्य इति तदाहाथ यदाह सोमः पवत इतीन्दुः पवत इति तदाहाथ यदाहेन्द्राय पुरोडाशानामिति शक्राय पुरोडाशानामिति तदाहाथ यदाह वायव इन्द्रावायुभ्यामिति नियुत्वते शक्रनियुद्भ्यामिति तदाहाथ यदाह मित्रावरुणाभ्यामित्यृतायुभ्यामिति तदाहाथ यदाहाश्विभ्यामिति नासत्याभ्यामिति तदाहाथ यदाहेन्द्राय सोमानिति शक्रायेन्दूनिति तदाहाथ यदाहेन्द्राग्निभ्यामिति शक्रजातवेदोभ्यामिति तदाहाथ यदाह विश्वेभ्यो देवेभ्य इति मरुद्भ्यो विश्वेभ्यो देवेभ्य इति तदाहाथ यदाहेन्द्राय मरुत्वत इति शक्राय गणवत इति तदाहाथ यदाह महेन्द्रायेति महते शक्रायेति तदाहाथ यदाहादित्येभ्य इति मरुद्भ्य आदित्येभ्य इति तदाहाथ यदाह वनस्पतय इति वनर्नृपायेति[2] तदाहाथ यदाह देवाय सवित्र इति महते[3] देवाय सवित्र इति तदाहाथ यदाह विश्वेभ्यो देवेभ्य इति मरुद्भ्यो विश्वेभ्यो देवेभ्य

---

१ कथम्न्वहमसु॰ M, कथमन्वहमसु॰ Be 7 D, कथयन्कथमसु॰ Be BU.

२ Conjecturally, वनेर्पापायेति M, वनेनव्यवयेति Be 7 D, वनेनव्यवयेति B U वनेनर्पापायेति Be

३ Thus M, ममहते Be 7 Bo D, ममहते BU.

इति तत्राहाथ यत्राह देवानां पत्नीभ्य इति महतीभ्यो देवानां पत्नीभ्य इति तत्राहाथ यत्राहेन्द्राय हरिवत इति शक्राय मघवत इति तत्राह। धाना इन्दुभ्य[१] इत्यु हैके संप्रदिशन्ति। ॥ २८ ॥

तदेतद्वर्षीगेव यज्ञायज्ञियस्य[२] स्तोत्रांयज्ञायज्ञियस्य वाव[३] स्तोत्रे स तां निरुवाच। तदु हासुरा उपेक्षामेव चक्रिरे किं वा वै करोति[४] किं वा नेति। स यदा विदां चकार न वा इम एतर्हि पापभद्रयोरीशत इति तदेनां निरुवाच देवो वो द्रविणोदा इति। प्रजापतिर्वै देवो द्रविणोदाः। पूर्णां विवष्ट्वासिचमिति। पूर्णां व्युदषत्यासिचमिति[५] तदुद्वा सिञ्चध्वमुप वा पृणध्वमित्यांस्य कामंकामं पूरयाध्वा इति तदादिद्वो देव ओहत इति। साध्येभ्यो देवेभ्यः प्रजापतिः कामंकाममूहते[६]। सप्तदश स्तोमो[७] भवति[७]। सप्तदशः प्रजापतिः। प्रजापतेराप्त्या। अश्वो ऽसितशुद्दक्षिणा[८]। प्राजा-

१ Thus M Bo, इन्दुभ्य the other MSS.

२ °यज्ञोयज्ञ M Be

३ om all exc. M

४ करोतनी (sic!) M, indication of pluti ?

५ व्युदषत्य° B Bo U, व्युदषत्य° Bo 7, व्युदषत्य° D, व्युदर्षत्य° M — चसिच° BUD, चासिच° M, चासिच° Bo 7 (pr m) Be, चासिचत° Bo 7 (sec m)

६ Uncertain reading, °मूहते M मूहत the other MSS.

७ स्तोमा भवति M स्तोमो भवति the other MSS

८ °सितशुद्दक्षि° M सितशुद्दक्षि° all the MSS exc M

पत्यो वा[१] अश्वः[१] । प्रजापतेरनुरूपत्वाय । यः पाप्मना भ्रातृव्येण व्याविवृत्सेत[२] स एतेन यज्ञक्रतुना यजेत । क्षेव पाप्मना भ्रातृव्येणावर्तत । इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपाराधमिति मन्यमानस्तं देवा यज्ञेनान्वैषुस्ते[३] प्रतमाभिरं[४] दुहां[४] चक्रिरे[४] भूयो भागधेयं भूयसीं प्रीतिमभ्युपावर्त्स्यतीति[५] वदन्तः । स ह प्रातःसवने नाजगाम । ते[६] सर्व एव प्रातःसवनस्य भक्षयां[७] चक्रुः[७] । को ह्यपेन्द्रस्य[८] सोमस्य भक्षयिष्यतीति । तं संतिष्ठमाने प्रातःसवने ऽच्छावाकस्य शस्त्रं प्रति[९] जघ्नुस्ते[१०] सर्व एव समसाध्वर्यव आगन्दिनो

---

१ Thus M; वाचः the other MSS

२ Thus corrected (cp. Sat Br XII. 4 4 2), व्याविवृत्सेति all exc. M, which has व्याविवर्तेत् ।

३ अन्वैषुस्ते M; अन्वैयुस्ते the other MSS.

४ आभिरं दुदुहं चक्रिरे Be 7 Be D; आभिरं दुदुहे चक्रिरे B; आभीर्दुंहा चक्रिरे M; cp on this passage Pañc Br. XVIII. 5. 12

५ ॰पावर्तिंष्यतीति M.

६ I.s.o. ते (thus M Be B), ततः Be 7 D.

७ Thus M; भानकर्यां चक्रुः or भानकर्याचक्रुः the other MSS. (in Be 7 the passage is missing). Probably the negation has fallen out somewhere

८ अपेन्द्रस्य M

९ प्रतिप्रति M.

१० Thus my conjecture, चक्रुषे M, चक्रुषे or चक्रुहे the other MSS.; cp Āp. śrs XXII 10. 13.

ऽच्छावाकस्य शस्त्रं प्रत्यागर्तुं[1] दध्रिरे[2] । सेन्द्रा इव ह्यमन्यन्त । तस्मात्तीव्रसोमे सर्वं एव चमसाध्वर्यव आनन्दिनो ऽच्छावाकस्य शस्त्रं प्रत्यागृणन्ति[3] । सेन्द्रा इव हि मन्यन्ते । तर्हि वाव तदासीत्तद्‌ वा आहुः सर्व एवैतर्हि यज्ञः सेन्द्र इति । तꣳ हाभिपुप्लुवुः[4] ॥ २९ ॥

इहा इहा इहेतीहेहीहेहीहेहीति[5] ह वा एनं तदूचुरिह-इहेहदितीदं[6] ते इहेदमायं तदभ्युपावर्तस्वेति ह वा एनं तदूचुस्तदेतन्माध्यंदिनस्य सवनस्यान्यत्रापि निदानꣳ । स° प्रतकलशसेकधनानां[7] प्रातःसवने ऽवनयेद्दधि माध्यंदिने सवने । विमथितं तृतीयसवने । सास्य तीव्रता । सप्तदश स्तोमो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । गर्भिणी वडवा ललामी दक्षिणेन्द्रियं वै गर्भ । इन्द्रियं ललामः । सेन्द्रियत्वाय[8] । यो ज्यान्या वोपतपता वाभिमानं नीतः स्यात्स एतेन यज्ञक्रतुना यजेताश्नुते हैव तीव्रतामिन्द्रो ऽकामयत वि पाप्मानꣳ हनीय

१ Thus M only, प्रत्यावर्तं or °गर्त्तं the other MSS.

२ M ins. म before दध्रिरे।

३ प्रतिगृ° MSS. exc. M

४ Thus M, ए वा अभि° U, एवाभि° Be B, स्वाभि° Be 7 D

५ Thus M Be B, इहे तीहे इहे इहेहीति U, Be 7 D (which write only once इहा) : इहेतिहेहिहेहिहेहीति।

६ Before इदं M has once more इहद्।

७ Uncertain, M reads as above given, धवितकशर्धं Be 7 UDB, धन्वितकलशं Be.

८ Thus M Be BU, सेन्द्रत्वाय Be 7, सेन्द्रात्वाय D.

श्रैष्ठ्यं देवानां गच्छेयमिति । स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै स वि पाप्मानमहत श्रैष्ठ्यं देवानामगच्छद्यः कामयेत वि पाप्मानꣳ हनीय श्रैष्ठ्यꣳ समानानां गच्छेयमिति स एतेन यज्ञक्रतुना यजेत । व्येव पाप्मानꣳ हते श्रैष्ठ्यꣳ समानानां गच्छति । तस्यातियाज्यो वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। अधस्पदं तमीं कृधि यो अस्माꣳ अभिदासत्युपयामगृहीतोऽसीन्द्राय त्वा वैमृधाय जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा वैमृधायेति । तस्य त्रिवृत्पञ्चदशौ विपर्यासꣳ स्तोमौ भवतस्ताः षड् गायत्र्यो । गायत्री[1] वै[1] छन्दसां[1] वि पाप्मानमहत । गायत्र्यैव तद्यजमानो वि पाप्मानꣳ हते । ॥ ३० ॥

इन्द्रोऽकामयतौद्भिद्यꣳ[2] श्रैष्ठ्यं देवानां गच्छेयमिति । स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै स औद्भिद्यꣳ श्रैष्ठ्यं देवानामगच्छद्यः कामयेतौद्भिद्यꣳ श्रैष्ठ्यꣳ समानानां गच्छेयमिति स एतेन यज्ञक्रतुना यजेतौद्भिद्यꣳ हैव[3] श्रैष्ठ्यꣳ समानानां गच्छति । तस्यातियाज्योऽयं कृत्नुरगृभीतो[4] विश्वजिदुद्भिदित्सोमः। ऋषिर्विप्रः काव्येनोपयामगृहीतोऽसीन्द्राय त्वोद्भिदे जुष्टं गृह्णामीति । परिमृज्य सादयत्येष

1 Thus M only, गायत्रेण वै छन्दांसि all the other MSS.

2 All MSS. ins ह वै exc. M

3 हवै MB.

4 M ins. (against Taitt. Br.) बधोभः।

ते योनिरिन्द्राय त्वोद्भिद इति ' तस्य पञ्चदशैकविंशौ विपर्यासꣳ स्तोमौ भवतस्ताः षड् बृहत्यो ' बृहती वै छन्दसामुदभिनद्बृहत्यैव[1] तद्यजमान उद्भिनत्तीन्द्रो ऽकामयत वलं[2] भित्त्वा पशून्सृजेयेति ' स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत ' ततो वै स वलं[2] भित्त्वा पशूनसृजत ' यः कामयेत वलं[2] भित्त्वा पशून्सृजेयेति स एतेन यज्ञक्रतुना यजेत ' वलमेव[2] भित्त्वा पशून्सृजते ' तस्यातिग्राह्य इन्द्र ओषधीरसनोदहानि वनस्पतीꣳरसनोदन्तरिक्षम् । बिभेद वलं नुनुदे विवाचो ऽथाभवद्दमिताभिक्रतूनामुपयामगृहीतो ऽसीन्द्राय त्वा वलभिदे जुष्टं गृह्णामीति ' परिसृज्य सादयत्येष ते योनिरिन्द्राय त्वा वलभिद इति ' तस्य सप्तदशैकविंशौ विपर्यासꣳ स्तोमौ भवतस्ताः षड्गायत्र्यो ' गायत्री[3] वै[3] छन्दसां[3] वलमभिनद्गायत्र्यैव[3] तद्यजमानो वलं भित्त्वा पशून्सृजते ' ॥ ३१ ॥ अष्टमः ॥

ऋतपेयेन यक्ष्यमाणो भवति ' स यदग्रनानां कामयते तस्याग्नितो भूत्वा दीक्षते यदा[4] लभते[4] तस्य ' स एकाहं नाश्नात्यथाश्नाति ' द्व्यहं नाश्नात्यथाश्नाति ' त्र्यहं नाश्नात्यथाश्नाति ' सो ऽचैव विराजमाप्नोति[5] ' राजानं क्रीत्वोद्यातिथ्यं

---

१ बृहत्यैव M.

२ बलं most of the MSS

३ Thus M , गायत्र्येव छंदसां वलभिद्गायत्र्येव the other MSS

४ यद्लभते M

५ Thus my conjecture , विराजमाप्नोति M विराजा एनवैति the other MSS

निर्वपति । यद्यु वा एतदुपात्येति चतुरहं नाश्नात्यथाश्नाति । पञ्चाहं नाश्नात्यथाश्नाति । षडहं नाश्नात्यथाश्नाति । तिस्र उपसदस्त्रिंशत्संपद्यन्ते[1] । त्रिंशदक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुन्द्धे । ऽथ य एकादश स्तन एवास्मै स । दुह एवैनां तेनाथ य एकत्रिंश स्तन एवास्मै स । दुह एवैनां तेन । स उपसत्स्वाज्यव्रतो भवति । शीतस्य[2] सर्पिषस्तिसृभिरङ्गुलीभिरुपहन्त्यथ द्वाभ्यामथैकया । शीतस्य[3] वैव[3] सर्पिषस्त्रिभिः पर्वभिरुपहन्त्यथ द्वाभ्यामथैकेन । विलीने वा सर्पिषि त्रीणि पक्ष्मवद्धात्यथ द्वे अथैकं त्रिस्तनद्विस्तनैकस्तनव्रतस्य रूपाणि कुर्वन्नं नादित्याद्दिवा पर्यावर्तते नाग्नेरधि नक्तमौदुम्बरः सोमचमसश्चतुःस्रक्तिर्वेद्या[4] त्रिवेदाः[5] सगोत्रः । ॥ ३२ ॥

सप्तदश स्तोमो भवति । सप्तदशः प्रजापतिः । प्रजापतिमन्नाद्यं नोपानमत्तं देवा व्रतसत्याभ्यामन्वैयुः[6] । स यदश्नाति यदेवास्यानेनावरुद्धं तस्यावरुद्ध्या इति तदथ यन्नाश्नाति यदेवानश्नेनावरुद्धं तस्यावरुद्ध्या इति तदथ यदुपसत्स्वाज्यव्रतो भवत्येतद्वै देवानां प्रियं धाम यदाज्यं । देवानामेव प्रियं धामावरुन्द्ध इति तदथ यन्नादित्याद्दिवा पर्यावर्तते नाग्नेरधि

---

१ ०पद्यते Be 7 BD, ०पद्यंते M Be U.

२ Thus M, विलीनस्य the other MSS.

३ Thus M, विलीनस्य वैव Be U, विलीनस्यैव Be 7 D; विलीनस्य वै B

४ भस्र M.

५ Thus M B U, त्रिवेदः Be Be 7 D.

६ ०मन्वैयुः all the MSS exc. Be which has ०मभैयुः।

सप्तमेते वै देवानामृतपेये' नेद्देवानामृतपेये पृष्ठतः करवाणीति तदर्थं यदौदुम्बरो भवत्यूर्ग्वा अन्नाद्यमुदुम्बर' ऊर्ज एवान्नाद्यस्यावरुद्ध्या इति तदर्थं यत्सोमचमसो भवत्येतद्वै देवानां परममन्नं यत्सोमः' परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्द्ध इति तदर्थं यच्चतुःस्रक्तिर्भवति यदेव दिशो ऽन्नाद्यं प्राविशन्तस्यावरुद्ध्या इति तदर्थं यत्त्रिवेदा[1] भवति न ह्येतामेकवेदा दक्षिणामुद्यन्तुमर्हतीति तदर्थं यत्सगोत्रो भवत्यात्मा वै सगोत्र आत्मन्येव यज्ञस्य यशो ऽन्नाद्यं प्रतिष्ठापयामीति तम्' ॥ ३३ ॥

तं माध्यंदिनीयैश्चमसैः सहोन्नीय जुह्वति' तमृत्विजो हुतं दक्षिणानां काले ब्रह्मण उपातिदिशन्ति' तं ब्राह्मणाः सन्तं[2] पर्युपविश्य भक्षयन्ति यदृतं मन्यन्ते तेन' यदृतेन भक्षयन्ति तदृतपेयस्यर्तपेयत्वं" दिशो ऽकामयन्तान्नाद्यः स्यामान्नाद्यमवरुन्धीमह्यन्नाद्यमस्यासु प्रतितिष्ठेदिति' ता एतं यज्ञक्रतुमपश्यन्तमाहरन्तेनायजन्त' ततो वै ता अन्नाद्यो ऽभवन्नन्नाद्यमवारुन्धतान्नाद्यमासु प्रत्यतिष्ठद्यः कामयेतान्नादो मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति स एतेन यज्ञक्रतुना यजेतान्नाद्येवास्य प्रजा भवत्यन्नाद्यमवरुन्द्धे ऽन्नाद्यमस्यां प्रतितिष्ठति' तस्य चतसृषु बहिष्पवमानी[3] ऽष्टाक्षरास्वाक्षानि[3]

१ त्रिवेदो M

२ Thus corrected according to the Karmānta, सर्वे all the MSS.

३ [illegible] M [illegible] Bc, [illegible] B Bo ? UD, cp supra XV 15 (p. 222 12)

द्वादशो माध्यंदिनः पवमानः षोडशानि पृष्ठानि सविꣳशश्[1] आर्भवः पवमानश्चतुर्विꣳशमग्निष्टोमसाम । तं दिशां चतुष्टोम इत्याचक्षते ॥ छन्दाꣳस्यकामयन्त यशो ऽश्नुवीमहि यशो ऽवरुन्धीमहि यशो ऽस्मासु प्रतितिष्ठेदिति । तान्येतं यज्ञक्रतुमपश्यन्तमाहरन्तेनायजन्त । ततो वै तानि यशो ऽश्नुवत यशो ऽवारुन्धत यश एषु प्रत्यतिष्ठद्यः कामयेत यशो ऽश्नुवीय यशो ऽवरुन्धीय यशो मयि प्रतितिष्ठेदिति स एतेन यज्ञक्रतुना यजेत । यश एवाश्नुते यशो ऽवरुन्द्धे यशो ऽस्मिन्प्रतितिष्ठति । तस्य स्तोमा अस्तुवतैकस्यामथ तिसृष्वेकस्यामथ तिसृषु । तमेतं छन्दसामेकत्रिक इत्याचक्षते ॥ स्तोमा अकामयन्तेति समानः परिवादस्तस्य[2] स्तोमास्त्रिवृदश्च त्रयः पञ्चदशास्त्रिवृदश्च त्रयः सप्तदशास्त्रिवृदश्च त्रय एकविꣳशास्तमेतꣳ स्तोमानामेकत्रिक[3] इत्याचक्षते ॥ ३४ ॥

इन्द्राग्नी वा अकामयेताꣳ समानलोकौ स्याव समानं लोकमियावेति । तावेतं यज्ञक्रतुमपश्यतां । तमाहरतां । तेनायजेतां । ततो वै तौ समानलोकावभवताꣳ समानं लोकमैताꣳ समानलोकावर्धय[4] यौ कामयेताꣳ राजा च पुरोहितश्च

---

१ Thus all the MSS (only सविंश D), in De 7 श has been cancelled.

२ परीवाद° M

३ Thus MD De 7, °स्त्रिक BU, °मत्रिक De.

४ Thus M, °लोकावर्धय De 7 BUD, °लोकावर्धन De.

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

New Series, No 1322

# बौधायन श्रौतसूत्रम् ।

# BAUDHĀYANA ŚRAUTA SŪTRAM




EDITED BY

DR W CALAND OF UTRECHT

VOL II FASCICULUS V

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS

AND PUBLISHED BY THE

ASIATIC SOCIETY 1 PARK STREET

1912

समानलोकौ स्याव समानं लोकमियावेति तावेतेन यज्ञक्रतुना यजेयाताम्[1] समानलोकावेव भवतः समानं लोकमितो ऽश्वरथो यज्ञायुधः प्रासङ्ग्यश्वसः सा ब्राह्मणस्य दक्षिणाश्वतरीरथः सर्वायुधो ऽप्रासङ्ग्यः काम्स्यस्तूणीबन्धः[2] सा राजन्यस्य दक्षिणा । तस्य त्रिवृत्पञ्चदशौ विपर्यासम् स्तोमौ भवतस्त्रिवृदेव ब्राह्मणस्य पञ्चदशो राजन्यस्य । तमेतमिन्द्राग्नियोः कुलाय इत्याचक्षत । एष एव सन्धितापुत्रीय एष सख्योर्यज्ञ एष भ्रात्रोः ॥ ॥ ३५ ॥ नवमः ॥

अभिचरणीयैः सोमैर्यक्ष्यमाणो भवति । स इयानि यज्ञायुधान्युपकल्पयते बाधकानि च तैल्वकानि च शवानसो[3] ऽधिषवणे फलके पुरुषाश्वस्य[4] वृषणौ । स यत्राध्वर्युरुपांशुं गृहीत्वाजानमभिषुणोति तस्य यो ऽंशुः परापतति तमेतस्मिन्पात्र आधायोपसंगृह्याथाहामुं जह्यथ त्वा होष्यामीत्यातमितोरास्ते । ऽथैतं भङ्गमाहवनीये ऽनुप्रहरतीदमहममुमामुष्यायणं परिस्रुना[5] भङ्गेन[5] विध्यामीत्यथ यं यजमानो द्वेष्टि

---

१ यजेतां all exc M

२ ॰तूणीबंध Be, ॰तूणिबध॰ U, तूष्णीबंधः M, ॰तूणिबध्यः B, णीविबंधः Be 7 D

३ Thus M Be, सवनभ्ये Be 7 D (cp Āp XXII 4 17, S'ānkh XIV 22. 18, Sadv br III 8), सवानमभ्ये U, सवानमभोग्यो B, cp the Dvaidhasūtra

४ Thus M, all the other MSS. corrupt

५ Thus M, परिस्रुनासम्येन Be U B, परिपामाभस्येन Be 7 D

प्रायणीयायां चतुर्विंशतिमाने ददात्यातिथ्यायां द्वे[१] चतुर्विंशतिमाने[१] ददाति । प्रथमायामुपसदि चत्वारि ददाति । द्वितीयस्यामुपसद्यष्टौ ददाति । तृतीयस्यामुपसदि षोडश ददाति । चतुर्थ्यामुपसदि द्वात्रिंशतं[२] ददाति । पञ्चम्यामुपसदि चतुःषष्टिं ददाति । षष्ठ्यामुपसद्यष्टाविंशं शतं चतुर्विंशतिमानानां[३] ददात्यथातः शतसंख्यैवाग्नीषोमीयस्य हुतायां वपायां द्वे शते ददात्याग्नेयस्य हुतायां वपायां चत्वारि ददाति । प्रातःसवनीयेष्वष्टौ[४] ददाति । माध्यंदिनीयेषु षोडश ददाति । दक्षिणानां काले द्वात्रिंशतं ददाति । तृतीयसवनीयेषु चतुःषष्टिं ददात्यनूबन्ध्यस्य हुतायां वपायामष्टाविंशं शतानां[५] ददाति । स यदेताभ्यामिष्टिभ्यामहरहर्यजते सूर्याचन्द्रमसोरेव तत्सायुज्यं सलोकतामाप्नोति । ॥ ३७ ॥

[६]अथ यद्धिरण्यदक्षिणो[७] भवति हिरण्मयमेव तद्यजमान

---

१ Thus M, त्रिंशतिमानं ददात्यथ Be B; in the other MSS this passage is missing

२ Thus M U, त्रिंशत Be, in the other MSS. this passage is missing

३ Thus M, ॰शतिमानं the other MSS.

४ ॰सवनीयेष्टौ Be 7 D.

५ Thus M Be 7, शतमानानां Be B U

६ During the printing I was so happy as to obtain, for the remaining part of this praśna, from Mr Muthu Dikshitar of Lalgudi (Manakkāl, Madras) a copy (designed by me as L) from a MS. in his possession. This MS is in Grantha and independent from my MSS., but, on the whole, not much better.

७ Thus M, यद्धिरण्यं दक्षिणा the other MSS.

दुर्णाशस्त्वंदुर्णाशस्य[1] दुर्णाशत्वं[2] " केशी ह दाल्भ्यो ऽपचितिकामो ऽपचितिमेत्तेन[3] नो[3] नामानि[3] परिहरन्ता[4] इति । ततो ह वा एतत्पञ्चालराजानां[5] नामानि परिहरन्ते[6] ॥ ३८ ॥

शीर्षण्या इति केशानाचक्षते । कुशा इति दर्भान्वेदा-विति[7] गैरेयकविमत्यौ[8] । ततो वै सो ऽपचितिमानभवद्यः कामयेतापचितिमान्स्यामिति स एतेन यज्ञक्रतुना यजेतापचितिमानेव[9] भवति । तस्य चतुर्विंशो बहिष्पवमानस्त्रिवृत्पञ्चदशान्याज्यानि । तास्त्रिशो गायत्र्यश्चतुर्विंशो माध्यंदिनः पवमानः पञ्चदशसप्तदशानि[10] पृष्ठानि । ते द्वे त्रिष्टुभौ । त्रिणव आर्भवः पवमान एकविंशमग्निष्टोमसाम । सैका जगत्येतानि वै छन्दसामपचिततमान्यपचितिमानेव भवति य एवं वेदाथा-वादित्यो ऽकामयत त्विषिमान्स्यामिति । स एतं यज्ञक्रतु-

---

१ दुर्नंश॰ Be, दूर्णाश॰ M L, the other MSS om.

२ Most of the MSS दुर्णश॰ or दूर्णाश॰ (both times)

३ Thus M, L om नो; तंननामानि Be, तद्योनामानी Be 7 U D; तंनोनामनी B

४ Thus M Be 7 D, ॰हरत Be B U L.

५ Thus M; ॰पाचाल॰ the other MSS.

६ Thus M Be L, ॰हरंत्या Be 7 D U, ॰हरत्या B.

७ Uncertain, दर्भानदाविति M, दर्भान्नदाविति L, दर्भानविदाविति Be B

८ Uncertain reading, गैरेयकविमंथौ (or मेथौ?) M, गेरैयकविमत्यौ Be 7, वौरेयकविमत्यौ Be B, गेरेय॰ D, गैरयकचितिमत्यौ L

९ Thus M L, एषु instead of एव all the other MSS.

१० Thus M Be U, पचदशःसप्त॰ B L, Be 7 om. पंचदश ।

इति[1] वदन्तो । वनिष्ठुसवेन यक्ष्यमाणो भवति । स उपकल्पयते शतमुपवेषतः[2] शतं दार्वाचितानि शतꣳ सर्पिष्पात्राञ्जतं पयःपात्राञ्जतं दधिपात्राञ्जतं वसापात्रामौदुम्बरीं नावमुभयतोऽभिपतनां[3] परिगृह्णीतामथ प्रणेहनैतेनोपकृतेन चिचामायतीमुपरमत्यंच चित्रयेति । पूर्वाग्निमन्वस्यत्युत्तपनीयꣳ शालीनो ऽन्वाहार्यपचनमाहिताग्निर्यैतानि दार्वाचितानि प्रदोष एवाग्नावादधाति[4] । तेषु[5] प्रज्योतिषूपवेषतो[5] निम्नन्त्येषामभ्यधान्वनिष्ठून्मेदाꣳसीति[5] अपयन्त्यथोदित आदित्य आयातयत्यौदुम्बरीं[6] नावमुभयतोऽभिपतनां[7] परिगृह्णीतां प्रणेहभिस्तांस्तामुपस्तृणीते पञ्चाशता सर्पिष्पात्रैः पञ्चाशता पयःपात्रैः पञ्चाशता दधिपात्रैः पञ्चाशता वसापात्रैस्तस्यां वनिष्ठून्मेदाꣳसीति संप्रकीर्याथाभिघारयति पञ्चाशता वसापात्रैः पञ्चाशता दधिपात्रैः पञ्चाशता पयःपात्रैः पञ्चाशता सर्पिष्पात्रैरथ पुरोऽनुवाक्यामन्वाह ॥ ४० ॥

---

१ Thus Be L, मत्स्यामीति Be 7 B U D

२ Thus L, ॰मुपवैशत Be 7 D, ॰मुपवेनिहतान् Be B U.

३ Uncertain reading, ॰भयतोपतना Be 7 B, ॰भयतोभिपतना Be U; ॰भयतोवतानां (or ॰वतारं) D; ॰भयतोभिपवमानं L

४ ॰दधति L.

५ तेन प्रज्योतिषु स्ववहतोनिघ्नन्ति L, तेषु प्रत्योतिष्ठं(or ष्ठ)पवैहतो घ्नंत्य॰ Be 7 D, तेन प्र ज्योतिषुपवेहतानिघ्नन्त्य Be B U ॰मभ्यर्धाद्द् 1 s. o ॰मभ्यर्धान् L

६ Uncertain r, ॰यातयत्य॰ U B ॰घापयत्य॰ D, ॰धापयत्य॰ Be 7, ॰घाभौमयत्य॰ B ॰यायातयति L

७ ॰पतानां B, ॰वतानां Be 7, ॰भिपतारां Be U ॰मुभयतस्त्वभिपतनां L.

इन्द्रो यातो ऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः । सेदु राजा क्षेति[1] चर्षणीनामरान्न नेमिः परि ता बभूवेति । यज्ञतोऽन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति । ततो ददातु दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् स्वाहेति । इष एवात्रा इन्द्र आविर्भवति । तस्मै[2] कामान्नुवते ॥ कामान्स्वऽ[3] ह[3] वाध्यश्वं बृहस्पतिराङ्गिरसो याजयां चकार । तस्य होपवसथीये ऽहन्स्मृद्धा[4] वीयाय[5] । स होवाचाध्वर्यो[6] वि[6] वै[6] मे शद्धागात्तं मे यज्ञऽ स्थापयेति । तऽ होवाचान्यद्वै तदुपवसथः[6] स्वस्ते यज्ञः सऽस्थातेति[7] । स होवाच सत्येव मे स्थापयेति । तस्य[8] ह तावदिदित्वाऽपि[9] हविर्धाने

१ चेति (as TBr. II 8 4. 3) Be B D U ; क्षयति (as RV. I 32. 15) Be 7.

२ तस्मिन् Be L

३ Corrected ; कामागार B U Be (pr. m.) ; कामागारेव Be 7 ; कामागारेवं D ; कामीयवार Be (sec. m ), कनीयवाश्व L.

४ My conjecture ; हनूयद्वाविधाय B U L ; हनूयद्वाविधाय Be ; हनूयंचाद्यविधाय Be 7 D.

५ Thus Be , all the other MSS. corrupt

६ Uncertain ; होवाचान्यद्वैतदु० Be 7 D , होवाचाध्वर्यवेतदु० Be B U ; होवाच अध्वर्यवेत उप० L

७ ०स्थावेति Be B U , ०स्थादेति Be 7 D , ०स्थायेति L

८ तस्मा MSS exc. L

९ तावद् only in Be (sec m ) , भवद् L , instead of विदित्वा (thus L Be) विदित्वा the other MSS

धर्मण्युलूखलमुसले निधायाऽंशूंस्समवचुदां[1] चकार[1] यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिरित्यथ होतृचमसे वसतीवरीभ्यो ऽध्यपो[2] निःपिष्य समुदायुत्य जुहवां चकार यथा जना सङ्स्तथे व्रतानि[3] को-व्रतिनां[4] व्रतमालोभयाति[5] । कानान्धस्य[6] प्रस्थितं[7] वाभ्रश्वस्य[8] तीव्रसुतङ्[8] श्ववदिन्द्र[9] जुषस्व स्वाहेति । स एष उन्मत्तस्य वा वीतश्रद्धस्य वा[10] नीतस्य[10] वा यज्ञः । सा[11] यदागता[12] स्यादथ चतुष्टोमेनाग्निष्टोमेन यजेत पुरा भेषाच्छान्त्यै ॥ ४१ ॥

मनुर्वैवस्वतो ऽकामयत प्रजाङ् सृजेय प्रजामवरुन्धीय प्रजां विन्देया[13] मा[13] प्रजया पशुभिरश्निति[13] । स एतं

१ •समवमुराश्चकार L.

२ ध्यपो only in Be L

३ व्रतानि MSS exc L व्रतानि ।—जनाश्सथे L

४ व्रतिनां Be, व्रतीनृपं L, व्रतीनां the other MSS.

५ व्रतमालोभयाति Be, •यति L, व्रतमामालोभयति the other MSS

६ Thus Be L; the other MSS corrupt.

७ प्रस्थितं all exc. Be which has प्रस्थितं ।

८ वाभ्रश्वस्तीव्रसुतं Be B; वाभ्रश्व.स्तीव्रसुतं U, वाभ्रश्वेतीव्रसुत Be 7; वाभ्रश्वेतीव्रसुत D, वार्ध्रश्वस्तिव्रसुतं L

९ श्ववदिंद्रा Be 7 D, मिद्रवदिंद्रा Be, निवपतींद्रा B, निवपंतींद्रा U, निवदिन्द्रो L.

१० Thus Be L, वनितस्य BUD, वन्नतस्य Be 7.

११ स MSS.

१२ यदागत Be L, यदागता B Be 7 DU.

१३ *Conjecturally*, विन्देय मा प्रजयापशोरश्निति BU, विदेय मापजमाप• Be, विदेय मापजयापवरंनीति Be 7 D, विन्देयप्रजयापषो• L

यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै स प्रजामसृजत प्रजामवारुन्द्ध प्रजामविन्दतैनं प्रजयापश्यत[1] । यः कामयेत प्रजाꣳ सृजेय प्रजामवरुन्धीय प्रजां विन्देया[2] मा प्रजया पश्येरन्निति[2] स एतेन यज्ञक्रतुना यजेत । प्रजामेव सृजते प्रजामवरुन्द्धे प्रजां विन्दत[3] ऐनं[3] प्रजया पश्यते । तस्य[4] प्राचीनस्तोमास्त्रयस्त्रिवृतस्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविꣳशाः ॥ सो ऽकामयताश्वादो मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति । स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै तस्याश्वादो प्रजाभवदन्नाद्यमवारुन्द्धान्नाद्यमस्यां प्रत्यतिष्ठद्यः कामयेताश्वादो मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति स एतेन यज्ञक्रतुना यजेतान्नादैवास्य प्रजा भवत्यन्नाद्यमवरुन्द्धे ऽन्नाद्यमस्यां प्रतितिष्ठति । तस्य दश स्तोमा । दशदश स्तुवते विराजो रूपं ॥ वागाम्भृण्यकामयतापरिमितं यशो ऽश्नुवीयेति । सैतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै सापरिमितं यश आश्नुत । यः कामयेतापरिमितं यशो ऽश्नुवीयेति स एतेन यज्ञक्रतुना यजेतापरिमितमेव यशो

---

१ °पश्यते all exc. Be L.

२ विन्देय मा प्रजामापश्यरन्निति Be D; विन्देय प्रजयापश्यरंनीति B Be 7 U विन्देय मा प्रजामापश्यैरन्निति L

३ Thus corrected; विंदत एवं Be L, विंदैनं the other MSS.

४ Only in Be L.

ऽर्बुते। तस्य दशमस्तु बहिष्पवमानः शते सहस्रे ऽयुते प्रयुते ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे" ॥ ४२ ॥

यमो वैवस्वतो ऽकामयत पितॄणामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति। स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत। ततो वै स पितॄणामैश्वर्यमाधिपत्यꣳ राज्यं पर्यैद्यः कामयेत समानानामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति स एतेन यज्ञक्रतुना यजेत। समानानामैश्वर्यमाधिपत्यꣳ राज्यं पर्येति। तस्य शते बहिष्पवमानः सहस्रे ऽयुते नियुते प्रयुते ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे पद्मे पद्मे। नित्यशुक्रा मनसैव स्तुवानो मन्यत एतावति[1] मे[1] स्तुतमित्यथ[1] सकृत्प्रवर्ग्य। आतिथ्येन प्रचर्य गार्हपत्ये प्रवर्ग्यं प्रवृणक्ति। तेनाहवनीये प्रचरति। तं काल उद्वासयति। शिरो वा एतद्यज्ञस्य यदातिथ्यं। यशः प्रवर्ग्यः। शीर्षन्नेव यज्ञस्य यशो दधातीति नु सकृत्प्रवर्ग्यो। ऽथ सुते प्रवर्ग्यः। पवमानेन चरित्वाग्नीध्रे[2] प्रवर्ग्य प्रवृणक्ति। तेनाहवनीय एव प्रचरति। तं तदानीमेवोद्वासयति। शिरो वा एतद्यज्ञस्य यत्पवमानो। यशः प्रवर्ग्यः। शीर्षन्नेव यज्ञस्य यशो दधातीति नु सुत्याप्रवर्ग्यो। ऽथ सकृत्प्रवर्ग्यो। ऽथ सुते प्रवर्ग्यो। ऽथ सुत्याप्रवर्ग्यः[3]" ॥ ४३ ॥ एकादशः ॥

---

[1] Uncertain r.; एतावतीमेस्तुतमित्यथ Be, एतावत्ति मे स्तुत० L; एतावती (ति) मेत्यथ the other MSS.

[2] MSS exc L ins. वै।

[3] The close of this chapter must contain several corruptions

[1]पुरूरवा ह पुरा ऐडो राजा कल्याण आस। तꣳ होर्वश्यप्सराभिदध्यौ। तꣳ संवत्सरं कामयमानानुचचार। तꣳ ह स्म वै[2] पूर्वं ऽभिधास्यन्ति। तद्धातिचिरं मेने। तस्य ह धावतः पुरो रथं कर्तं दर्शयामास। तꣳ ह दृष्ट्वा राजावतस्थौ। तꣳ हावस्थाय न ददर्शाथो ह पुनरातस्थौ। तꣳ हास्थायैव ददर्श। स ह सारथिं पप्रच्छ सारथे किं पश्यसीति। त्वां भगव इति होवाच रथमश्वान्पन्थानमिति। स हैवां चक्रे दृष्यामि वै किलेति। तꣳ ह वागभ्युवाद न वै दृष्यस्यहं वै त्वामेतत्[3] कर्तमदीदृशमित्यथ कस्त्वमित्यहमुर्वश्यप्सरेति होवाच। सा त्वा संवत्सरं कामयमानान्वचारिषं। तां मा जायां विन्दस्वेति[4]। दुरुपचारा ह वै भवति[5] देवा[5] इति[5] होवाच। का त[6] उपचर्येति[6]। शतं[7] समोपसदः[7] स्युः[7]। शतꣳशतं मा सर्पिष्कुम्भा

---

१ This and the following adhyāyas are found also in a badly corrupted tradition. I did not note all the various readings nor all my emendations; the list of them would fill more space than the text itself

२ Thus L only, चैव or दैव the other MSS.

३ त्वयित or त्वयितम॰ MSS.

४ L Be sec m. विन्देति।

५ Thus L U Be 7; भवंति देवा इति B Be (pr.m.), भवतो देवीति Be (sec m).

६ Thus L Be (sec. m), तवाचार्येति the other MSS.

७ Instead of these three words given thus by Be and L (which only gives स instead of सम), the other MSS. मं कालौम-सदस्यु or मंकालीय इति सदस्य।

अथैरहरागच्छेयुस्तदाश्मना स्यां । न त्वा नग्नं पश्येयमिति । सर्वमेवैतद्भगवति सुकरमिति होवाच । कथा त्वयि[1] जाया पतिं नग्नं न पश्यतीत्यन्तर्वासं वसीथा[2] इति होवाचानग्नो भवेति[3] । तया सहोवासान्तर्वासं दधानः । सा ह स्म जाताञ्जातानेव पुत्रानपविध्यति । तां ह राजोवाच पुत्रकामा ह वै भगवति वयं मनुष्याः स्मो जाताञ्जातान्नु त्वमपविध्यसीति । सा होवाच पर्यवेतरायवो भवन्ति क्षीणायुषो ऽन्ये । भूयः प्रियं करवावहा इति । आयुं[4] चामावसुं च जनयां चकार । सा होवाचेमौ बिभृतेमौ[5] सर्वमायुरेष्यत इति । प्राङायुः प्रवव्राज । तस्यैते कुरुपञ्चालाः[6] काशिविदेहा इत्येतदायवं प्रव्राजं । प्रत्यङमावसुस्तस्यैते गान्धारय[7] स्पर्शवो ऽराट्टा इत्येतदामावसवम्[8] । ॥ ४४ ॥

अथो हास्या एषा पूर्वचित्तिरप्सरा स्वसा बभूव । सा हैवां चक्रे ज्योग् वै मे स्वसा मनुष्येष्ववात्सीद्धन्तैनामच्छाया-

१ त्वयि L, त्वयि the other MSS

२ वसीथा L Be (sec m.) वासीत्यास्य the other MSS

३ भवति MSS. exc. L, which has वेन ह वासमो भवसीति ।

४ आयुं Be (sec. m ).

५ बिभृते॰ Be L , the other MSS om. these words

६ ॰पांचालाः L B.

७ The proper names given acc to Be (sec m ), the other MSS. गान्धारा (or रौ) पयस्पर्शवोदारा (or त्र) श्रा (or षा) ।

८ इत्येतन्मावसुम् or इत्येतमामवसुम् or इत्येतमामावसम् MSS

नीति । तया सहागत्यैव संगमं न लेभे । उर्वो ह्यस्या अवियूयमुपस्थापदासीत्तं[1] ह स वै पूर्वार्धा गन्धिपीणां[2] रूपं[3] भवति । तद्वकरूपं कृत्वा प्रमाय[3] चिकायांथो[4] ह्यस्या उरणः षौरप आसन्दीपादे बद्ध आस । तं[5] सा प्रममाथ । तस्मिन्हि-यमाणे रुरुवे[5] ऽयमवीरजं[6] इति । तच्छ्रुत्वा राजोत्पपात । तामभ्यानम्[7] तामभ्युपेयाय । तं[8] सा[8] नकुली[8] भूत्वा प्रत्युपेयाय । तस्य हान्तर्वासमवलुप्योपाय ह सा विद्युतं जनयां चकार[9] । [10]तं सा विद्युति नग्नमनुपश्यावयो ह राजाजगामास्खारहं वा अवृजजीत घटणमत्यसाहहंहि नूनमिति[11] प्रत्यहं प्रजहिष्यामीति । किं ह्यभूदिति । नग्नं त्वादर्शमिति[12] होवाच । तस्यां प्रव्रजितायामभियविद्धः

---

१ Thus (only अपि॰ or अया॰) MSS.

२ Only in Be (sec. m)

३ Thus Be L (sec. m.); यं the other MSS.

४ विष्णापायो Be (sec. m.), भिक्षायायो or चिवयायायो or विक्षायायो the other MSS.

५ रुवेने Be (sec. m); रुपेन L; रुवे the other MSS.

६ Corrupt, यमवीरजा Be (sec. m.) L; यमविराजा the other MSS.

७ ॰भ्यानरस MSS

८ Conj.; संकुली Be (sec. m); नधंनेकुली the other MSS.

९ Thus L Be (sec. m.), जनयामास the other MSS.

१० Be 7 ins याक्के चकार, B Be (orig) ins घावोचकार।

११ These corrupted words without any var. r. in all MSS.

१२ त्वादर्शमिति MSS.

मोघंश्चचार[1] । तंह होवाच बृहस्पतिराङ्गिरसो यन्न त्वा मदेन[2] याजयिष्याम्यपयि त्वा पुनर्जिगमिष्यामीति[3] । तंह मदेन[4] बृहस्पतिराङ्गिरसो याजयां चकार । तांह हावभृथादेवोदेत्य प्रतिददर्श । तांह ह पुत्रौ प्रतीत्योचतुरिह नौ नय यत्र ते गतिर्वसिनौ[5] वां[5] पितरमशुश्रुव[5] इति । सा[6] होवाच सं वां[7] पुत्रकौ जनेय याविमिह तिस्र एव रात्रीर्वत्स्यामि नो ब्राह्मणस्य वचो मोघमभूदिति । तया सह तिस्र[8] एव[8] रात्रीरुवासान्तर्वासं वसानस्तस्यांह रेतः सिषिचे । सा होवाच[9] कथमिदंह स्यादिति । कथंह हि नूनाहमिति[10] राजा प्रत्युवाच । सा होवाच भवान् कुम्भीमाहरेति । तस्यामेनन्निःषिषेचाय[11] ह कुरुक्षेत्रे विसवत्यो[12] नाम पुष्करिण्यस्तासामुत्तरार्ध्यां सुवर्ण-

---

१ Conj.; मोघं चकार or चचार MSS.

२ दर्मेने MSS.

३ •जिग्मिष्या• MSS

४ मदेन MSS.

५ Thus Be ( sec m., only •शुश्रुव ), •वसिषैनावपितरं शुश्रुव or •वसिषैनामपित• the other MSS

६ From सा unto होवाच (p 399 8) only in Be L.

७ वा Be.

८ om Be.

९ cp p. 399, n. 6.

१० नूनाहमिमि L, नूनामिति the other MSS

११ Thus L, तस्यामेनं• Be (sec m ), तस्यामेवं the other MSS.

१२ विसवत्यो Be (sec m.), विवस्वत्येना the other MSS

सवमौ। तस्मान्नेनच्छिदस्राम। तद्यत्वो ऽग्ने गम्या परिवृतो रेतसो ऽध्यत्य आगयाच्छ्रम्येव ममीनगर्भस्य स्पृष्टिरेतद्विदान-मेध[1] वै भवति सर्वध[2] वै देवाः सुवर्गं लोकमायन्निति। स यद्द हैतद्यशो देवेभ्यो ऽधि मनुष्यानभ्यवदरोहामत्यहृ[3] दैव तमभ्यवदरोह। तस्मात्रणो चक्रिरे[4] ऽयं वाव स यश रात्र्यो यत्तु च एव यज्ञादत्यः[5] स मलीगर्भः। स यदा-त्रोर्वमभ्यायुरसि पुष्करता इत्येतयाकैवैतत्पितापुत्रौ नामानि स्त्रात्र्यो मामान्यमेवैमद्दूहेत[6]। तस्यां प्रमजितायां पुनरेवा-भियविद्धः[7] प्रोचरुश्चचार। तदृ होवाच बृहस्पतिराङ्गिरसो एन्त सौपमदेन[8] याजयिष्यामि वि वै ते ऽप्रियमेवैष्यतीति। तमौपमदेन बृहस्पतिराङ्गिरसो याजयां चकार। ततो वै तस्याप्रियं[9] विनिनाय। तौ ह वा एतौ पौष्करवसौ नाम मदौपमदौ। स यो वित्तद्द सिषाधयिषेत्तद्द मदेन याजयेत्तस्य

---

१ ॰नियामसव MSS exc. L.

२ cp. TS, I. 7. 1 2.

३ ॰वरोहावर्त्यं or ॰म्य MSS

४ चक्रिरे L Be (sec. m); चक्रिरे the other MSS.

५ Thus L; यत्तु च स्वायात्यः Be (sec. m.), यत्त्येवकव(च)ात्यः the other MSS

६ Thus L, मामान्यमेवैमृहते Be (sec. m.), ॰मेवैस्य कहते the other MSS.

७-८ only in L Be (sec. m.)

८ सौ om. MSS

दशसु बहिष्पवमान। एकैकोपशीयत[1] ऐकविंशत्यै[2] सुनोतीहैवाय[3] यो ऽप्रियं विनिनीषेत्तमौपशदेन[4] याजयेत्तस्यैकविंशत्यां बहिष्पवमान। एकैकावशीयत आ दशभ्यो॥ ऽथ प्राजापत्यौ नाम शदौपशदौ। तस्य तिसृषु बहिष्पवमानेषु तिस्रस्तिस्र उपशीयन्त आ षट्त्रिंशतः। षट्त्रिंशत्सु बहिष्पवमानेषु तिस्रस्तिस्रो ऽवशीयन्त आ तिसृभ्यो॥ ऽथ नैध्रुवस्य[5] काश्यपस्य शदौपशदौ। तस्य चतसृषु बहिष्पवमानेषु चतस्रश्चतस्र उपशीयन्त आष्टाचत्वारिंशतो। ऽष्टाचत्वारिंशत्सु बहिष्पवमानेषु चतस्रश्चतस्रो ऽवशीयन्त आ चतसृभ्यः॥ ॥ ४५ ॥

द्वादशः ॥

देवासुरा ह यत्र महासंग्रामꣳ[6] संयेतिरे[7] तद्धेमानि[8] भूतानि द्वेधेव[9] व्यपचक्रमुर्देवानेवान्यान्यसुरानेवान्यानि[10]।

---

१ Thus L, एकैक उप॰ Be (sec m), एकैनोप॰ the other MSS

२ Corrected, एकविंशत्यौ L, एकविंशत्यै Be (sec m.), एकविंशते (or ने)त्य the other MSS

३ सुनोति इहैवाय L, सुनोतीहैवाय Be (sec m), सुनोति एवाय the other MSS

४ Thus L, विनौर्निषे॰ Be (sec m); विनौनिषे॰ or विनिनिषे॰ the other MSS

५ ॰ध्रुव L Be

६ महा॰ only in L and Be (sec m).

७ स only in Be (sec m), श॰ L

८ तयेमानि L and Be (sec m), त धुमानि the other MSS

९ Thus L, द्वेधे Be, द्वैद्वेधे the other MSS

१० व्यपच॰ L Be, व्यवच॰ the other MSS

बृहस्पतिर्देवानां पुरोहित आसीदुशना[1] काव्यो ऽसुराणां। ब्रह्मण्वन्तो देवा आसन्ब्रह्मण्वन्तो ऽसुरास्ते ब्रह्मसंयामान-विजयमाना आसां चक्रिरे। तेषां न कतरे चन भविष्यदा-जज्ञुर्गन्धर्वो हैव सूर्यवर्चा भविष्यदाजज्ञे। तस्यो हेन्द्रो जायायाम्[2] उपहाम्य[2] आस। तां ह होवाचासुदितान्नि[3] त्वमिदं गन्धर्वं पृच्छ किमर्थमिदं देवासुरा न विजयन्तीति। तं तथेति होवाच त्वमपि स्म आगच्छतादिति। स हान्तः समुद्रे हिरण्मय्या[4] नावया मह्जानि कुमार्यां[5] चक्रे। ऽथो हेन्द्र आजगाम। स ह सौवर्णः पतरो भूत्वा नौमण्ड[6] उपशिश्येष[7]। तं ह गतमेव विदित्वा[8] पप्रच्छासुदिताङ्ग[9] त्वमिदं ब्रूहि किमर्थमिदं देवासुरा न विजयन्तीति। सोच्चैरिति होवाच कर्णिनी वै नौराप[10] इति। ब्रह्मण्वन्तो देवा इति होवाच ब्रह्मण्वन्तो ऽसुरा इति। तच्छ्रुत्वेन्द्रो हरिशुकरूपं[11] कृत्वोत्पपात।

---

१ Thus MSS.

२ Thus L and Be (sec. m.), which has, however, •हाम्माय, जायायाय उपहाम्य आस the other MSS

३ •सुदितांगि or •तांचि MSS

४ हिरण्मया MSS. exc. B

५ Uncertain, मह्जनिकुमाय्यां L, r. महजानि.? cp. TS III.2.8 5.

६ नौमंड L, नौमंडप Be (sec m); नैमंडे the other MSS.

७ •शिश्येष MSS exc Be which has •शिश्ये।

८ विता L

९ •सदांग L Be (rightly ?), •सुदितांचि the other MSS.

१० Thus L, नौरूप Be (sec. m.), नौराप the other MSS

११ Emended, हरि शुकोरूप L, हरि शुक्रूपं the other MSS

तꣳ ह दृष्ट्वाह[1] मघवन्नो[2] इति यतरेषाꣳ[3] हरिष्ये जेष्यन्तीति । स ह गत्वैवोशनसं[4] काव्यमुपमन्त्रयां चक्रे जयन्त्याय[5] दुहित्रा घृतस्तुभिश्च कामदुघाभिः । स हाजग्मो ऽसुरेभ्यो ऽधि देवानुपसमियाय[6] । ततो ह वा एतद्देवा असुरान्सहासयामं जिग्युः । ॥ ४६ ॥

स ह गुरुरिव मेने गरमिव गीर्त्वा बहु वित्तमसुराणां प्रतिगृह्य । स होवाच गुरुरिवास्मि गरमिव गीर्त्वा बहु वित्तमसुराणां प्रतिगृह्य हन्त मा याजयेति । तं द्वादशस्तोमेनाग्निष्टोमेन बृहस्पतिराङ्गिरसो याजयां चकार । तेन हैवोर्ध्वꣳ हिरण्मयमुज्जगार । तद्ध[7] दृष्ट्वेच्छां[7] चक्रे हन्ताहमिदमसुरेभ्यो निर्हराणीति । तद्धेन्द्र[8] आघ्रायैव गिलां[9] चकार । ते ह वा एते[10] औशनसा नाम कुरुक्षेत्रे पर्वतगाः[11] ॥

---

१ Uncertain, दृष्ट्वेवजग्धो L, दृष्ट्वावाद्धो Be, दृष्ट्वैवयज्ञ the other MSS

२ Thus Be, मघवयंन्मघवन्निति L, मघवान्मूमघवा the other MSS.

३ Thus L, यतर एषां Be, यद्तरेषां the other MSS

४ Thus MSS exc Be which has स चाम॰ and L स चागत्यो॰ ।

५ *My conjecture*, जयंतय Be, जयन्तच L, जायत्याच or यत्याच the other MSS

६ Thus L, ॰समीयाय Be, ॰समीपय or ॰समीयाप the other MSS

७ संदृष्टे॰ Be, सद्दृष्ट्वो॰ L, तद्वेवदृष्टे॰ the other MSS

८ Thus L, तथेद्र Be, तथेद्रे or सदर्थेद्रे the other MSS.

९ गिलोम् L

१० *Only in L and Be*

११ पर्वतेशाः L.

स ह लघुरिवाचरदप्रतिष्ठितः[1] । स होवाच लघुरिव वा अस्म्यप्रतिष्ठितो[2] । हन्त मा याजयेति । तमेकविंशप्रतिष्ठोमेनाग्निष्टोमेन बृहस्पतिराङ्गिरसो याजयां चकार । ततो वै स प्रतितस्थावथो[3] हेन्द्रः[4] कामदुघा अवरुरुधे[5] । तं ह सायमेतमुवाच प्रातरेतादिति । प्रातरेतमुवाच सायमेतादिति । स एवमेव संवत्सरं नेनीयामास । स होवाच प्रातरेतादिति । मा सायमात्थ सायमेतादिति । मा प्रातरात्थ को ऽयमेतः कतमो ऽयमेतो । यमेनमेतं[6] मघवन् ब्रवीषीति[7] । दीक्षा प्रवर्ग्योऽथो हेन्द्र उक्थानि कामदुघाश्चकार । तां ह स वरुणाय प्रददाविदं तव[8] मम[8] चेदममुष्य[8] च नौ सहेति । बृहस्पतय आङ्गिरसायेदं नावाख्यास्ता विधारयानावहस्येदमज्यमीति[9] विष्णवे शिपिविष्टाय चेत्थंपैवोक्थानां

---

१ ॰चरद॰ only in L and Be

२ ॰वाक्षिनप्रति॰ Be, वा अक्षिनप्रति॰ L, ॰वलाप्रति॰ the other MSS.

३ Emended, प्रत्यतस्थानथो L, प्रत्यवस्थापयदथो the other MSS

४ हेद्रं MSS.

५ अभिवरधे L, अभिवरोधे Be, आवरौन्धे the other MSS

६ यमेनमेतं (or ॰तत्) L Be, यमेवमेतरम् or ययमेवमेतरम् the other MSS

७ Thus L, ब्रवीषि इति Be, ब्रवीति the other MSS

८ तवचमच इदममुष्य Be, तवचमचेचेदममुष्य L, तौव (तवि) मम चेदमुष्य the other MSS

९ Thus (hopelessly corrupted as it seems) Be, नावाख्यास्तविधारयाम्नावहस्येदमजमसीति L, नावास्यारवार (or वा) पिधारयाया (or या) वहस्येदमजयेति the other MSS

सृष्टिरेतन्निदानमथो हास्यैव मनुर्वैवस्वतः शून्यमानः सम्बद्धाम[१] ' तस्मै चतुर्थीं प्रददौ ' ताꣳ सो ऽस्यां न्यदधात्सेयं[२] ऋष्टिरेवैष[२] सृष्टेः[२] सृष्टिरेतन्निदानं ' तौ ह वा एतावौशनसौ नाम पुनस्तोमौ भवतः ' स यो गुरुरिव मन्येत गरमिव गीर्त्वा याज्यं वा याजयित्वाप्रतिग्राह्यस्य वा प्रतिगृह्य तं द्वादशस्तोमेनाग्निष्टोमेन याजयेदश्नुते हैव लघुतामथ यो लघुरिव चरेदप्रतिष्ठितस्तमेकविꣳशतिस्तोमेनाग्निष्टोमेन याजयेत्प्रत्येव तिष्ठति " ॥ ४७ ॥ त्रयोदशः ॥

अथ प्रणोदः ' समानमभिचरणीयꣳ शिल्पं ' प्रातःसवनीयाननुवर्तते ऽग्नये प्रवते पुरोडाशो ऽष्टाकपालस्त्रिवृद्देष भवत्यथ विबाधः ' समानमभिचरणीयꣳ शिल्पं ' माध्यंदिनीयाननुवर्तते ऽग्नये विबाधवते पुरोडाशो ऽष्टाकपालस्त्रिवृद्देवैष भवत्यथ प्रतिनोदः[३] ' समानमभिचरणीयꣳ शिल्पं ' तृतीयसवनीयाननुवर्तते ऽग्नये प्रतीकवते पुरोडाशो ऽष्टाकपालस्त्रिवृद्देवैष भवत्यथाग्नेरतिव्याधः ' समानमभिचरणीयꣳ शिल्पमनूबन्ध्यस्य पशुपुरोडाशमनुवर्तते ऽग्नये वसुमते पुरोडाशो ऽष्टाकपालस्त्रिवृद्देवैष भवत्यथेन्द्रवज्रः ' समानमभिचरणीयꣳ शिल्पं ' पञ्चदश एष भवति " शुनस्कर्णो ह

---

१ Thus L Be, स्वम (or म्म) स्नाम the other MSS

२ सेयं ऋषिरेवैषसृष्टे L, सोय ऋषिरेवैष सृष्टेः Be, सेय्मेहऋषिरेवैषसृष्टेः the other MSS

३ प्रतीनोद L

वै शैब्यो राजा पुष्कलद्दहयाञ्चाम। स ह पापीयाञ्जनतां[१] प्रतिष्ठितां[१] प्रतिख्यायर्त्विजः[१] पप्रच्छास्ति स्वित् यज्ञक्रतुर्य-नाहमिहैव प्रयायामित्यस्ति[२] हीति[२] हैनमृत्विजः प्रत्यूचुस्तांश्चा-ध्वर्युर्योनौनपुरोरुक्कान्[३] यद्दाञ्जयाह। स्वराण्युद्गाता साम्यान्यनैडान्यनिधनानि[४]। पराङेवर्ग्मियर्[५] होतानूवाच। स हावभृथादेवोदेत्य ममार। यं द्विष्यात्तस्यैवं यज्ञं[६] कुर्यादुप-स्तृतं[७] वा याजयेत्क्षिप्रं हैवास्माल्लोकात्प्रैतीत्यथ राशिमराया-वित्याचक्षते। चतुष्टोमे राशिकृतं[८] धान्यं ददाति। स राशि-श्चतुष्टोम एव मरायकृतः। स मरायो॥ ऽथाञ्जनाभ्यञ्जना-वित्याचक्षत। आकाशा[९] अलंकृता[९] ऋत्विजः प्रचरन्ति। स

१ पापी (पापा) जनतां etc. as above Be L; पापीयांजानता प्रतिष्ठितां प्रतिषा (or षां) यत्विज. the other MSS

२ प्रयपामी(मि)त्यस्ति षाह (षा) इति Be L, प्रायषमित्यास्ति षीह इति the other MSS

३ Conjecture, •योनीमपुरोवक्कान् Be, वयेनाम्पुरोवक्काम् L; वधोमपुरो-वक्कान्म the other MSS

४ सामान्यनैनतृनिनिध• Be, मान्यनैनन्यनिध• L, सामान्यनैडास्य• (डास्य•) the other MSS

५ पराङेवर्ग्य Be, पराङवर्ग्य L, परां (or परा) इति (or इव) दु (or रु) वस्य the other MSS

६ यज्ञे MSS

७ •दुपाहृतं L

८ राशी• Be, राशि• the other MSS

९ कोशाचालंकृता Be, काङ्क्षाकालंकृता L, काशाकालंकृता the other MSS

आञ्जनो ॥ ऽभ्यञ्जः[1] शामूलवाससः । सो ऽभ्यञ्जनो ॥ ऽथ विषूचीनशालो भ्रातृव्यवतो यज्ञः । स तथा देवयजनं जोषयते यथा प्राचीनमाहवनीयात्प्रवणꣳ स्यात्प्रतीचीनं गार्हपत्यादिति । तद्वेते विषूचीनशाले मापयन्ति[2] । प्रचरन्ति प्राञ्चः प्रत्यञ्चः प्रचरन्ति । मध्ये गार्हपत्यो भवति । मध्यत आसीनाय भक्षानाहरन्त्यनुदिशꣳ स्तोमौ स्यातामित्येतदेकमेकविꣳशौ[3] स्यातामित्येतदेकमनादृत्य तच्चतुष्टोमावेव कुर्वन्ति ॥ ४८ ॥

[4]देवासुरा ह यत्र महासंग्रामꣳ[5] संयेतिरे तद्ध शिबिरौशीनरो देवानां वर्गादसुराञ्जिगाय[6] । तस्मो हेन्द्रो जितवरं ददौ । स होवाच शिबिर्नैष्ठ्यं[7] भयं न गच्छेदिति । तं वर्षिष्ठीयप्रस्थे[8] सर्वतोमुखेन याजयां चकार । ततो ह वा एतच्छिबिं नैष्ठ्यं[7] भयं न गच्छति । यं कामयेतानपजय्यं जयेदिति तं वर्षिष्ठीयप्रस्थे[8] सर्वतोमुखेन याजयेदनपजय्यमेव

---

१ भ्यञ्जोऽभ्याशूलवासः L Be, भ्यञ्जः शमूलवासः the other MSS

२ ०यन्ति Be, ०मति the other MSS

३ ०मेकविंशौ L Be, विंशौ the other MSS

४ For the following cp. also *Eggeling, Catal of the MSS, of the India Office* vol I, p 87 (designed by me as E).

५ महा० om all exc. E L

६ Thus (०सुराञ्जि०) Be L only, ०सुरापाजिगाय० or ०सुरापाजि० the other MSS

७ नैष्ठ्यं L Be, व्यैष्ठ्यं or व्योष्ठ्यं the other MSS

८ Thus L Be; ०प्रस्थेन the other MSS

जयति ' तदेतावन्तः शाला अनुदिशं मापयन्ति ' प्रचरन्ति प्राञ्चः प्रचरन्ति दक्षिणा प्रचरन्ति प्रत्यञ्च उदञ्चः प्रचरन्ति ' मध्ये गार्हपत्यो भवति ' मध्यत आसीनायाश्वतरीरथैर्भक्षान्संवहन्त्यनुदिशꣳ स्तोमाः स्युरित्येतदेकमेकविꣳशाः स्युरित्येतदेकमनादृत्य तच्चतुष्टोमानेव कुर्वन्ति '' पार्थः ' पार्थो[1] ह स्थपतिर्देवानीपस्य[2] ह[2] सुतसोमान्सहस्रदक्षिणान्सहस्रमसुनोत्स[3] ह[3] देवानाप[3] ' स[3] एतान्स्तोमानाहरिष्यन्नुपकल्पयते[3] शालाः[4] सहस्रꣳ सहस्राणि सहस्रमश्वतरीरथाꣳस्तदेताः शाला अनुदिशं मापयन्ति द्वे च शते पञ्चाशतं च पुरस्तादेवं दक्षिणत एवं पश्चादेवमुत्तरतः ' प्रचरन्ति प्राञ्चः प्रचरन्ति दक्षिणा प्रचरन्ति प्रत्यञ्च उदञ्चः प्रचरन्ति ' मध्ये गार्हपत्यो भवति ' मध्यत आसीनायाश्वतरीरथैर्भक्षान्संवहन्त्यनुदिशꣳ स्तोमाः स्युरित्येतदेकमेकविꣳशाः स्युरित्येतदेकमनादृत्य तच्चतुष्टोमानेव कुर्वन्ति '' ॥ ४९ ॥ चतुर्दशः ॥

यमाभ्याꣳ स्तोमाभ्यां यक्ष्यमाणो भवति ' स तथा देवयजनं जोषयते यथान्तरेण चात्वालोत्करावुदक्संचारी स्यादिति ' तदेते प्राङुदक् शाले मापयन्ति ' स दक्षिणार्ध्याꣳ[5] शालामध्यव-

1 Thus Be, पार्थ and पार्थे the other MSS

2 Instead of सह Be सम, L सद्म; सवन the other MSS

3 Thus my conjecture, सदति एतान्स्तोमानाहरि॰ MSS exc. Be which has only सतोमानाहरि॰ and L, which has सदेनिसदमान्सोमा॰।

4 शाला Be, शालाह L, शालापि the other MSS

5 Thus L Be, दक्षिणार्ध्या the other MSS

साय मथित्वाग्नीन्विहृत्य दीक्षणीयामिष्टिं निर्वपत्यथोत्तरार्ध्याꣳ शालामध्यवसाय मथित्वाग्नीन्विहृत्य[1] दीक्षणीयामिष्टिं[1] निर्वपति[1] । तयेह प्रचर्यायामुत्र प्रचरतीह दीक्षाहुतीर्जुहोत्यथामुत्रेह प्रायणीयामिष्टिं निर्वपत्यथामुत्र । तयेह प्रचर्यायामुत्र प्रचरतीह पदेन चरित्वा राजानं क्रीत्वोद्यातिथ्यं निर्वपत्यथामुत्र । तेनेह प्रचर्यायामुत्र प्रचरतीह प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेह मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेह महावेदिं पूर्वं परिग्राहं परिगृह्णात्यथामुत्रेहोत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेहाहवनीयं प्रणयत्यथामुत्रेह सदोहविर्धाने संमिनोत्यथामुत्रेहाग्नीषोमौ प्रणयत्यथामुत्रेह[2] यूपस्याहृता यूपमुच्छ्रयति स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोत्यथामुत्र । तस्येह प्रसिद्धं वपया चरित्वा वसतीवरीर्गृह्णात्यथामुत्रेह पशुपुरोडाशं निर्वपत्यथामुत्र । तेनेह प्रचर्यायामुत्र प्रचरतीहाग्नीषोमीयेण प्रचरत्यथामुत्रेह[3] वसतीवरीः परिहृत्य पयाꣳसि विग्रिथ्योपवसन्त्यथामुत्रेह त्वेव संविशन्तीह राजानमुपावहृत्य प्रातरनुवाकमुपाकरोत्यथामुत्रेहानुपूर्वꣳ सवनानि[4] संतिष्ठन्त आ समुदितादेवमेवोत्तरस्याꣳ शालायाꣳ सवनानि[4] संतिष्ठन्त आ समुदितादिहावभृतेन प्रचरत्यथामुत्रेहोदयनीयामिष्टिं

---

१ These six words, indicated by * in Be, are given only by L.

२ प्रणयत्य॰ L Be, प्रचरत्य॰ the other MSS

३ चरत्य॰ MSS.

४ Thus L Be सवनीयानि the other MSS

निर्वपत्यथामुच तथेह प्रचर्याथामुच प्रचरतीहैव मैत्रावरुणौ वशामुपाकरोत्यथामुत्र तथेह प्रचर्याथामुत्र प्रचरति समान्युदवसनीयेष्टिरथ[1] यस्मात्[2] सवनेभ्यो[2] ऽधि व्यतिषक्तानि कर्माणि क्रियन्ते तस्माद्यमावन्तरुद्रे व्यतिषक्तौ सह[3] प्रयाते अथ यदनुपूर्वंᳲ सवनानि संतिष्ठन्ते तस्मादनुपूर्वौ जायेते अथ यदूर्ध्वंᳲ[4] सवनेभ्यो ऽधि व्यतिषक्तानि कर्माणि क्रियन्ते तस्मात्सहाशयन्ति सह पाययन्ति सह चरतो ऽथ यत्समान्यरणिस्थात्ममानौ[5] योनिरग्निश्च ह वा आदित्यश्च समानलोकं[6] जिगीषमाणावेतं यज्ञक्रतुमपश्यतां तमाहरतां तेनायजेतां ततो वै तौ समानलोकावभवतां समानं लोकमैतां[7] यः कामयेताग्नेश्चादित्यस्य च समानं लोकमियामिति स एतेन यज्ञक्रतुना यजेताग्नेश्चैवादित्यस्य च समानं लोकमेति ॥ ५० ॥ पञ्चदशः ॥

वाजयाजी ह वा अन्यो भवत्यन्य उ वाजपेययाज्येष ह वै वाजयाजी यः पेयैरनिष्टाय वाजेन यजत एष उ वाजपेययाजी यः पेयैरिष्टाय वाजेन यजते तस्मात् पेयैरेवेष्टाय

१ Thus L Be; सामान्योदव॰ the other MSS.

२ यद् only in L; यस्मात् instead of प्राक् L, सवनीयेभ्यो L Be.

३ Only in L and Be

४ यदनुपूर्वंᳲ MSS exc. and Be

५ यद् om. L Be; यत्समान्यरणौ the other MSS.

६ समानं L Be, समानलोका the other MSS

७ After ऐतां L Be have समानलोकावभवताम्, the other MSS. read समानंलोकावभवताम् or ॰लोकावभवताम्।

वाजेन यजेत । पेयेयक्ष्यमाणो भवति । सो ऽमिष्ट्वैव पौर्णमासीं दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते ऽमावास्यायै[1] मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाꣳसि विशिष्योपवसन्त्यथैताꣳ सवनेष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं । तया द्वादशाहानि यजते । ऽथ त्रयोदशे ऽह्नि पौर्णमासेन हविषा यजते येनास्यानिष्टं भवत्यथ चतुर्दशे ऽहन्यामावास्येन हविषा यजते येनास्यानिष्टं भवत्यथैतेषां यज्ञक्रतूनामेकेन यजते । ऽथ पुनर्दीक्षते । स एवमेव संवत्सरं यजते । तस्याहानि त्रिवृत्पञ्चदशो[2] ऽथ त्रिवृत्सप्तदशो ऽथ त्रिवृदेकविꣳशो ऽथ त्रिवृत्त्रिणवो[3] ऽथ त्रिवृत्त्रयस्त्रिꣳशो ऽथ त्रिवृच्चतुष्टोमो[4] । मासानामेव रूपं पेयाः[5] । संवत्सरस्य रूपं वाज । एवमस्यैष[6] संवत्सरः परीष्ट एवमाप्तो भवत्यथाहीनविधिस्तस्याहानि[7] त्रिवृत्पञ्चदशः[8] सप्तदशश्चतुष्टोमस्त्रिवृद्देवाथैकविꣳशो[8] ऽथ त्रिणवो ऽथ चतुष्टोम-

---

१ ऽमावास्यै Be, मामास्यै L (the other MSS om. this passage).

२ Thus L Be; •पंचदशः सप्तदशः the other MSS.

३—४ Thus L Be; the other MSS have only त्रिवृच्चतुष्टोमौ ।

५ Thus L Be, रूपमपेयाम् or •पेयाम् the other MSS.

६ Thus L Be, स्य एष the other MSS

७ •विधस्तस्या• Be

८ Thus L Be, •पञ्चदशःसप्तदशो• the other MSS

त्रिवृद्देवाय त्रयस्त्रिंशो ऽथ चतुष्टोमस्त्रिवृद्देवाय[1] चतुश्चत्वारिंशो ऽथ चतुष्टोमो ऽथातिरात्रो । द्वादश[1] मासाः सप्तदश क्रतवो । नवसु मासेषु नव क्रतूनुपैत्यथातिशिष्यन्ते त्रयश्च मासा अष्टौ च क्रतवः । स द्वौ त्रिरात्रौ कुरुत एकं च द्विरात्रं । यद्यु वा एतदुपात्येति चतुष्टोमेनाग्निष्टोमेन यजेत । मासानामेव रूपं सूतयस्त्वाणि संवत्सरस्य रूपमग्निष्टोमो[2] राज[2] । एवमन्वेव[3] संवत्सरः परीष्ट एवमाप्तो भवत्यथातो ऽयुजश्चैव[3] युग्माश्चैकस्यां स्तुवते ऽथ तिसृष्विति ह्ययुजो । ऽथ युग्मास्तस्तु स्तुवते ऽष्टास्विति युग्मा । अयुजां चैव[4] युग्मानां चैव सायुज्यं सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुः ॥ ५१ ॥

अथातो दिशामेव । त्रिवृत्प्राच्यै । पञ्चदशो दक्षिणायै । सप्तदशः प्रतीच्यै । एकविंश उदीच्यै । त्रिणव इत[1]

---

१—१ Wholly uncertain; चतुष्टोमैर्विंशो च चतुष्टोमस्त्रिवृद्देवाय चतुश्चत्वारिंशोथाष्टाचत्वारिंशोथ चतुष्टोमोथातिरात्रोद्वादश L Be, चतुष्टोमस्त्रिवृद्देवाय चतुश्चत्वारिंशोथ चतुष्टोमोथातिरात्रोथ द्वादश the other MSS., partly incomplete.

२ Thus MSS. exc. Be, which reads °ष्टोमस्यैव and L, which omits राज ।

३—३ Thus, on the whole, L; युजश्चैकस्यां स्तुवते ऽथ तिसृष्विति ह्ययुजो च युग्मास्तस्तु स्तुवते चाष्टास्विति युग्मा अयुजश्चैव Be; युजश्चैव युग्मां (or या-) चैकस्यां स्तुवते (ति) च तिसृष्विति ह्ययुजो च युग्मास्तस्तु स्तुवते चाष्टास्वित्यथ युग्मा अयुजश्चैव the other MSS.

४ Only in Be.

ऊर्ध्वायै ' त्रयस्त्रिꣳशो ऽमुतो ऽर्वाच्यै ' सर्वासमेव चतुष्टोमो ' दिशामेव सायुज्यꣳ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुर्"थात ऋतूनामेव ' त्रिवृद्वसन्तस्य ' पञ्चदशो ग्रीष्मस्य ' सप्तदशो वर्षाणामेकविꣳशः शरदस्त्रिणवो हेमन्तस्य ' त्रयस्त्रिꣳशः शिशिरस्य ' सर्वेषामेव चतुष्टोम ' ऋतूनामेव सायुज्यꣳ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुर्"थात ऋषीणामेव ' त्रिवृद्वसिष्ठस्य ' पञ्चदशो भरद्वाजस्य ' सप्तदशो विश्वामित्रस्यैकविꣳशो जमदग्नेस्त्रिणवः कश्यपस्य[1] ' त्रयस्त्रिꣳशो गौतमस्यागस्त्यस्य[2] चतुष्टोम ' सर्वेषामेव चतुष्टोम ' ऋषीणामेव सायुज्यꣳ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुर्"थातो देवतानामेव ' त्रिवृदग्नेः ' पञ्चदश इन्द्रस्य ' सप्तदशः प्रजापतेरेकविꣳशो ऽमुष्य[3] तपतस्त्रिणवश्चन्द्रमसस्त्रयस्त्रिꣳशो विश्वेषां देवानाꣳ[4] ' सर्वासामेव चतुष्टोमो ' देवतानामेव सायुज्यꣳ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुः " ॥ ५२ ॥

अथातो दर्शपूर्णमासयोरयनमित्याचक्षते ' सूर्याचन्द्रमसोरयनमित्येक आहुः ' पौर्णमासेन[5] सोमेन यक्ष्यमाणो भवति ' दीक्षते ' तस्यापरिमिता दीक्षाः षडुपसदः ' स तथा राजानं

---

१ कश्य॰ Be, काश्य॰ the other MSS.

२ Thus L and Be; all the other MSS om. ॰अग॰ ।

३ Instead of मुष्य Be ॰षप, L शु ।

४ Thus L Be, the other MSS. have एव after देवानां ।

५ पूर्ण॰ MSS exc. L

क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञियेऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादैत्याथ वसतीवरीः परिहृत्य पयाꣳसि विभिध्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्याग्नीषोमीय उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते पौर्णमासहवीꣳषि । प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाꣳ हविषामꣳशुधा ज्योतिरुक्थ्यः संतिष्ठत ॥ आमावास्येन सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यतेऽमावास्यायै मे यज्ञियेऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादैत्याथैतद्धरिन्द्राय वत्सा अपाकृता भवन्त्यैन्द्रं पयो दोहयति सांनाय्यस्य वाकृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाꣳसि विभिध्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्यैन्द्र ऋषभ उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्त आमावास्यानि हवीꣳषि । प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाꣳ हविषामꣳशुधा ज्योतिरतिरात्रः संतिष्ठते । सूर्याचन्द्रमसयोरेव तत्सायुज्यꣳ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुर्य उ चैनदेवं विदुः ॥ ५३ ॥ षोडशः[1] ॥

॥ इत्यष्टादशः प्रश्नः ॥

---

१ इत्युत्तरा गतिः समाप्ता MSS

सावित्रं स्वर्गकाममग्निञ्चिन्वीत । पशुबन्धे चेच्चीयते षड्ढोतारं हुत्वा यूपाहुतिं हुत्वा यूपं सयजुषं कृत्वा वेदिं विमिमीते । वेदिद्वितीये यजेतेति विज्ञायते । तस्याः सौमिकं मानमेतावदेव नाना । सौमिकात्प्रक्रमात्तृतीयो ऽष्टमः प्रक्रमः स्यात्तेन वेदिं विमिमीते । अपि वा पदाद्व्यणुया[1] पार्श्वमानी पदं तिरः पशुमानेन तयोर्यः कर्णसंमितः प्रक्रमः स इष्यते । पदाद्वा नवमस्तद्व्यणुया[2] तयोस्तु यः कर्णसंमितः स प्रक्रमार्थस्तेन[3] सेयं सौमिकी वेदिरग्नीनन्वादध्याद्धुतमुपेयादिध्माबर्हिः संनह्य[4] स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थं पूर्वं परिग्राहं परिगृह्णाति करणं जपत्युद्धन्त्युद्धृतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथैतमग्निं प्रत्यञ्चं यूपावटीयाच्छङ्कोर्विमिमीते । पक्षःसंमितश्चेतव्य इति रथचक्रमात्र एवैष उक्तो भवत्यथाप्युदाहरन्ति द्व्यरत्निः[5] प्रथमं चक्रं द्वौ सार्धौ मध्यमं त्रिभागोनास्त्रय उत्तममिति । तेषामन्यतममाचीर्णं रज्जुमुभयतःपाशां कृत्वोत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य तस्मिन्पाशौ प्रतिमुच्य तस्मिन्नन्ते ऽन्यं शङ्कुं

---

१ Thus MHBU, षट्॰ Be Ben.

२ Thus M Ben., नवमात्तस्याद्व्यणुया U, नवमस्तस्याद्व्यणुया H, नवमस्तद्व्यणुया Be; B om. the whole phrase

३ Thus MHU, ॰मार्थस्तेन Be Ben.

४ Thus MHUB, सन्नह्य Be Ben.

५ ॰रत्निं M

प्राश्य तेनैनं प्रदक्षिणं परिमण्डलं[1] परिलिखत्यपोद्धृत्य स्रक्त्याः कर्षूः खानयन्त्युच्छ्रयन्त्यपरस्याः[2] दक्षिणतश्च पश्चाच्च वर्षीयसीः कुर्वन्त्यथ याचत्याव्यप्यालोꣳ मधुवाꣳ हव्यं दर्भस्तम्बमुदपात्रमौत्तरवेदिकांश्च[3] संभारान्दधि मधुमिश्रꣳ हिरण्यं च शर्कराः[4] सिकताश्च[4] दर्भानित्येतत्समादायोत्तरार्धे सꣳसादयन्त्यथ द्वाभ्यामात्मन्यग्निं[5] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति। स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति। श्वेतमश्वमभिघ्राप्यान्तःशर्करमिमामुपदधाति प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ शङ्कुसुहृद्योदपात्रमुपनिनीय दर्भस्तम्बमुपदधाति वात्वा समुद्र उपदधामीति वा तूष्णीं वाथैनꣳ स्रुवाहुतिभिरभिजुहोति मधूरब्दो ऽयावभिरिति पञ्चभिस्तयादेवतं कृत्वा सूददोहसं करोति। ॥ १ ॥

अथ चात्वालस्थानेन चात्वालं परिलिखत्युत्तरवेदेरायतोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्य यूपावटं[5] खात्वा[6] प्रोक्ष्य आघारावाहृत्य सिकता निवपत्यग्ने तव श्रवो वय इति

---

१ परि॰ om. M. and some of the other MSS.
२ खानयत्य॰ M
३ च om. M
४ सिकता शर्कराश्च M
५ Thus MHUB, ॰र्वटं Be Ben
६ Om M He Ben ; M om. also प्रोक्ष्य।

षड्भिरनुष्टुप्छन्दसमथोर्ध्वचित उपदधाति चित स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया देवतयाङ्गिरस्वद्ध्रुवाः सीदतेत्यथानुव्यूहत्याप्यायस्वेति गायत्र्या ब्राह्मणस्य सं ते पयांसीति त्रिष्टुभा राजन्यस्य । यथासुप्तु यथाशर्करमनुव्यूहति । तस्यां[१] नव[१] परिमण्डला[१] लेखा लिखत्यथ[२] दध्ना मधुमिश्रेण शर्कराः समज्य सायमग्निहोत्रं हुत्वाग्नीन्परिस्तीर्योपवसत्यथ प्रातर्हुते ऽग्निहोत्रे यावत्युदपात्रं भस्म पुरीषमूषान्सिकता यावदुत्तममङ्गुलिकाण्डं यज्ञपरुषा संमितं तावन्मात्रीः[३] पञ्चाशीतिशतं हिरण्येष्टकाः शर्करा वा घृताक्तास्तावत्यो[४] लोकंपृणा अपरिमिता वा चतस्रः स्वयमातृण्णाः सहस्रं हिरण्यशल्कानूर्ध्वं चिन्वो । ऽपरिमितानित्येक आहुर्स्ते यदि सहस्रं भवन्ति द्वेद्वे शते पञ्चमाडीप्योते[५] भवतो । ऽथोदित आदित्ये द्वाभ्यामात्मन्यग्निं[६] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । श्वेतमश्वमभिमृश्याधिद्रवणं जपत्यपामिदं न्ययनं नमस्त इति द्वाभ्यामथापरार्धे उद्पात्रमुपदधाति वाक्त्वा

१ Thus Ben UH (the last सख्या); तस्यां नव मंडला Be, तस्मिन्नेव परिम॰ MB.

२ लिखित्वा MB

३ ॰मात्र M

४ घृताभ्यक्ता॰ M

५ Thus MHU, ॰माडीप्येते B ॰माडीप्रोते Be Ben

६ Thus MBHU, ॰त्मनग्नि Be Ben

समुद्र उपदधे सुप्रजावनिꣳ रायस्पोषवनिं मह्यं यजमानायेति । तथादेवतं कृत्वा सूददोहसं करोत्यथ संभारान्निवपत्यग्नेर्भस्मासीति भस्माग्नेः पुरीषमसीति पुरीषꣳ संज्ञानमसि कामधरणमित्यूषान्मयि ते कामधरणं भूयादिति सिकता । अथैनान्संमर्शति सं या वः प्रियास्तनुवः सं प्रिया हृदयानि वः। आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो ममेत्यथैनान्कल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः। कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रता इति । ताꣳस्तथा कल्पयति यथा न लेखाः संलोपयन्ते[1] । मध्यो वा सर्वं क्रियते यद्यस्कालो ॥ २ ॥ प्रथमः ॥

अथान्तमायां लेखायां पूर्वपक्षस्य दिनेष्टका उपदधाति संज्ञानं तया देवतयाङ्गिरस्वद्ध्रुवा सीद विज्ञानं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतेषामेव दिनानां मुहूर्तेष्टका उपदधाति चित्रस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद केतुस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां पूर्वपक्षस्य अपरेष्टका उपदधाति दर्शा तया देवतयाङ्गिरस्वद्ध्रुवा सीद दृष्टा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतासामेव[2] क्षपाणां मुहूर्तेष्टका उपदधाति दाता तया देवतयाङ्गिरस्वद्ध्रुवा सीद प्रदाता तया देवतयाङ्गि-

१ संलोपयन्ते Bo Ben.

२ Thus MU, स्वेषामेव the other MSS.

रस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षस्य दिनेष्टका उपदधाति प्रस्तुतं तया देवतयाङ्गिरस्वद्ध्रुवा सीद विष्टुतं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतेषामेव दिनानां मुहूर्तेष्टका उपदधाति सविता तया देवतयाङ्गिरस्वद्ध्रुवा सीद प्रसविता तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षस्य क्षपेष्टका उपदधाति सुता तया देवतयाङ्गिरस्वद्ध्रुवा सीद सुन्वती तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतासामेव क्षपाणां मुहूर्तेष्टका उपदधात्यभिशास्ता तया देवतयाङ्गिरस्वद्ध्रुवा सीदानुमन्ता तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यान्तरायां लेखायां पूर्वपक्षेष्टका उपदधाति पवित्रं तया देवतयाङ्गिरस्वद्ध्रुवा सीद पवयिष्यꣳस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति द्वादश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षेष्टका उपदधाति सहस्वाꣳस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद सहीयाꣳस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति द्वादश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां मासेष्टका उपदधात्यरुणस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदारुणरजास्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति त्रयोदश । सर्वासां पारे सूददोहस. करोत्यथानैके[१]

---

१ Thus Be HUB; ॰थानैकेक B.n , ॰थैके M.

लेखान्तरालेषु[1] सिकता निवपन्त्येतल्लोकस्था इत्यथाभ्यन्तरायां लेखायां मुहूर्तानां मुहूर्तेष्टका उपदधातीदानीं तया देवतयाङ्गिरस्वद्ध्रुवा सीद तदानीं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां क्रत्विष्टकाश्चर्त्विष्टकाश्चोपदधात्यग्निष्टोमस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदोक्थ्यस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पर्ड्ग्निश्चेतुस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद सूर्य ऋतुस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति तिस्रः । सर्वासां पारे सूददोहसः करोत्यथ मध्ये[2] नाभ्यां संवत्सरेष्टका उपदधाति प्रजापतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद संवत्सरस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति चतस्रः । सर्वासां पारे सूददोहसः करोति । ॥ ३ ॥

तदेताश्चतस्रः स्वयमातृण्णा याचति । ता दिक्षूपदधाति भूरग्निं च पृथिवीं चेति पुरस्ताद्भुवो वायुं चान्तरिक्षं चेति दक्षिणतः स्वरादित्यं च दिवं चेति पश्चाद्भूर्भुवः स्वश्चन्द्रमसं च दिग्भ्य इत्युत्तरतः । सर्वासां पारे सूददोहसः करोत्यथ लोकंपृणा उपदधाति लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निति । तयादेवतं करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति

---

१ Thus Bs Ben., लेखायन्तरेषु M, लेखान्तरेषु HU; लेखायां B.
२ मध्यमे M

ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः। जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इति। प्राच्याच लोकंपृणया प्रतीत्याग्निं प्राचीभिः संप्रच्छादयन्ति। संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथानभिमृष्टं चितिकॢप्ता भवत्यथाग्निमभिमृशति[1] यत्ते ऽचितं यदु चित्तं ते अग्न इति द्वाभ्यामेव चितिकॢप्ताभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्यग्ने देवाꣳ इहावहेत्याग्नेय्या गायत्र्यैतां चितिमभिमृश्य द्वे[2] अवद्रवणे[2] जपति[2] वाश्च आमन्त्रणेदा इत्यथ[3] कृष्णमश्वमभिमृश्य तनुपुरीषमुपदधाति पृष्टो दिवीति। तथादेवतं कृत्वा सूददोहसं करोत्यथ पात्र्यामप आनीय हिरण्यशल्कान्संप्रकीर्य द्वाभ्यांद्वाभ्याꣳ[4] शताभ्यां प्रोक्षति सहस्रस्य प्रमा असीति पुरस्तात्सहस्रस्य प्रतिमा असीति दक्षिणतः सहस्रस्य विमा असीति पश्चात्सहस्रस्योन्मा असीत्युत्तरतो। ऽथ मध्ये[5] द्वाभ्याꣳ शताभ्यां प्रोक्षति साहस्रो ऽसि सहस्राय त्वेत्यथोत्तरार्धे तिष्ठन्निष्टका धेनूः कुरुत इमा मे अग्न इष्टका धेनवः सन्त्वित्यान्तादनुवाकस्यार्चैके ऽर्कपर्णेनाजक्षीरेण[6] चरमायामिष्टकायां जुहोति। स[7] यद्यद्देशं[7]

---

१ परि instead of अभि M.

२ Thus HUB; द्वे अविद्रवणे ज॰ Be Ben, द्वाभ्यामभिद्रवति M.

३ वाच instead of वाश्च M Ben. U.

४ द्वाभ्यां twice in BU only.

५ om M.

६ कें॰ om. B Be H.—॰माजाक्षी॰ Be Ben.

७ Thus M, यद्दद्देशं B, दुन्देशं Ben, यद्देश Be, यद्यद्देशं HU

करिष्यन्नवत्यधैतस्यार्कपर्णस्य[1] पुटमन्तरवस्याविध्य हस्तोदङ्ङ्तिष्ठन्मुखदघ्ने धारयन्नाप्याहरानयेति । स यत्र धारेष्टकां[2] प्राप्नोति तत्प्रतिपद्यते त्वमग्ने रुद्र इत्यान्तादनुवाकस्याथैतदर्कपर्णं यं द्विष्यात्तस्य संचरे पशूनां न्यस्यति । यद्यु वै न द्विष्यादाखरे न्यस्यत्यथैनमुपतिष्ठते त्वमेव त्वां वेत्थ यो ऽसि सो ऽसीत्येतेनानुवाकेनाथ षड्ढारविहाराभ्यामुपतिष्ठते संवत्सरो ऽसि परिवत्सरो ऽसीत्येतेनानुवाकेनाथाथ होतरग्नेस्तव्येनाग्निमनुशंसेति । [3]यदि होता न कामयते यजमान एव जघनेनाग्निं तृणानि संस्तीर्य तेषूपविश्याग्नेस्तव्येनाग्निमनुशंसति । भूर्भुवः स्वरित्येताभ्यामृग्भ्यां[4] चित्तिरेकैकामन्वाह प्रणवेनाभिसंधानमेवमन्यत्राप्युपसंधाने प्रणवेनैवाभिसंधानमेव[5] ये ब्राह्मणा बहुविदस्तेभ्यो यद्दक्षिणा न नयेद्दुरिष्टं स्यादग्निमस्य वृञ्जीरन्तेभ्यो यथाश्रद्धं दद्यात्स्विष्टमेवैतत्क्रियते । मास्याग्निं वृञ्जत इति ब्राह्मणम् । ॥ ४ ॥ द्वितीयः ॥

अथाग्न्याधानप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमाग्निप्रणयनात्कृत्वाग्निं प्रणीयोपसमाधायाध्वराहुतिभिरभिहुत्य[6] नानाचतुर्गृहीतैरेता[6] आहुतीर्जुहोति । त्वमग्ने रुद्र

१ °न्यधैतस्य° Be Ben
२ °रेष्टकाग्निं M.
३ Before यदि Be HU ins. च ।
४ साम्भ्यां instead of ऋग्भ्यां M.
५ प्रणवेनैवाभि° M.
६ Thus HU (only °हुतीभि°); °ध्वराहुतीभिरभिहुत्यमानो चतु° M; °ध्वराहुतीरभिहुत्यमानानां चतु° Be Ben; °ध्वराहुतिभिर्हुत्वा नानाचतु° H.

इति शतरुद्रीयस्य रूपमग्नाविष्णू इति वसोर्धारायाः । अन्नपत इत्यन्नहोमः । सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीरित्यथ स्रुवेणोपघातमेकविंशतिमाहुतीर्जुहोत्यग्नये स्वाहा वसवे स्वाहेति । हुत्वाहुत्वैव संस्रावान्यजमानस्याञ्जलावानयति[1] । तैर्यजमानो मुखं विमृष्टे राज्ञी विराज्ञीत्येतेनानुवाकेनोत्तरपरिग्राहप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमा मनोतायाः कृत्वा मनोतामनुद्रुत्य पशोरवदानानि संस्रवत्यौदुम्बरे[2] पात्रे[2] पूष्णो मृत्युपह गृह्णाति विपश्चिते पवमानाय गायत्रेत्यनुद्रुत्योपयामगृहीतोऽसि मृत्यवे त्वा जुष्टं गृह्णामीति । दर्भैः परिमृज्योत्तरवेद्यां संसादयत्येष[3] ते योनिर्मृत्यवे त्वेत्यथ पशुना चरत्यथ वनस्पतिना चरत्यथ पुरस्तात्स्विष्टकृतोऽथैतं ग्रहं होष्यन्न उपस्पृशति[4] विद्युदसि विद्य मे पाप्मानमित्यथ जुहोत्यप मृत्युमप क्षुधमपेतः शपथं जहि । अधा नो अग्न आवह रायस्पोषं सहस्रिणम् ॥ ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे । तान्यज्ञस्य मायया सर्वानवयजामहे स्वाहेत्यथ हुत्वोपस्पृशति वृष्टिरसि वृश्च मे पाप्मानमित्यथ स्विष्टकृता चरत्युपह्वयमानायामिडायामुप-

---

१ Thus (वानयति) M Bo Ben BU (sec. m.), वामयति BU (pr m).

२ Thus all exc B, which has ०रेष पात्रेष ।

३ ष om. BU

४ Thus M Bo Ben. ०स्पृशेत् BHU

गच्छन्ति[1] यद्वसुपहूतं[2] यद्वं यजमानो भक्षयति भक्षो ऽस्यमृतभक्षस्य ते मृत्युपीतस्यामृतवतः स्वगाकृतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । भक्षयित्वात्मानं प्रत्यभिमृशते मन्त्राभिभूतिः केतुर्धर्मानामित्यानादनुवाक्यस्यानूयाजप्रभृति पाशुबन्धिकं कर्म तायते । षिद्धमा दक्षिणानां कालाद्दक्षिणानां काले धेनुमृषभमनड्वाहं दद्यैकविंशतिर्दक्षिणा[3] ददाति । शतं ददाति । सहस्रं ददात्यन्चिष्टकं दक्षिणा ददाति । यदि न विन्देत मन्थानेतावतो दद्यादोदनान्वा । पष्ठौहीं त्वक्तवंतौं दद्याद्धिरण्यं ददाति । वासो ददाति । तेनायुः प्रतिरत इति ब्राह्मणं । तं चेत्सौम्ये ऽध्वरे चिन्वीत प्रथमायामुपसदि चेत्करणं । मध्यमोत्तमे उपसदावन्तरेणोपधानं । काले ऽग्निप्रणयनं । दक्षिणानां काले दक्षिणाः । सवनीयस्य यूपो मृत्युपहश्चेद्द्वीने सत्रे वा चिन्वीत प्रथमे ऽहनि दक्षिणाः प्रथमे ऽहनि यूपो मृत्युपहो । न सत्रे दक्षिणा नीयन्ते । नाचिकेत एव मृत्युपहः स्यादित्येतदपरंमग्निं पिता सौत्रामण्या यजेत मैत्रावरुण्यामिक्षया वेति । तस्यै सायमग्निहोत्रे हुते सायंदोहः प्रातरग्निहोत्रे हुते प्रातर्दोहः । पशुपुरोडाशेन सह श्रपणमसमुदिते चर्या । संतिष्ठते मार्षिचः । ॥ ५ ॥ तृतीयः ॥

---

१ उपयष्टव्कृति M.

२ यद्वमिडोपकृत M.

३ ददाति instead of दद्या M.

अथ नाचिकेतस्य[1] प्रसिद्धं चेचकरणं यथा सावित्रस्यैतावदेव नाना । नास्य लेखा भवन्त्यथ याश्चुपीरुपदधाति लोकोऽसि स्वर्गोऽसीत्यञ्जलिनैकविंशतिं यथा निपतन्ति[2] तास्तत्तत्रोपदधाति । तदेतदन्यत्रापि[3] प्रकीर्णानामुपधानस्य[4] निदानं । यदि[5] प्राङ्गः पञ्च पुरस्तात्पञ्च दक्षिणतः पञ्च पश्चात्पञ्चोत्तरत एकां मध्ये । ऽथ यदि चित्रलम्न पुरस्तात्तिस्रो दक्षिणतः सप्त पश्चात्तिस्र उत्तरत एकां मध्ये । ऽथ यदूर्ध्वाः[6] पश्चात्कोष्ठ्याः[7] प्रभृत्यूर्ध्वाः[8] स्वयमातृण्णावकाशादथ यदि प्राचीः स्वयमातृण्णावकाशात्प्रभृति[9] प्राचीः । स्वयमातृण्णाभ्यः प्रभृति सिद्धमत ऊर्ध्वं । स यदीच्छेत्तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति प्राङ होतुर्धिष्ण्यादुत्सर्पेदित्याहवनीयमकाशाद्धेयं प्रागाद्यशस्तनी मा मा प्रोर्णोतु तेजसा यशसा ब्रह्मवर्चसेनेति । तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवतीत्यथ यदीच्छेद्भूयिष्ठ मे श्रद्धीरन्भूयिष्ठा दक्षिणा नयेयुरिति

---

१ नाचिकेतस्य Bo Ben

२ निपतंति HUB, निपतति Bo, निवपंति M, निवपति Ben.

३ मैतेनद॰ M

४ Thus H Bo, प्रकीर्णानामुपदधा॰ U; प्रकीर्णानुपधा॰ Ben, प्रकीर्णानुपधा॰ B, प्रकीर्णानामुपधा॰ M

५ स यदि M.

६ Thus MB, यदूर्ध्वं H, या ऊर्ध्वाः Bo Ben, यदूर्ध्वं U

७ Thus BH, कोष्ठ्या U, कोष्ठा H Ben, कोष्ठ्या Ben, कोष्ठ्‌ M.

८ ॰र्ध्वा वा ।

९ ॰काशप्र॰ M.

दक्षिणास्तु नीयमानास्तु प्राच्येहि प्राच्येहीति प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये जुहुयाद्भूयिष्ठमेवास्मै श्रद्दधते । भूयिष्ठा दक्षिणा नयन्तीति ब्राह्मणम् । संतिष्ठते नाचिकेतः । ॥ ६ ॥ चतुर्थः ॥

अथ ब्रह्मचितः[1] । प्रसिद्धं चेत्यकरणं यथा सावित्रस्यैतावदेव नाना । नात्र लेखा भवन्त्यथ पुरस्तादुदीचीर्दशहोत्रेष्टका उपदधाति चित्तिः स्रुक्तया देवतयाङ्गिरस्वद्ध्रुवा सीद चित्तमाज्यं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति दशाथ हृदयेष्टकामुपदधाति सुवर्णं घर्मं परिवेद वेनमित्यनुद्रुत्य देवैः स मानसीन आत्मा जनानामित्यन्तो । ऽथ यजुरिष्टके उपदधात्यग्निर्यजुर्भिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद सविता स्तोमैस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ पञ्चेष्टके उपदधाति सेनेन्द्रस्य तया देवतयाङ्गिरस्वद्ध्रुवा सीद धेना बृहस्पतेस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति । सर्वासां पारे सूददोहसः करोत्यथ दक्षिणतः प्राचीश्चतुर्होत्रेष्टका उपदधाति पृथिवी होता तया देवतयाङ्गिरस्वद्ध्रुवा सीद द्यौरध्वर्युस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति चतस्रो । ऽथ हृदयेष्टकामुपदधाति ब्रह्मेन्द्रमग्निमित्यनुद्रुत्य यज्ञमेतं चतुर्होतृणामात्मानं कवयो निचिक्युरित्यन्तो । ऽथ यजुरिष्टके उपदधातीन्द्र उदयामदेवस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद मित्रावरुणावाग्निधा तया देवत-

१ ब्रह्मचितस् M Be

याङ्गिरस्वद्ध्रुवा सीदेत्यथ पत्नीष्टके उपदधाति यथा पूष्णस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद वाग्वायोस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति । सर्वासां पारे सूददोहसः करोत्यथ पश्चादुदीचीः पञ्चहोत्रीष्टका उपदधात्यग्निर्होता तया देवतयाङ्गिरस्वद्ध्रुवा सीदाश्विनाध्वर्यू तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति एतस्मो । ऽपि वाश्विनाध्वर्यू इत्येतेनैव मन्त्रेण द्वे इष्टके समानतयादेवते उपदधाति । तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति[1] मन्त्रꣳ[1] संनमयत्यथ[1] हृदयेष्टकामुपदधाति सतं नियुतः परिवेदेत्यनुद्रुत्य प्राणमुखं तेन कृष्णो ऽस्तेनाहमसौत्यातो । अथ यजुरिष्टके उपदधात्यङ्गिरसो धिष्ण्यैरग्निभिस्तया देवताङ्गिरस्वद्ध्रुवा सीद मरुतः सदोहविर्धानाभ्यां तया देवताङ्गिरस्वद्ध्रुवा सीदेत्यथ पत्नीष्टके उपदधाति दीक्षा सोमस्य तया देवतयाङ्गिरस्वद्ध्रुवा सीद पृथिव्यग्नेस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति । सर्वासां पारे सूददोहसः करोत्यथोत्तरतः प्राचीः षड्ढोत्रीष्टका उपदधाति वाग्घोता तया देवतयाङ्गिरस्वद्ध्रुवा सीद दीक्षा पत्नी तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति यद्यथ हृदयेष्टकामुपदधाति सुवर्णं कोशꣳ रजसा परीवृतमित्यनुद्रुत्येन्द्रस्यात्मानꣳ शतधा चरन्तमित्यातो । ऽथ यजुरिष्टके उपदधात्यापः प्रोक्षणीभिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदौषधयो बर्हिषा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ

१ इत्यथ संनमयत्य॰ M, इति संनं समनयत्य॰ H Bo Ben. U (pr m.), संनमय॰ BU (sec m.).

पञ्चेष्टके उपदधाति वसूनां गायत्री तया देवतयाङ्गिरस्वद्ध्रुवा सीद रुद्राणां त्रिष्टुभया[1] देवतयाङ्गिरस्वद्ध्रुवा सीदेति । सर्वासां पारे सूददोहसः करोत्यथोपरिष्टात्प्राचीः सप्तदश-ष्टका उपदधाति महाश्वविहीता तया देवतयाङ्गिरस्वद्ध्रुवा सीद सत्यहविरध्वर्युमतया देवतयाङ्गिरस्वद्ध्रुवा सीदेति यद्यपि वानाष्ट्यवाप्रतिष्ठ्यस्य यज्ञस्याभिगराविष्टेन मन्त्रेण द्वे इष्टके समानतयादेवते उपदधाति । तया देवतयाङ्गिरस्वद्ध्रुवे सीद-तमिति मन्त्रः संनमयत्यथ[2] चद्वेष्टकामुपदधातीन्द्रो राजा जगतो य ईश इत्यान्तादनुवाकस्याथ चतुरिष्टका उपदधा-त्यदितिर्विद्या तया देवतयाङ्गिरस्वद्ध्रुवा सीद सोमो दीक्षया । तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पयोदर्याय पञ्चेष्टका उपदधात्यादित्यानां जगती तया देवतयाङ्गिरस्वद्ध्रुवा सीद विष्णोरनुष्टुभया[3] देवतयाङ्गिरस्वद्ध्रुवा सीदेत्ययादश । सर्वासां पारे सूददोहसः करोत्यथ यथावकाशं चतेष्टका उपदधाति वाचस्पते विधे नामन्निति दशहोतुर्वाचस्पते वाचो वीर्य-णेति चतुर्होतुः सोमः सोमस्य पुरोगा इति पञ्चहोतुर्भूर्भुवः सुवरिति षड्ढोतुर्वाचस्पते हृदिधे नामन्निति सप्तहोतुः । सर्वासां पारे सूददोहसः करोत्यथ यथावकाशमेव प्रतिचष्टे-ष्टका उपदधाति । देवस्य त्वा सवितुः प्रसव इत्यनुद्रुत्येषा ते

---

[1] त्रिष्टुभया M

[2] Thus MH, संनमय॰ the other MSS

[3] ॰नुष्टुभया

कामं दक्षिणोत्तानस्त्वाङ्गिरसः प्रतिगृह्णात्वित्येकामविंशतिमपि वा गन्धर्वाप्सराभ्यः स्रगरङ्करणे इत्येतेन मन्त्रेण द्वे इष्टके समानतयादेवते उपदधाति । तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति मन्त्रं संगमयति[1] । स्वयमातृण्णाभ्यः प्रभृति सिद्धमत ऊर्ध्वं । संतिष्ठते महाचित्[2] । ॥ ७ ॥ पञ्चमः ॥

अथ समस्तस्य । प्रसिद्धं चयकरणं यथा सावित्रस्तावदेव माना । सावित्रो ऽग्निः प्रथमा चितिर्लोकंपृणा[3] द्वितीया । नाचिकेतस्तृतीया । लोकंपृणा[3] चतुर्थी । महाचित्पञ्चमी । सर्वासु चितिषु स्वयमातृण्णा[3] । पुरीषान्तादिति यो । ऽग्ने देवाꣳ इहावहेत्येताभिः पञ्च[4] चितीरभिमृशति[4] । तं चेत्प्रीतो ऽध्वर उत्तम[5] एव चक्रे चिन्वीत प्रागुदीचपरीयायै दिवः श्येनीभिर्यजेतोदवमासीयायां[6] अपाधाभिः[6] । महत्प्रयुज्य[7] समस्यति । संतिष्ठते समस्तः । ॥ ८ ॥ षष्ठः ॥

---

१ Thus U (pr m). संगमयति the other MSS., M om. this passage

२ ०चित्(०चिन्) M Bo UH, but cp Āp. xix 15. 11.

३ ०तृण्णा M.

४ Thus H, पञ्चभिः पञ्च चितीर० U, पञ्च चितयो चितिमभिमृशति Be Ben, पञ्च चितयोऽभिमृशते M, पञ्चभिश्चितीरभिमृशति B.

५ उत्तमे U, instead of उत्तम एव चक्रे M has उत्तरवेदौ।

६ Thus HU (sec m.) ०समीपायाम्० M Ben Be U (pr m.), ०सायायायां० B cp Sāyaṇa on T Br. vol III, p 615, अपाधाभिः MU Be, the other MSS indistinctly (स or प)

७ महत्प्रयुज्य UH, महत्प्र च M

अथ वैश्वसृजस्य । प्रसिद्धं चैत्रकरणं यथा सावित्रस्यैतावदेव नाना । तिस्रो लेखा भवन्त्यथान्तमायां लेखायामुपदधाति यच्चामृतं यच्च मर्त्यमित्यष्टादश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां[1] लेखायामुपदधाति सर्वा दिशो दिक्ष्विति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामुपदधाति सर्वान्दिवः सर्वान्देवान्दिवीति नव । सर्वासां पारे सूददोहसः करोति । स्वयमातृण्णाप्रभृति सिद्धमत ऊर्ध्वं । तं चेदग्नीने[2] यज्ञे[2] वा चिन्वीत शतरात्रे[3] विश्वजिति सर्वपृष्ठे दक्षिणानां काले ब्रह्मा सदस्यासीनो वैश्वसृजान्व्याचष्टे[4] ऋचां प्राची महती दिगुच्यत इति[5] पञ्चो ऽर्धर्चशो ब्राह्मणे[6] वाक्यप्रश्नास्ता अध्वर्युः प्रतिगृणात्यों ऋचदृतं[7] सत्यसत्यं ऋचदरात्मा ऋचदिति । तस्योत्तमे पर्याये ऽरात्म[8] ऋचसंपद्यते[8] । संतिष्ठते वैश्वसृजः । ॥ ९ ॥ सप्तमः ॥

---

१ ०र्थान्तमायां M.

२ चेदुद्दीक्षोपाधिवे Be Ben

३ शतरात्रे ins M

४ वैश्वसृजान् Be Ben, विश्वसृजान् UHB; वैश्वसृजं M.

५ इत्युक्त M.

६ ब्राह्मणे B.

७ Thus BUH; Be Ben have each time नद्द after ऋचत् and M reads everywhere ब्रह्मन् instead of ऋचत्।

८ पदात्मऋचसंप० M.

एतेनारुणकेतुको व्याख्यातो । यावन्मन्त्रमवीष्टका[१] । लोकंपृणास्य स्वयमातृणायाप एव । पुष्करपर्णꣳ रुक्मꣳ हिरण्मयं[२] पुरुषं कूर्ममित्यातपति वर्षा इति यथासमाम्नातं[३] । पल्वल्या इत्यविशोष्या[४] इत्यर्थं । उत्तरवेद्यावपनकाले तां तूष्णीं जानुदघ्नीं[५] खात्वान्यत्र मृद निवपति । विदेरग्निरित्यादि लुप्यते । ध्रुवासीति प्रतिपद्यते । हस्तयाद्दमवीष्टका उपदध्याद्भद्रं कर्णेभिरिति द्वाभ्याꣳ शान्तिं कृत्वा ताभ्यामुपदधात्यापमापामिति पञ्चभिर्महानाम्नीभिरुष्णोदकꣳ । शिवा न शन्तमेति मौषध्यो[६] ऽपो[६] ऽध्वर्यवे ददाति । स ताः प्रतिगृह्य शिवा न इत्युपदधाति । सुमृडीकेति भूमिवतीमुपदध्यादेताः पुरस्तात्स्तुतिः प्रत्यचमित्यष्टौ मध्ये शुक्रं ते अन्यदिति च । मार्कंजानामित्येकादश पुरस्ताद्दक्षिणतो ऽश्विदुःखोत्थितस्यैवेति पश्चिहेह वः स्वतपस इति चातिताम्राणीति चतस्रो मरुन्तीस्त्वम्राः प्रवर्ग्यवदाद्यन्तयोः शान्तिं कृत्वात्यूर्ध्वाञ्च इति चौष्णतुमण्डकान्यत्र द्रप्स इति चारोग इत्यष्टौ[७] सूर्यनामभिः[७] पदशो

---

१ यावन्मात्रम॰ MU.

२ om. MB Be Ben.

३ ॰म्नाता M

४ इत्यशोष्या MU BH

५ ॰दघ्नं MU (sec. m.)

६ स्यौषध्योपो B, औषध्या अपो UH, औषध अपो M, मौषध्या अपो Be, औषध्या अपो Ben

७ Thus B Ben; इति चत्र सूर्य॰ Be इत्यष्टौ चत्र सूर्य॰ HU, M om. सूर्यनामभिः।

यत्ते चित्रमिति च । व्याहृतीर्जपित्वापो च इति यजमान उपतिष्ठत । एवमुत्तरैरुपस्थानं व्याहृतीर्जपित्वा । सप्त सूर्याः सप्त दिशो नानासूर्या यद् द्यावश्चित्रं देवानामिति चतस्रः सौरीः पुरस्तात्केदमभ्रमित्येकामर्धमासा इत्युपरिष्टात्काला अप्सु निविशन्त इति[1] दक्षिणतः । किंस्विदेवेति पञ्च वैष्णवीः[2] । पृच्छामि त्वा परं मृत्युमिति चतस्रो मृत्युमतीः । पृच्छामि त्वा पापकृत इति चतस्रो निरयवतीः[3] अग्निरग्रे नयेति द्वे । अग्निश्च जातवेदाश्चेत्यष्टौ दिश्या दिशो च इति यजमानः । प्रभ्राजमाना इत्येकादश रुद्राः । प्रभ्राजमान्य इत्येकादश रुद्राण्यः पञ्च मध्ये । रूपाणि च इति यजमानः । स्वानभ्राडित्येकादश गन्धर्वगणाः पश्चात् पश्चाद्गौरीर्मिमायेत्येका[4] । वराहवः स्वतपस इति सप्त वाताः पश्चात् । समानमेतदिति वृष्टिमती[5] । यदक्षरमिति लोको । जमदग्निरित्याप्यायितस्त्वंशंयोरिति शंयुः । महस्सदित्यष्टौ संयानीः । स संयाम इति द्वे च[6] । पवित्रवन्तः पवित्रं ते ब्रह्मा देवानाममृतः सद्यः इति चतस्रः पवित्रवत्य उत्तरतो । ऽसौ य स्तवा इति सप्त मध्ये । ऽयो मणिमिति पञ्च

१ द्वे ins M
२ Thus BHU, वैश्वव्याः M Be Ben.
३ निरयवती॰ B, पयस्वतीर॰ Ben, पयस्वतीर॰ Be.
४ एकां H Be Ben U
५ ॰ती BU, वृष्टिमिद् M, Be Ben om. the word.
६ om B.

वैश्वदेवीरुत्तरत । आ तमग्ने रथमिति तिस्र । आतनुष्वेति चतस्र । आ मन्द्रैरित्येकां यजमान उपदध्याद्ंशुभिश्चेति द्वे । समख्योमित्येकामंहणाश्चा इति चतस्रो रेवतीर्मह्मण उद्-रणममीति चतस्रो मह्यमदना । अष्टयोनीमित्यष्टौ दिश्या । मित्रस्य वरुणस्येत्यष्टौ दिश्याः । पुष्करपर्णꣳ रुक्मꣳ हिरण्मयं पुरुषं कूर्ममिति महाग्निवद्देव[1] । तान्युपधाय हꣳसः शुचिषदिति द्वे दूरोहणे पुरुषमभितस्तद्दित्यदमिति द्वे मध्ये । वसूनाꣳ रुद्राणामित्यष्टावुत्तरतो । रश्मयो व इति यजमान । आरोगस्येत्यष्टावुपरिष्टादापो व इति यजमानः । प्रभ्राजमानानामित्येकादश प्रभ्राजमानीनामिति चैकादश मध्ये । रूपाणि व इति यजमानो । अग्नेः पूर्वदिश्यस्येत्यष्टौ दिश्या । दिशो व इति यजमानो । दक्षिणपूर्वस्यामिति चतस्रो नरकवतीर्यथास्थिन्नर्मा यस्मिन्निन्द्रियाणि शतक्रतविति द्वे दक्षिणत । इन्द्रघोषा वः संज्ञानमिति षड् दिश्या । आदित्य सर्व इति पञ्च दिश्या । एवा छन्देति षड् दिश्या । आपमापामिति सर्वोपरिष्टादपाꣳ रसमित्येकां । कामसदुघ इति संकल्पवतीमापो हि यदित्योषवती । विधाय लोकामिति लक्षणवती । सेतव इत्येकामिमा नु कमिति तिस्र । आपत्रस्वेति सप्तदश सपत्नो । विश्वरूपीमिति द्वे । पर्जन्यायेति

---

१ Thus H Bc °वद्देव B M Ben L om. वव, but M has वतानि instead of the following तानि।

-तिस्रः। पुनर्मा मैत्विति च तिस्रः[1]। स्वयमातृण्णादि समानमुत्तरꣳ सादयित्वा। स्वयमातृण्णा लोकंपृणा एता आपः पञ्च चितयो भवन्ति। प्रतिदिशं चितीः[2] पुष्करपर्णादिभिः प्रच्छादनं। लोकं पृणयैव द्वितीयामन्याः प्रथमचितिवत्त्वं पुष्करपर्णादय। उत्तरतो[3] लोकंपृणयापवर्गो। दीर्घदारुभिर्मैन्द्रं[4] कृत्वा घृष्टौ द्वेति पुरीषव्यूहनमन्त्येष्टके[5] शतरुद्रीयहोमो। ऽनुमन्त्रणान्ते ऽग्निप्रणयनꣳ। ह्रयमानायां[6] वैश्रवणयज्ञो ब्राह्मणेन[7] व्याख्यातो ऽन्नकामस्य सर्वकामस्य[8] वा पर्वणिपर्वणि वैश्रवणयज्ञः। सोत्तरवेदिषु क्रतुषु चिन्वीतेति यथाब्राह्मणं[9]। तस्यैतद्व्रतमिति यथाब्राह्मणं संमिताश्च[10] व्रतसमुच्चया[10]। आपो न बीभत्सा यथाब्राह्मणमेककामः[11]

---

१ चतस्र M; तिस्र the other MSS.

२ चितिं H चितिः U.

३ उत्तर Be Ben

४ ॰मैंत्वं M.

५ ॰मंत्येष्टकोर्ध्वं MUH.

६ Uncertain reading: ह्रयमानायां U Be BU; ह्रियमाणायां M; ह्रीयमाणायां Ben.

७ Thus Sāyaṇa (comm. on Taitt. Ār): ब्राह्मण MUH; ब्राह्मणे Be Ben; B om. the word

८ सर्व॰ M.

९ चैतयन् ins. M

१० Uncertain reading, HU read as given in the text; संमितं व्रतसमुच्चय B, सम्मितश्च व्रतसमुच्चय Be Ben; संमितव्रतसमुच्चय M.

११ यथाब्राह्मणमेककाम Be Ben; यथाब्राह्मणकामः HBUM.

सर्वकामो वा । आपो[१] वा इदꣳ सर्वमिति ब्राह्मणं[२] विज्ञायते सह्म वा आपो यदाप[३] उपधीयन्ते सह्म[४] वै[४] तदात्मन्धत्ते सह्मणः सायुज्यꣳ सलोकतामाप्नोति य एतमग्निं[५] चिनुत इति । संतिष्ठत आरुणकेतुकः संतिष्ठत आरुणकेतुकः । ॥ १० ॥ अष्टमः ॥[६]

॥ इत्यत्येकोनविंशः प्रश्नः ॥

---

१ आपो UBH वा आपो Be.

२ om. M

३ Thus MU (pr m.), यदप all the other MSS.

४ सहैव M

५ Be Ben ins. चिनुते ।

६ Adhyâya numbers for this prasna are found only in M., the MSS agree all in designing this prasna as आरुणकेतुकम् or आरुणम् ।

## CORRIGENDA.

Page 20, l 8, *read* तम्र *instead of* तम्र

" 70, l 12 " ॰धारयत्य॰ " ॰धारयत्य॰

" 96, l 10 " षोडशमय्य " ॰मयं

" 187, l. 4 " प्रवी॰ " प्रत्री॰

" 200, l 1 " उवेवैष[1] " उ[1]वैवैष[1]

" 226, l 5 " सुवर्णमयि॰

" 336, note ६ " ॰धारि॰

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

*ASIATIC SOCIETY OF BENGAL.*

NEW SERIES, No. 1379.

# बौधायन श्रौतसूत्रम् ।

# BAUDHĀYANA ŚRAUTA SŪTRAM

A SANSKRIT WORK ON THE VEDIC LITERATURE.




EDITED BY

DR W CALAND OF UTRECHT

VOL III FASCICULUS I

---

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

*ASIATIC SOCIETY,* 1, PARK STREET

1914

# INDEX.


| | | | | |
|---|---|---|---|---|
| Preface | | | | |
| Dvaidhasūtra | .. Praśnas XX-XXIII. | | | |
| darśapurnamāsau | .. Praśna XX, | 1-15 | (Adhy | 1-5) |
| agnyādheyam | .. ,, ,, | 16-18 | ( ,, | 6) |
| punarādheyam | .. ,, ,, | 19 | | |
| agnihotram | . ,, ,, | 20 | | |
| piṇḍapitryajñah | . ,, ,, | 21 | ( ,, | 7) |
| āgrayaṇam | ,, ,, | 22 | | |
| agnyupasthānam, etc | ,, ,, | 23, 24 | ( ,, | 8). |
| paśubandhah | .. ,, ,, | 25-31 | ( ,, | 9, 10) |
| cāturmāsyāni | , XXI, | 1-6 | ( ,, | 1, 2) |
| agnistomah | ,, ,, | 7-26 | ( ,, | 3-10). |
| agnicayanam | .. ,, XXII, | 1-12 | ( ,, | 1-6). |
| vājapeyah | . ,, ,, | 13-15 | ( ,, | 7). |
| rājasūyah | .. , ,, | 16-21 | ( ,, | 8-10) |
| kāmyestayah | .. ,, XXIII, | 1-4 | ( ,, | 1, 2). |
| aupānuvākyam | ,, ,, | 5-8 | ( ,, | 3, 4) |
| dvādaśāhah | . ,, ,, | 9-11 | ( ,, | 5, 6). |
| ahīnāh . | , ,, | 12, 13 | ( ,, | 7) |
| atirātrah | .. ,, ,, | 13 | | |
| ekādaśinī | .. | | | |
| punaścitih | . | | | |
| kuṇḍapāyinām istih | , ,, | 14, 15 | ( ,, | 8). |
| kāmyāś citayah | .. | | | |
| sautrāmanī | .. ,, ,, | 16 | ( ,, | 9). |
| ayanāni | . ,, ,, | 17 | | |
| ekāhāh .. | ,, ,, | 18, 19 | ( ,, | 10). |
| Karmāntasūtra | . Praśnas XXIV-XXVI. | | | |
| paribhāṣāh | .. Praśna XXIV, | 1-11 | ( ,, | 1-6) |
| agnyādheyam | . ,, ,, | 12-17 | ( ,, | 7-9). |
| punarādheyam | . ,, ,, | 18, 19 | ( ,, | 10) |
| darśapūrnamāsau | . ,, ,, | 20-29 | ( ,, | 11-15). |
| agnihotram | .. ,, ,, | 30, 31 | ( ,, | 16). |
| piṇḍapitryajñah | .. ,, ,, | 32 | | |
| āgrayanam | . , ,, | 33 | ( ,, | 17) |
| agnyupasthānam, etc. | ,, ,, | 33 | | |
| paśubandhah | ,, ,, | 34-37 | ( ,, | 18, 19). |
| kāmyāh paśavah | ,, ,, | 38, 39 | ( ,, | 20) |
| cāturmāsyāni | , XXV, | 1-3 | ( ,, | 1, 2). |
| agnistomah | , ,, | 4-26 | ( ,, | 3-16) |
| agnicayanam | . ,, | 27-32 | ( ,, | 17-19) |
| vājapeyah | . ,, ,, | 33-34 | ( ,, | 20). |

# THE

# BAUDHĀYANA ŚRAUTA SŪTRA

BELONGING TO THE

# TAITTIRĪYA SAṂHITĀ


EDITED BY

DR W. CALAND,

*Professor of Sanskrit at the University of Utrecht.*


## VOLUME III.


CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY 1 PARK STREET.

1913.

| | | | | |
|---|---|---|---|---|
| rājasūyaḥ | .. Praśna | XXVI, | 1–3 | (Adhy. 1, 2). |
| iṣṭikalpaḥ | .. ,, | ,, | 4–6 | ( ,, 3, 4). |
| aupānuvākyam | .. ,, | ,, | 7–9 | ( ,, 5, 6). |
| aśvamedhaḥ | .. ,, | ,, | 10–11 | ( ,, 7). |
| dvādaśāhaḥ | .. ,, | ,, | 12–17 | ( ,, 8–11). |
| ahīnāḥ .. | .. ,, | ,, | 18–21 | ( ,, 12, 13). |
| atirātraḥ } sautrāmaṇī } | ,, | ,, | 22 | ( ,, 14). |
| ekadaśinī } ayanāni .. } | ,, | ,, | 23, 24 | ( ,, 15). |
| kuṇḍapāyinām ayanam, etc .. | | | | |
| kāmyāś citayaḥ | .. ,, | ,, | 25–27 | ( ,, 16, 17). |
| ekāhāḥ .. | .. ,, | ,, | 28, 29 | ( ,, 18). |
| | ,, | ,, | 30–33 | ( ,, 19, 20). |
| Prāyaścittasūtra | .. Praśnas | XXVII–XXIX | | |
| iṣṭiprāyaścittāni | .. Praśna | XXVII, | 1–13 | ( ,, 1–10). |
| hutānumantraṇāni | .. ,, | | 14 | ( ,, 11). |
| mṛgāreṣṭiḥ | ,, | ,, | | |
| pavitreṣṭiḥ | ,, | XXVIII, | 1 | ( ,, 1) |
| nakṣatreṣṭayaḥ | .. ,, | ,, | 2 | ( ,, 2). |
| āgrayaṇaprāya° | .. ,, | ,, | 3, 4 | ( ,, 3). |
| paśuprāya° | ,, | ,, | 5 | ( ,, 4) |
| cāturmāsyaprāya° | .. ,, | ,, | 6, 7 | ( ,, 5). |
| adhvaradīkṣāprāya° .. | ,, | ,, | 8 | ( ,, 6). |
| sarvayajñānām prāya° | ,, | ,, | 9 | ( ,, 7). |
| anugrahāḥ | ,, | ,, | 10, 11 | ( ,, 8, 9) |
| somaprāya° | ,, | ,, | 12, 13 | ( ,, 10). |
| yajñakarmaṇi prāya° .. | ,, | XXIX, | 1, 2 | ( ,, 1, 2). |
| agnihotrasya laukika-vidhiḥ | ,, | ,, | 3–6 | ( ,, 3–5). |
| agnihotrasamāsaḥ, etc | ,, | ,, | 7 | ( ,, 6). |
| prāyaścittasamuccayaḥ | ,, | ,, | 8–11 | ( ,, 7–10). |
| | ,, | ,, | 12, 13 | ( ,, 11). |
| Śulbasūtra | ,, | XXX. | | |
| Pravarasūtra | | | | |
| paribhāṣāḥ | | | | |
| aṅgirasaḥ | .. | k | 1, 2 } | ( ,, 1). |
| gotamāḥ | .. | k | 3–9 } | |
| bhāradvājaḥ | .. | k. | 10–16 | ( ,, 2). |
| atrayaḥ | . | k | 17–26 | ( ,, 3, 4). |
| viśvāmitrāḥ | . | k | 27–30 | ( ,, 5) |
| kaśyapāḥ | .. | k | 31–40 | ( ,, 6). |
| vasiṣṭhāḥ | | k. | 41–44 | ( ,, 7). |
| agastayaḥ | .. | k | 45–48 | ( ,, 8). |
| | . | k | 49–51 | ( ,, 9). |
| kṣatriyavaiśyānām pravaraḥ, etc. | | k. | 52, 53 | ( ,, 10). |

Indexes.

I. Index of proper names.

*a.* Names of sāmans.
*b.* Names of peoples and localities.
*c.* Ritualistic authorities.
*d.* Proper names of mythical, legendary and historical persons outside the pravara-praśna.
*e.* Proper names in the pravara-praśna.

II Index of words.
Additions and corrections

# PREFACE.

The MSS which have been consulted for this third volume of the Baudhāyana Srauta sūtra are the following ·

*a Dvaidhasūtra*

1. H, from the Haug collection at Munich, containing only the first two praśnas and the first kandikā of praśna 3.

2 Bu, a MS. from the collection Burnell belonging to the India Office, containing the complete text, without the sarvatomukhadvaidhas

3. Be (see Preface to vol i, p viii).

4. B, the Bombay MS. (see Preface to vol. i, p. vii), giving only the last two praśnas

5 Ben, copy from a Benares MS , containing the first praśna only.

6 D, a MS *from* Dhar, *containing on 37 foll. the first* two praśnas and the first kandikā of praśna 3. Nearly related with H

7. U, from Ujjain, in Nāgarī, on 59 foll , complete; the sarvatomukhadvaidhas on a separate leaf This MS belongs to the same collection and is written by the same hand, and on the same kind of paper, as all the other Baudhāyana MSS from Ujjain (see Preface to vol ii, p v)

8. C [illegible]

this MS [illegible]

These thr[illegible]

MS is [illegible]

faultless [illegible]

after a be[illegible]

9 [illegible]

Society o[illegible]

and the [illegible]

10 [illegible]

the text [illegible]

sarvatomukha , nearly related to Be.

11 W, the MS of the collection Whish, cp Winternitz, a Catalogue of South Indian MSS. No. 94 Only partly collated

The vivarana of the Dvaidha is extant and known to me from several MSS , which, however, are far from exact Of use were also the Prayogasāra by Keśavasvāmin, the bhāsya composed by Sāyana, who in his treatment of the darśapūrna-

māsa mentions and comments upon all the Dvaidha and Karmānta passages, which bear upon the text proper of Baudhāyana. By Ms. I indicate in the critical notes the Mahāgnisarvasva (see Preface to vol. ii, p. v), which treats equally of those Dvaidha and Karmānta sūtras that concern the agnicayana of the text proper.

*b. Karmāntasūtra.*

1. H, the Haug MS., complete.
2. Be, see Preface to vol. i, p. viii.
3. D, the Dhar MS., containing on 35 foll. the first two praśnas.
4. U, the Ujjain MS., 56 foll., śake 1761.
5. G, the Gwalior MS., on 46 foll.; corrected. The last three MSS. belong to the same collections as those of the Dvaidha text.
6. M, the Mackenzie MS.; cp. Preface to vol. ii, p iv.
7. Ben, a copy of the Gov. Skt. Coll. at Benares; rather good and independent MS.
8. C, No 2188 of the Gov. Skt MSS. Collection at the Asiatic Society of Bengal, Nāgarī, on paper, well written, 133 foll., containing on foll 71–133 the first two Karmānta praśnas

Besides the vivarana of Bhavasvāmin and the remarks of Sâyana and Keśavasvāmin, we possess a valuable bhāṣya on Karmānta I. 1-21 (No 776a of the collection in the India Office; see Eggeling, Catalogue of the Sanskrit MSS. in the Library of the I. O., vol. i, p 57) by Veṅkateśvara; the var. lect of the text according to this work is indicated by me in the critical notes as Vt , that of the commentary given by Veṅkateśvara as Vc.

*c. Prāyaścittasūtra.*

1. H, the MS. Haug.
2. U, from Ujjain, on 25 foll., part of the same collection as mentioned above
3. B, the Bombay MS , see Preface to vol. i, p. vii, copy from an original, dated śake 1743.
4. Tr, the MS. from Trichinopoly, mentioned in the Preface to vol. ii, p. v.
5. C[1], a part of the text is found in the MS., mentioned under the MSS for the Dvaidhasūtra (No 10).

More or less help was got from Gopāla's Vivarana (Viv.) known to me from the MS. belonging to the India Office (No. 2596; see Eggeling, Catalogue, vol. i, p. 91) The text proper is here indicated only by the beginning words of each

sentence I consulted also, without however, getting much help from them, the Prāyaścitta-pradīpa (I O. 1467A) and the Prāyaścitta-candrikā (I O 1572)

*d* *Śulbasūtra.*

1. H, the MS Haug
2. U, from Ujjain, on 12 foll, part of the same collection as mentioned above
3. B, the Benares MS, see Preface to vol. I, p viii
4. M, the Mackenzie MS; see Preface to vol II, p v

I need not say, that the excellent edition with Skt commentary and English translation by Thibaut (in the Journal "Pandit" (vols IX, X and vol I of the new series) has been consulted with good results The readings accepted by Thibaut are indicated by me by T

*e* *Pravarasūtra*

1. T, a copy from the Tanjore MS. No 259, see Preface to vol I, p x.
2. M, being a complete copy of the Smārtasūtra in Grantha, copied for me somewhere in Madras through the kind mediation of Prof Hultzsch It is, on the whole, a good MS.; at the end of it the pravara is found
3. G, the Grantha edition of the Baudhayana smārtasūtra, Madras, 1905, by Muddudīkṣita This edition narrowly agrees with the MS M
4. Bu, the Burnell MS XCIII (No CXVIII of the Catalogue of a collection of Sanskrit MSS., p 35) in Grantha It contains also the pravarakhanda of the Vaikhānasa school Independent, although rather bad MS
5. Be, copied by me from the Benares MS. 115, see Preface to vol I, p VII
6. U, from Ujjain (see above), very narrowly related to the last-mentioned MS from Benares on 10 foll

Other texts which have been used in constituting the pravarapraśna are

The Gotrapravaramañjarī by Puruṣottama, a Colebrooke MS. belonging to the India Office (No 2316A, Egg No 1777) In the critical notes indicated by me as Pm It contains shat-

It is curious to perceive, that although according to Puruṣottama the pravarakhandas of Kātyāyana and Laugākṣi are the

same, the Kātyāyana text known to us from the Pariśiṣṭas of the White Yajurveda (see Weber in the 'Verzeichniss der Skt HSS der Kgl. Bibl zu Berlin,' vol. i, p. 54-60) is different from that given by Puruṣottama The one contributed to Laugākṣi is probably the pravarādhyāya of the Kaṭhas; the text attributed by tradition to Kātyāyana (as given by Weber) agrees, with many various readings, however, on the whole with the pravarādhyāya of the Mānavas I was kindly allowed by Prof Knauer to use this text, which also is handed down to us in a very corrupted state

A lengthy treatment of the pravara is given also by ... -ismārtasaṃskāra- ... enes 1893) on pp ... -austubha, pp 179-196 of the lithographic edition, and by Raghunātha in his Gotrapravaranirṇaya (MS. I O. No 1781) These three texts are indicated by me in the critical notes successively as Rm., Sk, Pn The three texts give a great many more names than are contained in the pravarapraśna of Baudhāyana, as they join, without any discrimination, to the names of the Baudhāyana text also those of other pravarakhaṇḍas Moreover, they constantly put in the plural all the names found in the singular in our text

Of some importance is a certain gotra list as handed down among the Deśasth brāhmaṇas in Census of India, 1901, vol i, India, Ethnographic Appendices, by H. H. Risley, Calcutta, 1903, on pp 120-122

The text of this praśna is one of the most difficult to reconstruct Rarely we find the proper names without variants The MSS. can be divided into two groups: M (with G) T and Bu on one side, Be (with U) and Pm on the other The other nibandhas seem to draw on Pm.

The pravarapraśna in the kalpasūtra of the Baudhāyaniyas was probably placed originally immediately behind the pitṛmedhasūtra and before the dharmaśāstra. It is inserted there in M and in the Grantha edition, cp. the words of Puru- ... *uktāny aiṣṭikasaumikapā-* ... *krantāni darśapūrṇamāsā-* ... the fly-leaf of the Ujjain ... themselves any indication of praśna number is found Even the number xxx of the Śulbasūtra is conjectural, on the cover of the MS Ben 116 is written शुल्बसूत्र प्रश्नः Although, then, the number of the praśnas cannot be given with certainty, their sequence, in the main, is firmly established

It was originally my intention to include in this edition of

the Baudhāyana texts also the whole smārtasūtra. But I now prefer to give only the śrautasūtra; perhaps I may undertake later on a critical edition of this text, which indeed is now accessible, be it not in critical editions. One is the Grantha edition mentioned under the MSS used for the pravarapraśna, the other has appeared at Mysore (1904) under the title. बोधायनगृह्यसूत्रम् । The Bodhāyana gṛhya-sūtra edited by L. Srînivâsâchârya On the other hand, I thought fit to edit the *Sulbasūtra anew, even after the excellent work of Prof.* Thibaut, because it had to be given to make the śrautasūtra complete, and also because my MSS enabled me to give in some places a better reading than Thibaut's text presents I have taken much pains to obtain a copy of a part of the Baudhāyana kalpasūtra, which must have existed, but seems to be lost now, viz. the hautrasūtra. Bhavasvāmin and Sāyana quote often from this text, as also does the commentary on the third book of the Taittirīya brāhmana

My design of publishing the vivarana of Bhavasvāmin [illegible]

volume an index of words, giving, wherever it is possible, the explication of the commentators.

At the end of my task I have to express my sincerest thanks to all who kindly helped to procure me the material for my work especially to Dr Thomas, Chief Librarian to the India Office, and to Prof Bhandarkar If this volume can now appear, it is chiefly due to their kind assistance

W. CALAND.

UTRECHT, *January*, 1912.

# द्वैधसूत्रम् ॥

4 उपवमथ इति[१] ॥ कथमु खलूपवमथं जानीयात्संध्यः खिदेवोपपाद्यो ऽथ ऽपूरि[२] नादर्शीति[२] । साधु खलु संध्यः[३] साधु[४] संधेरुपपादनं[५] । ननु[६] खलु संध्यः सूपपादय[७] इव[७] मर्त्यानां लेव[८] संध्य इवेति[९] ॥ स[९] ह[९] स्माह बौधायन

१ The constitution of the text of this first dvaidha being very difficult, I am not sure to have given everywhere the right reading and interpunction.

२ Thus corrected according to the Vivarana, पूरिणादर्शीति U Bu G D C, पूरिणदर्शीति Ben, करिणादर्शीति H, पूरिण्वदर्शीति Be

३ Thus (संध्यः) C U Bu G D, संध्य Be W, संध्या H Ben

४ खलु ins G (sec m) and C.

५ After °पादनं U Bu D G (pr m) C H Ben ins यत्पौर्णमासी यजते मस्य चेदुपवसथो (थो) खमित चादित्ये, this passage is not found in W and has been effaced in G The vivarana has nothing corresponding to it

६ ननु W C; नतु Bu G D, न Be, missing in Ben H U, नच the vivarana (one copy), च (another copy).

७ सूपपादय इव W, सूपपादय इव. Bu, सूपपाद्य इव Be, सूपपाद्य (omitting इव) H U Ben D C G (pr m), सूपपादयः G (sec. m). *The vivarana runs* न च (*var* च) खलु संध्यः सूपपादय- सूपपादः खलु भवेदिह संयगुपपादनं (another copy भविनय समधिधित्य चन्नर्भावे सम्यगुपपादन) सूपपाद- सूपपाद धातोर्नि भूतविभक्तादित्वात् (cp the Vartt. on Pāṇ III 2 5 ?)

८ लेव HU Be Ben W G (pr m.) D C, वै Bu, वैव G (sec m.), लेव the vivarana (*one copy*), लेव (*another copy*)

९ Thus (इवेति सह) U and C only, इवेति सह D, स is not found in H Ben G (pr. m), इवेति is not found in Bu G (sec. m); इवस Be, सन्ध्यासु च W The vivarana runs एवं स्थिते ऽन्यो ऽप्यस्ति पक्ष इति । स च स्माह बौधायनः ।

यद्येतदुपवसतोऽस्तमित आदित्ये पुरस्ताच्चन्द्रमा लोहितीभवन्निवोदियात्तमभ्युपवसथं जानीयादित्यो ह स्माह शालीकिरतिपन्नः[1] खल्वेष भवति । स[2] संस्थं[2] वैवोपपादयिषेत्पूर्णे[3,4] वाभियजेत । तस्य चेदुपवसतोऽस्तमित आदित्ये पुरस्ताच्चन्द्रमा लोहितीभवन्निवोदियादारमताग्निहोत्रेणेत्युक्त्वा पार्वणेन प्रक्रामेत्संस्थिते पार्वणेऽग्निहोत्रं जुहुयादिति[5] नु[6] खलु पौर्णमास्याममावास्यायामिति[6] । स ह स्माह बौधायनोऽदृश्यमान एवोपवसेद्दृश्यमान इत्येवं चैव खलु कुर्यादिति शालीकिरस्ति[7] त्वपि[7] दृश्य-

---

१ Thus (त्तिपन्नः) D C G (sec. m.) and the vivarana; शालीकिरितिपन्नः or °रितिपनः the other MSS.

२ स संस्थं Be, संसंस्थं D (pr m.); स संस्थे C; स संस्थि Bu U; संसंस्थि H (reading संसंस्थेवोप°), स संस्थि Ben (reading स संस्थेवोप°) Are we to read स संस्थं? The vivarana has सह संस्थेन ।

३ Thus G and B (the last MS reading °षि° instead of °यि°); वैवोपपादयिषेत D C, वैवोपपादयिषत्पू° Be; वैवोपपादयिषेत्पू° U, °पादयिषत्पू° H Ben

४ पूर्णं Be Ben D C, पूर्णां Bu U G, पूर्णं H, पूर्वं the viv (one copy), पूर्णां (another)

५ Thus Bu G (sec m) D C U, °यान्नयस्तु H Be G (pr. m) °यान्नोत Ben

६ Thus Ben G, °पौर्णमावा° D C, H U Be om खलु ।

७ Thus C U Be, °स्त्विपि G D; °स्त्वपि H °स्त्यपि Ben, शालीकिरपि Bu

मास उपवसथो यत्रैतत्प्राचीभिरुपपश्चो[1] ऽणुश्चन्द्रमाः[2] परिनश्यन्नुपव्युष भवति न स श्वो भूते दृश्यते तमप्युपवसथं जानीयादिति ॥

अग्नीनामन्वाधान[3] इति ॥ सूत्रमौपमन्यवीपुत्रस्यौचो ह स्माह बौधायनो विहृत्याभिरग्नीनन्वादध्यात्तिसृभिस्तिसृभिरेकैकं ये नव समामनेयुरथ ये ऽष्टौ प्रथमां वोत्तमां वा द्विरभ्यावर्तयेयुरथ ये दश तिसृभिस्तिसृभिरेकैकमन्वाधायोत्तरेणाहवनीयं तिष्ठन्दशमीं निगदेदित्य॑चो ह स्माह शालीकिर्यो नु खलु गार्हपत्यः सकृदन्वाहित एष भवति यामयोनिरन्वाहार्यपचन आहवनीयमेवैकं विहृत्ययान्वादध्याद्यथातिशिष्टा उत्तरेणाहवनीयं तिष्ठन्निगदेदित्य॑चो ह स्माहौपमन्यवो विहृत्याभिरेवाग्नीनन्वादध्यादेकैकमेकैकयाथातिशिष्टा उत्तरेणाहवनीयं तिष्ठन्निगदेदित्य॑चो ह स्माह मौद्गल्य आहवनीयमेवैकमन्वादध्यादग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमꣳ श्वो यज्ञाय रमतां देवताभ्यः ॥ वसून्रुद्रानादित्यानिन्द्रेण सह देवताः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया ॥ इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान्देवान्परिगृह्णामि पूर्वः ।

---

१ ॰प्राचीभिरु॰ C U Ben Bu G, ॰प्राविभिरु॰ H D, ॰प्रावाभिरु॰ Be

२ Thus G D C and the vivarana नुश्चंद्रमा U, नश्चंद्रमा H Ben Be, श्चंद्रमाः Bu

३ ॰अग्न्यन्वाधान C H

अग्निर्हव्यवाडिह तानावहतु[1] पौर्णमासꣳ हविरिदमेषां मयीति पौर्णमास्यामामावास्यꣳ हविरिदमेषां मयीत्यमा- वास्यायामित्यु॑चो ह स्माह मैत्रेय आहवनीयमेवैकं विहृत्य- यान्वादध्यात्तूष्णीमितरावयातिशिष्टौ[2] उत्तरेणाहवनीयं निह- चिगदेदिति॑ आहुतीभिरेवाग्नीनन्वादध्यादिति राथीतरः ॥

1.3 आतञ्चनेष्विति ॥ स ह स्माह बौधायनो हविरातञ्चनान्ये- तानि भवन्तीत्यु॑चो ह स्माह शालीकिर्दधि खल्वातञ्चनार्थे[3] दृष्टं भवति तस्मिन्नविद्यमान एतेषामेकेनातञ्च्यादिति ॥

1.7 व्रतोपायन इति ॥ स ह स्माह बौधायनः संगवकाले वा व्रतमुपेयाद्धविःषु वा दोह्यमानासु प्रणीतासु वा प्रणेष्यत्सु[4] हविःषु वासन्नेष्वित्यु॑चो ह स्माह शालीकिः पूर्वेद्युःकालं खलु व्रतोपायनं भवतीति ब्राह्मणं बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामिति स[5] संगवकाल एव व्रतमुपेयादित्यु॑- न्वाधानप्रभृतीत्यौपमन्यवः ॥

---

१ After ॰वहतु Bu G ins आयन्तु देवाः सुमनस्यमानाः (TS. I 5. 10. 3).

२ After ॰शिष्टौ U H D C Be Ben and G (p. m.) ins आदधाति, — Be om. ॰च, Bu has आदधाति शिष्टा, in his citation of this passage Sāyana has, rightly, no आदधाति।

३ Thus U G Be Bu, ॰र्थं Ben, ॰र्थे C. H om. ॰र्थे।

४ प्रणीयमानास्वित्यर्थः । छान्दसो प्रत्ययः Sāyaṇa.

५ Om. Bu D C and Sāyaṇa

अभ्युदितेष्टामिति ॥ स ह स्माह बौधायनः सिद्धैरेवामावास्यैर्हविर्भिरिष्ट्वा[१] पुनरुपोष्य श्वो भूते काम्यामनभ्युदितामव्यापन्नां यजेतेत्य''न्यो ह स्माह शालीकिर्यैषा ब्राह्मणेष्टिस्तया व्यक्रयेष्ट्वा पुनरुपोष्य श्वो भूते काम्यामनभ्युदितामव्यापन्नां यजेतेति नु खलु संनयतो'' ऽथासंनयतः' समानः कल्पो बौधायनस्या'न्यो ह स्माह शालीकिरप्स्वेवैतानि[२] हवींषि श्रपयित्वा पुनरुपोष्य श्वो भूते काम्यामनभ्युदितामव्यापन्नां यजेतापि वोपवसथ एवातिप्रवर्धेतेति[३]' ॥

आच्छायन इति ॥ स ह स्माह बौधायनो वाचंयम एव शाखामाच्छेयाद्वाचंयम एवाहरेदेवं एवाहरित्यो''वं चैव खलु कुर्यादिति शालीकिर्ब्राह्मणेन च यथार्थमन्तर्हमस्येव संभाषेत नाब्राह्मणेनेति' ॥

शाखाया आच्छेदन इति ॥ स ह स्माह बौधायन इषे त्वेति शाखामाच्छिन्द्यादूर्जे त्वेत्यनुमृज्याद्वान्वीचेत वेत्य''न्वीचेतेवेति शालीकिः' ॥

---

१ एव is found only in Bu G (sec m) and U (sec m); cp. Rudradatta on Āp ix 4 3.

२ Thus G (sec m), अप्सुतानि Ben, अप्सुवैतानि Bu अप्येतानि H G (pr. m), अप्स्वेतानि C D, इह्वैवानैतानि Be, but cp the vivarana अप्स्वेवेत्यादि।

३ Thus corrected according to Rudradatta on Āp l c, •तिप्रवर्धेतेति B U G (pr. m), •तिप्रवर्धत इति G (sec m.), •भिप्रवर्धवेति H Ben, तिवर्धयवेति Be, •भिप्रवर्धवे C

10 वत्सापाकरण इति ॥ स ह स्माह बौधायनो वायव स्थेति पुंसः प्रथमापाकुर्यादुपायव स्थेति स्त्रियो[1] ऽथ यदन्यतरे स्यूनैव मन्त्रं परिजह्यात्संसृष्टेनैवेति शालीकिः[1] ॥ १ ॥

2. 1 शाखार्थे संचर इति। अग्रेणाहवनीयं संचारयेदिति बौधायनो[2] जघनेन गार्हपत्यमिति शालीकिरपि सर्वकल्पे शाखार्थे संचरः पथमां चान्यत्र प्रावर्गिकादित्य[2]भयोरेवापरेण प्रावर्गिकं सचारयेदित्यौपमन्यवः[1] ॥

प्रवसतो याजमान इति ॥ स ह स्माह बौधायनः सहयाजमानः खल्वयं यजमानः प्रवसति[1] स यत्र स्यात्तदेनं[1] मनसा[2] ध्यायेत्स यदि विसंस्थित आगच्छेत्कृतमनुमन्त्य कर्मान्तेन प्रकाशेदित्य[2]थो ह स्माह शालीकिर्यद्यस्य पुत्रो वान्तेवासी वालंकर्मीणः[3] स्यात्तं तत्र प्रेषयेत्स[4] यदि विसंस्थित आगच्छेत्कृतान्तादा प्रकाशेता[5] वा[5] द्रियेतोभौ[5] त्वेव यजमानभागं प्राश्नीयातामिति[1] ॥

---

१ Thus Bu Be G (sec m); नदेनं Ben U C G (pr. m.); नदेनं Sāyaṇa

२ Om Be G (sec m.), Sāyaṇa

३ ॰कर्मीय U Bu G (pr. m), ॰कर्मिणे Ben C D, ॰कर्मियो H; ॰कर्मंयो Be, ॰कर्मीणः G (sec m); ॰कर्मीय Sāyana, (cp. *infra* xx 20 and Pitṛmedhasutra I 1 (where the text is to be restored accordingly), II 5 (ed Raabe, Leiden 1911, pag 9 1)

४ Thus U only (sec m), प्रचयेत्स all the other MSS., cp. the vivaraṇa तमनुप्रापयेद्याजमानं कुर्विति।

५ Thus hesitatingly emended (tmesis?), नवाद्रि॰ Be C G (pr m); नैवाद्रि॰ Mr Tüb (MS A 1 317) and D, नैवाद्रि॰ Ben, नाद्रि॰ Bu H, Vivaraṇa न चाद्रियेत।

6 इध्माबर्हिषोरुपकल्पन इति ॥ सूत्रमाचार्ययोः॥ पराह्णे पितृभ्यो इत्वेध्माबर्हिः संनह्येदित्याश्मीगविः॥ श्वो भूते हविष्कृदन्त इत्यौपमन्यवः। ॥

7. असिदस्य प्रतितपन इति ॥ स ह स्माह बौधायनः प्रतितपेदेवासिदमेवमश्वपर्शुꣳ रक्षोऽपहननायेत्य॥थो ह स्माह शालीकिर्न तेजसि तेजः प्रतितपेदश्वपर्श्वां खल्वेते मन्त्रा दृष्टा भवन्ति। सो ऽश्वपर्शुमेव प्रतितपेन्नासिदं क्रूरापहननायेति। ॥

11. प्रक्रमेष्विति ॥ स ह स्माह बौधायन आहवनीयादेवाग्रे त्रीन्वा चतुरो वा प्राचः प्रक्रमान्प्रक्रम्याथ तां दिशमभिप्रव्रजेद्यत्र बर्हिर्वेत्स्यन्मन्येतेत्या॥हवनीयादेव यथार्थं गच्छेन्न तु दक्षिणथा द्वारेति शालीकिः। ॥

13 परिषवण इति ॥ स ह स्माह बौधायनस्त्रिरेव मन्त्रं ब्रूयात्त्रिः कर्मावर्तयेदेवं यूपावटस्य परिलेखन एवꣳ सोमक्रयण्यै पद एवमौदुम्बर्या अवट एवमुपरवेष्विति॥ सकृदेव मन्त्रं ब्रूयात्त्रिः कर्मावर्तयेदिति[1] शालीकिः। ॥

15 आच्छेदनेष्विति ॥ सूत्रं बौधायनस्य॥ प्रत्यगाशीः खल्वेष मन्त्रो दृष्टो भवति। मन्त्रप्रत्यभिमर्शनमेवैतस्यादिति शालीकिः। ॥

18. प्रस्तरस्य संनहन इति ॥ स ह स्माह बौधायनो ऽभ्यर्धा-चैनꣳ संनह्येदन्यत्र चैतस्मादयुग्मायुग्मं निधनानि कुर्यादित्य॥थो

१ त्रावर्तयेद् om G L D C.

ह स्माह शालीकिः प्रस्तरस्य खलु मन्त्रप्रतिलाभास्त्वै बर्हिर्मन्त्रं लभते न चैनमभ्यधात्संनह्येदेतच्चैवायुष्मत्तमꣳ स्यादिति' ॥

3.2. शुल्बस्य करण इति ॥ अधिकरणं चतुर्थꣳ स्यादिति बौधायनो" ऽधिकरणमेव तृतीयमिति शालीकिः' ॥

3.4. बर्हिषः संभरण इति ॥ स ह स्माह बौधायनो यान्यन्यानि यजुषा छिन्नानि तानि पूर्वाणि मन्त्रेण संभृत्याथोपरिष्टाद्यजुषं मन्त्रेणैव संभरेदित्यथो ह स्माह शालीकिर्यान्यन्यानि यजुषाच्छिन्नानि तानि पूर्वाणि तूष्णीꣳ संभृत्याथोपरिष्टाद्यजुषं मन्त्रेणैव[1] संभरेदित्यथो ह स्माहौपमन्यवो य एवादिर्लवने ससंभरणे[2] यथायजुषमेवापि मन्त्रेण संभृत्य तूष्णीमितराणि संभृत्य निपरिकृष्य ग्रन्थिं कुर्यादिति' ॥ २ ॥

3.5. ग्रन्थिकरण इति ॥ सूत्रं बौधायनस्य" समायच्छन्नेवैतं[3] मन्त्रं जपेदिति शालीकिः' ॥

3.6. पश्चात्प्राञ्चमुपगूहतीति ॥ सूत्रं बौधायनस्य" पुरस्तात्प्रत्यञ्चमिति शालीकिः' ॥

3.8. बर्हिषो निधान इति ॥ स ह स्माह बौधायनः स्पयं वा शकलं वान्तर्वेदि निधाय तस्मिन्मन्त्रेण प्रतिष्ठाप्य ततो यथा-

---

1 संवेदेव Be Bu G (sec. m.) U (sec. m.), संवेव the other MSS.

2 Thus Ben G C I (pr. m.) Sāyana, संभरणे H Be, ससंभरणेन Bu C (sec. m.). After this word U Bu ins. संभरेत्।

3 Thus Be, °च्छेवैवं H D C Ben G (pr. m.) U (pr. m.), °च्छेव Bu G (sec. m.) U (sec. m.) Sāyaṇa

सुष्ठु निदध्यादिति " यत्रैव निधास्यन्स्यात्तन्मन्त्रेणैव[१] निदध्यादिति शालीकिः ' ॥

12 परिधीनां करण इति ॥ स ह स्माह बौधायन उरःसंमितो मध्यमः स्याद्येतरौ बाहुमात्रौ स्यातामिति " सर्व एव बाहुमात्राः स्युरिति शालीकिः ' ॥

12 इध्मस्य करण इति ॥ अनुयाजेभ्य इध्मं कुर्यादिति बौधायनो " ऽपरिमितमिति शालीकिः ' ॥

14 वेदस्य करण इति ॥ वत्सज्ञुं कुर्यादिति बौधायनो " *मुतकार्यमिति शालीकिस्त्रि इत्यमित्यौपमन्यव* " ऊर्ध्वाग्रमित्यौपमन्यवीपुत्रः ' ॥

10 पितृयज्ञबर्हिषीति ॥ समूलमेतद्बर्हिर्भवतीति बौधायनः पितृयज्ञसामान्यादिति " महापितृयज्ञ एवैतद्दृष्टं भवत्यमूलमेवैतद्बर्हिः स्यादिति शालीकिः ' ॥

इष्टिसंनिपात इति ॥ स ह स्माह बौधायनो यः[१] काश्चेष्टयः[२] समाने ऽहनि संनिपतेयुस्तन्त्राय तन्त्राश्च[३] पाशां[३] बर्हिर्लावो गच्छेत्सूनं वासादयेत्तन्त्रेतन्त्रे[४] पाशां[५] समुपेत्य

---

१ Thus Be Bu G (sec m ) Sāyana , तत्र instead of सत् H Ben D C G (pr m ) U

२ Thus Bu U G (sec m ), याचाश्चेष्टयः Ben D G (pr m ), याश्चेष्टयः Be, काश्चाश्चेष्टयः C

३ Thus G , तन्त्रायतन्त्रायत्रासा Bu सन्त्रायतन्त्रायनामां U C D; सन्त्रायतंत्रायतासा Be, संतायतासा Ben H

४ पाशाश्चयेत् Bu G (pr. m ) U (sec m )

५ Thus Bu Ben G U , आसां H तन्त्रेयासां C D तंत्रेयाधा Be

तन्त्रापवर्गे व्रतं विसृजेतेत्यौ॑चो[१] ह स्माह शालीकिर्याः[२] काश्येयः[३] समाने ऽहनि संनिपतेयुः सकृदेवासाꣳ सर्वासां बर्हिर्लावो गच्छेत्सूनं वाभाद्येदादितस्तासां[३] सतमुपेत्य सर्वासां पारे[४] सतं विसृजेतेति[१] ॥

१ 17. पर्णत्सफलणां[५] निवपन इति ॥ सूचꣳ शालीकेरौ॑चो ह स्माह बौधायनस्तृतीयमभ्यगार उदपेत्तृतीयमन्तर्वेदि निवपेत्तृतीयेन वत्सानां धूननं[६] कुर्यादेवमिव हि पशूनां नेदीयान्भवतीति[१] ॥

18 पौर्णमास्यासुपवेषकरण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः[१] ॥

19 दोहनपवित्रस्य करण इति ॥ स ह स्माह बौधायनो मूले मूलानि बद्ध्वा द्विगुणाꣳ रज्जुꣳ संप्रसार्याथ[७] नियच्छेद्या-देवमस्यायमवैरभिसंपन्नं भवतीत्यौ॑चो ह स्माह शालीकिर्मूले

१ Thus C D H Ben G (pr. m.) U (pr. m.), विसृजेदिति the other MSS

२ Thus Bu U G (sec. m.) शाखायोक्याः Ben D G (pr. m.) शाखेयः Be, शाखायोक्या C

३ See p. 9, n. 4

४ परि H D C Ben

५ Thus Bu D. °त्सफलकाणां or °त्सफलकाणां the other MSS and Sāyana.

६ Thus G (sec. m.) U (sec. m.) and the prayoga of Venkateśvara, धूमं all the other MSS

७ °र्यार्थ ms. G (sec. m.), instead of °र्यै U reads the first time °र्ये ।

मूलानि बद्ध्वा[१] द्विगुणाꣳ रज्जुꣳ संप्रसार्य मूले परिवृत्य[२] त्रिगुणाꣳ रज्जुꣳ संप्रसार्याग्रे[३] निग्रथ्नीयादेवमस्याग्रमग्रैरभिसंपन्नं भवतीति' ॥ ३ ॥

अग्निहोत्रोच्छेषणस्य करण इति ॥ स ह स्माह बौधायनो यद्यस्याज्येन[४] वौषधेन वा प्रक्रान्तꣳ स्यात्ययसैव ताꣳ रात्रिं जुहुयात्पयस एवाग्निहोत्रोच्छेषणं कुर्यादित्यथो'' ह स्माह शालीकिर्नासमाप्ते काम आवर्तयेद्यद्यस्याज्येन[५] वौषधेन वा प्रक्रान्तꣳ स्यात्तस्य हुत्वा तस्यैवाग्निहोत्रोच्छेषणं कुर्यादिति' ॥

I. 5 सांनाय्यपात्राणां प्रोक्षण इति ॥ तूष्णीꣳ संस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः'' कमण्डलुगताभिरिति शालीकिः' ॥

I. 6 अथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचो ऽङ्गारान्निरूहतीति ॥ सूत्रꣳ शालीकेरथो'' ह स्माह बौधायनस्तूष्णीमङ्गारान्निरूह्येत्सर्व एवैषो ऽधिश्रयणमन्त्रः स्यादिति' ॥

10. दोहनपवित्रस्याधान इति ॥ मन्त्रेण हृत्वा मन्त्रेण स्थाल्यामादध्यादिति बौधायनस्तूष्णीं'' हृत्वा मन्त्रेण स्थाल्यामादध्यादिति शालीकिरर्धेन'' हृत्वार्धेन स्थाल्यामादध्यादित्यौपमन्यवः' ॥

---

१ हृत्वा U C

२ Thus Bu G, परिवृत्य Be In the other MSS this passage is omitted, also by Sāyana

३ शाखि ins G (sec m)

४ Thus Bu G I' Sāyana, यदा (instead of यदि) H Be C Ben

५ मस्याज्येन H Bc, instead of यद्यस्या॰ ।

11 धेनूनामनुमन्त्रण इति ॥ स ह स्माह बौधायन एकैकामेवासामनुमन्त्रयेताथासामेकैकां दोहयेदित्यथो ह स्माह शालीकिः सकृदेवैनाः सर्वा अनुमन्त्रयेताथासामेकैकां दोहयेदित्यथो ह स्माहौपमन्यवः सकृदेवैनाः सर्वा अनुमन्त्रयेत सकृदेना[१] दोहयेदेवं चैव स्तोकान्परिनिमृजेदित्येकैकामेवासाꣳ सर्वेणसर्वेण[२] कर्मणा परिनिमृजेदित्यौपमन्यवीपुत्रः ॥

4. 15 स्तोकानामनुमन्त्रण इति ॥ सूत्रꣳ शालीकेराख्यातमौपमन्यवस्याथो ह स्माह बौधायन अन्ततश्चैव स्तोकाननुमन्त्रयेतान्वेव हि स्तोकानामन्तो[३] भवतीति ॥

1 5 5 उत्तरामां दोहन इति ॥ विसृष्टवागनन्वारभ्योत्तरां दोहयेदिति बौधायन आनीयमान[४] एवान्वारभेत वाचं च यच्छेदिति कात्यः ॥

1b दुग्धं लभमानस्येति ॥ वत्सापाकरणप्रभृतीन्मन्त्रान्ध्यायेदिति बौधायन आसेचनप्रभृतीनिति शालीकिः ॥

1 5 8 आतञ्चन इति ॥ चतुर्थे स्रुव आनयेद्यावता मूर्च्छयिष्यन्मन्येतेति बौधायनस्तृतीये स्रुव आनयेद्यावता मूर्च्छयिष्यन्मन्येतेति शालीकिः ॥

१ Thus Be G Sayana, सकृद्देवैना H Ben D C, सकृदेवैना U

२ Thus Be, सर्वणसर्व Bu सर्वेण (once) D C H Ben G U and Sāyaṇa

३ Thus C H D G (sec. m.) Ben Be, स्तोकानामन्तो Bu G (pr. m.) स्तोकानान्तो U स्तोकानामनुमन्तो Sayana

४ Thus H Ben Be D C Sāyaṇa (cf. आनिय्यमाने Sāy), ०मान्ना Bu D (sec. m.) U (sec. m.).

10. अग्निहोत्रोच्छेषणमभ्यातनक्तीति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनोऽग्निहोत्रोच्छेषणमानीय हविरातञ्चनमानयेदेवमस्योभयमभ्यातक्तं[1] भवतीति ॥

11. उदन्वतापिदधातीति ॥ उदन्वतापिधाय सर्वां रात्रिं परिशाययेदिति[2] बौधायन उदन्वतापिधाय सिक्ता अपोऽपिदध्यादिति शालीकिः ॥

13. अग्नीनां परिस्तरण इति ॥ सूत्रमाचार्ययोर्वो ह स्माहौपमन्यव उपवसथ एवाग्नीन्यथोत्पन्नं परिस्तृणीयादेवं हि ब्राह्मणं भवत्युपास्मिन्क्षो[3] यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणातीति ॥

अग्नानाग्न इति ॥ आरण्यं चापस्याश्नीयादिति बौधायनोऽप एवेति शालीकिर्नारण्यं नापस्यनेत्यौपमन्यवः[4] ॥

॥ ४ ॥ प्रथमः ॥

17. पाणिसंमर्शन इति ॥ उत्तरेणाहवनीयं तिष्ठन्पाणी संमृशेदिति बौधायन उत्तरेण गार्हपत्यमिति शालीकिः ॥

---

१ Corrected, ॰भ्यातनक्त all the MSS (also Sāyaṇa) exc. Be which has ॰भ्यानद्धं।

२ ॰शापयेदिति Ben H

३ MSS (exc B and Sāyana) insert भूते, which is effaced in D, cp TS. I 6 7 3

४ Thus Ben G U C नापयनेत्य॰ BU, नाथापयनेत्य॰ Bc, नाप्या पयेत्य॰ Bu.

5 10 अग्नीनां परिस्तरण इति ॥ सूत्रं शालीकेर्''व्याख्यातमौपमन्यवस्यावो ह स्माह बौधायनो गार्हपत्यमेवाग्रे पुरस्तात्परिस्तृणीयादथ दक्षिणतो ऽथ पश्चादथोत्तरत' एवमेवान्वाहार्यपचनं परिस्तृणीयादेवमाहवनीयमिति' ॥

6 1. पात्राणां सादन इति ॥ सूत्रं शालीकेर्''वो ह स्माह बौधायन उत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु पात्राणि सादयेदित्यु''त्तरतो ऽन्यगारस्य पात्राणि सादयेत्तेषां यथार्थमाददीतेति राथीतरः' ॥

6 2. ब्रह्मण उपवेशन इति ॥ अवेत्य दक्षिणेनाहवनीयमुपविशेदिति बौधायनो'' ऽनवेत्यैव दक्षिणेनाहवनीयमिति शालीकिः' ॥

यजमानस्योपवेशन इति ॥ अवेत्य दक्षिणत उपविशेदिति बौधायनो'' ऽनवेत्यैव दक्षिणत उपविशेदिति शालीकिः' ॥

6 3 इध्मार्थे स्तरण इति ॥ सूत्रं बौधायनस्य'' सोम एव इध्माद् स्तृणीयादिति शालीकिः' ॥

6 11 पवित्रयोः करण इति ॥ सूत्रं बौधायनस्य'' इध्माद्यास्तृणामामित्यौपमन्यवो[१]'' ये[२] ऽन्ये[२] ऽनुपयुक्ताः कुशाः स्युस्तेषामिति शालीकिः' ॥

---

१ Thus Be, इध्माद्यास्तृणा॰ G (pr. m) Bn H; इध्मादद्यामा॰ U G (sec. m), Ben is defective C corrupt, इध्मादद्यामा॰ Sâyaṇa.

२ Thus G (sec. m.) and Sâyaṇa, ऐषाम्ये the other MSS.

3. स वाचंयमो भवति प्रणीतासु प्रणीयमानास्त्रा हविष्कृत इति ॥ अन्तर्हमन्नेतेषु संपातेषु संभाषेतेति बौधायनो" विसृष्टवागिति शालीकिः ' ॥

11 होतृणो व्याख्यान इति ॥ सप्रहानृतेस्त्राहाकारानित्येकम्तेयद्दानन्तःस्वाहाकारानित्येकं' सर्वानित्येकं' पूर्वः कल्पो बौधायनस्योत्तरावुभौ शालीकेरिति ' ॥

11. दशहोतुर्व्याख्यान इति ॥ प्रणीताः प्रणीय प्रत्यङ् द्रवन्दशहोतारं व्याचक्षीतेत्याचार्यैर्मुष्टिमेव गृहीत्वेत्यौपमन्यवः ' ॥

12 निर्वपण इति ॥ सूत्रं शालीकेर्'चो ह स्माह बौधायनः शकटादेव निर्वपेद्धुरौ व्यभिमृश्याक्षपालिं क्रामेद्विष्णुस्त्वा क्रमतामिति ' पुरोडाशीयान्प्रेक्ष्याभिमृशेदच्छन्नां पश्येति ' त्रियजुषा सक्तूष्णीं चतुरवत्तिनां ' त्रियजुषा द्विस्तूष्णीं पञ्चावत्तिनांं" सर्वानेव यजुषेति कात्यः ' ॥ ५ ॥

*पञ्चावत्तस्य प्रक्रमण इति ॥ निर्वपणात्पञ्चावत्तं प्रक्रामेदिति* बौधायनो" ऽवदानत इति शालीकिः" प्रदानत इत्यौपमन्यवश्चौतुप्प्राश्यादित्यौपमन्यवीपुत्रः ' ॥

7. अतिशिष्टानामावपन इति ॥ तान्कोष्ठे[१] वा पल्वे वावपेदिति बौधायनो" ऽग्नावेनानावपेयुरिति शालीकिः ' ॥

3 आज्यस्य निर्वपण इति ॥ सूत्रं शालीकेर्'चो ह स्माह

१ कोष्ठे or कोष्टे all (also the Vivaraṇa and Sāyaṇa), only Bu कोष्ठे (the Gṛhyasūtra II. 15 has कोष्ठे वा पल्वे वा ) ।

बौधायन औषधस्थान्तं गत्वाथं निर्वपेदेवमस्य सह हविर्भिः प्रोक्षणं लभत इति[1] ॥

3 12 परिदान इति ॥ यथानिरुप्तं परिददीतेति बौधायनो" ऽथो ह स्माह शालीकिरग्ने हव्यꣳ रक्षस्वेत्येव ब्रूयाद्विष्णो हव्यꣳ रक्षस्वेति पयो[1] विष्णुर्हि पयसो गोप्ता भवत्यग्निरौषधस्येति[1] ॥

8 13 प्रोक्षणीनामुत्पवन इति ॥ सूत्रं बौधायनस्य" निगदेनैतास्त्वं चिरुत्पुनुयादिति[1] शालीकिः[1] ॥

8 19 पुरोडाशीयानां प्रोक्षण इति ॥ यथापाशः प्रोक्षेदिति बौधायनो" देवताः समनुद्रुत्य चिरेवेति शालीकिः[1] ॥

I 9 2 पात्राणां प्रोक्षण इति ॥ सूचꣳ शालीकेर्"थो ह स्माह बौधायनः शुन्धध्वं दैव्याय कर्मणे पात्राणि[2] देवयज्याया इति[1] ॥

1 9.4 अतिशिष्टानां परिशायन इति ॥ एता एव परिशयोरन्निति[3] बौधायनः" मिन्नेता अप उपरिष्टादन्याः सꣳस्कुर्वीतेति शालीकिः[1] ॥

ib. कृष्णाजिनस्यावधवन[4] इति ॥ उपनिष्क्रम्याग्न्यगारादुत्तरे

1 Thus, as often in the Dvaidha, H Be and Sāyaṇa, पुनीया॰ the other MSS

2 Om. Be

3 Thus Bu Sāyaṇa ॰शायीरन्निति U ॰शायशीरन्निति C H Be Ben G ॰शायशीरन्निति D

4 Thus (and cp. infra XXIII. 5 and 10) G (sec. m.) Be, and the vivaraṇa; ॰धून Ben H G (pr. m.) L D C and Sāyaṇa

ऽपरे ऽवान्तरदेशे कृष्णाजिनमवधुनुयादिति[१] बौधायनो " ऽन्तरेणैतां दिशमिति शालीकिः ' ॥

कृष्णाजिनस्यास्तरण इति ॥ स ह स्माह बौधायनो ऽविसृजन्नेतत्कर्म कुर्यात्कृष्णाजिनावधवनादास्तरणादेवमुलूखलाध्यूहनादा[२] पुरोडाशीयानामावपनादेवं मुसलस्यावधानादा शूर्पस्योपोहनादेवमधिवपनादा प्रस्कन्दनादेवं कपालोपधानादा योगाध्यूहाभ्यामेवं[३] प्रस्तर आ स्रुचाꣳ सादनादेवमभ्यादानादा खननादेवमौदुम्बर्याभिहोमादेवं यूप आ परिव्ययणादिति[४] " यथोपपादमेवैतानि कर्माणि कुर्यादिति शालीकिः ' ॥ ६ ॥

पुरोडाशीयानामावपन इति ॥ सूत्रं बौधायनस्य " पञ्च मुष्टीन्पञ्चावत्तिनामावपेदिति शालीकिः ' ॥

दृषदुपले दृषारवेणोच्चैः समाहन्तीति ॥ सूत्रं बौधायनस्य " शम्ययैवेति शालीकिः ' ॥

शूर्पस्योपोहन इति ॥ सूत्रꣳ शालीकेर्"यो ह स्माह बौधायनस्तूष्णीꣳ शूर्पमुपोहेत्समस्तेनैवाग्निमन्त्रेण पुरोडाशीयानुद्वपेद्वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्विति । ॥

१ •धूनुया• Bu and Sāyaṇa

२ Thus (•धवनाद•) Be G (sec m), •ध्वननाद• Ben, •धवनाद• Bu; •धूननाद• the other MSS and Sāyaṇa

३ Thus C G (sec. m), योगाद्दुह्याभ्या• Bu, योगान्यूहाभ्या• Sāyaṇa, योगाध्यूहाभ्या• all the other MSS, but cp. *infra*, p 19, l. 16

४ Thus G D C Be, परिव्ययनादि• Bu, परिध्ययणादि• Sāyaṇa, परिव्यायादि• U H Ben

15 अथोदङ् पर्यावृत्य परापुनातीति ॥ सूत्रं बौधायनस्य यां कां चिद्दिशमभि पर्यावृत्य परापुनातीति शालीकिः ॥

17. तुषाणां निरसन इति ॥ सूत्रꣳ शालीकेर्यो ह स्माह बौधायनो ऽत एव यावन्मात्रानुपवृत्य कृष्णाजिनस्य ग्रीवात उपवपेद्रक्षसां भागो ऽसीत्यथोदकमुपस्पृशेदिति ॥

0. 8. कृष्णाजिनस्य पुनराहरण इति ॥ सूत्रमाचार्ययोः प्राचीनग्रीवमुत्तरलोमेत्यौपमन्यवः ॥

17 पेषण इति ॥ सूत्रꣳ शालीकेर्यो ह स्माह बौधायनः प्राणाय त्वेति प्राचीं प्रोहेदपानाय त्वेति प्रतीचीं व्यानाय त्वेति तिरश्चीं कर्षेदथ प्राचीं प्रोहेद्दीर्घामनु प्रसितिमायुषे धामिति कृष्णाजिने पिष्टानि प्रस्कन्दयेद्देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति ॥ ७ ॥ द्वितीयः ॥

11 7 नैकचरौ दृष्टेरादानं विद्यते न यजुष्विति शालीकिर्यो ह स्माह बौधायन[1] आदित एव दृष्टिमाददीत दृष्टिरसि ब्रह्म यच्छेति गार्हपत्यमभिमन्त्रयेतापाग्ने ऽग्निमामादं जहीति निष्क्रव्यादꣳ सेधेति दक्षिणाङ्गारं निरस्येद्यान्या वकल्पयेदा[2] देवयजं वहेति तेषु कपालमधिश्रयेद्ध्रुवासि पृथिवीं दृꣳहायुर्दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय

---

[1] Thus Bu C G (sec. m.) U (sec. m.) and Sāyana; all the other MSS औपमन्यव

[2] ॰यान्यां कल्पयेदा G (sec. m.) D C, all the other MSS. have the plural.

पर्यूहेत्यथैनां प्रदक्षिणमङ्गारैः परिचिनुयान्निर्दग्धꣳ रक्षो निर्दग्धा अरातय इति । स एवमेव सर्वांश्चरूञ्छालीकिरधिश्रयेदिति ॥

चरुमुखेष्विति ॥ स ह स्माह बौधायन आदित एव धृष्टिमाददीत । मुख्यादेव प्रचान्साधयेदिति । नो ह स्माह शालीकिः कपालसंयोजने खलु धृष्टेरादानं भवति । स कपालान्येवोपधास्यन्धृष्टिमाददीत । पुरोडाशादेव प्रचान्साधयेदिति ॥

कपालानामुपधान इति ॥ सूत्रमाचार्ययोर्नो ह स्मालौपमन्यवो यथाम्नायं खल्वस्यैवं कपालान्युपहितानि भवन्ति । य एवैषोऽङ्गाराधिवर्ततो[१] मन्त्रस्तं प्रथमं कपालोपधानानां[२] कुर्यादथ तूष्णीमङ्गारमधिवर्तयेदिति ।

एककपाले[३] द्विकपाल इति ॥ स ह स्माह बौधायनो यदि चैककपालो यदि च द्विकपालः सर्वैरेनं कपालमन्त्रैरुपदध्यादिति । नो ह स्माह शालीकिर्यथाधिकरणमेव कपालान्युपदध्यात्तु योगान्यूहौ गमयेत्तपनमन्त्रं चाच ब्रूयाद्भृगूणामङ्गिरसां तपसा तप्यस्व तप्येथां तप्यध्वमिति ॥

---

१ Thus C D Ben G (sec m ) and Sāyaṇa, ०वर्तेमे U, वर्तन Be H G (pr m )

२ Thus C D H Ben Be G (pr m ) ०धान Bu U G (sec. m.) and Sāyaṇa

३ Thus the vivaraṇa only, ०कपालो the MSS

12.3. कपालानां योग इति ॥ सूत्रमाचार्ययोर्''चो ह स्माहौपमन्यव एतैरेवास्यैतानि मन्त्रैर्युक्तानि यैरुपहितानि भवन्त्यथेतरो विमोचनमन्त्र एव स्यादिति ' ॥

12.6. मदन्तीनामधिश्रयण इति ॥ तिरः पवित्रमप आनीयाधिश्रयेदिति बौधायनो '' यथोपपादमिति शालीकिः ' ॥

.11. संयवन[1] इति ॥ सूत्रऽ शालीकेर्''चो ह स्माह बौधायनः प्रणीताभ्यः स्रुवेणोपहत्याप आनयेदेवं[2] मदन्तीभ्यस्ता उभयीरानीयमानाः प्रतिमन्त्रयेत समापो अद्भिरग्मतेति ' ॥

.17. अभिमर्श इति ॥ स ह स्माह बौधायनो ऽभिमृशेदेवैकहविरेवं[3] नानाबीजानीत्य''चो ह स्माह शालीकिः सऽसर्गात्खलु अभिमर्शो जायते ' नासऽसृज्यमानानि हवीऽष्यभिमृशेदेकहविः[4] ' को[4] हि नानाबीजानां अभिमर्श इति ' ॥

3.3. आज्यस्य निर्वपण इति ॥ सूत्रऽ शालीकेर्''स्यात्[5]

[1] Thus only G (sec. m ), all the other MSS (and the vivaraṇa and Sāyaṇa) संवपन, but cp Sāyaṇa's remark संवपनमुदकपिष्टयोः संयोजनं । तथा च सूत्रं (cp. I. 12 16) प्रणीताभिः संयौति ।

[2] Thus Bu Be C D G (sec m ). आनयेद एव Ben, आनयन एवं H G (pr. m ) U and Sāyaṇa

[3] Thus H Bo Ben and Sāyaṇa. ॰देवैकं हवि॰ Bu C D U G (एकहविः एकद्रव्यकं हविः Sāyaṇa).

[4] Thus Bu, ॰मेकहविः को H Ben G U, ॰मेकहविष्को Bo; ॰मेकंहविष्के C ॰मेकहविष्के D, ॰मेकहव्यस्के Sāyaṇa

[5] cp. xx 6 15 19

बौधायनस्त्वेवाचो ह स्माहौपमन्यवः सर्वाण्येव हवींषि परिनिष्ठाप्याज्यं निर्वपेदिति ॥

15. आप्यनिनयन[१] इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनो ऽग्रेणातिहायेति[२] शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः ॥ ८ ॥

6. स्फ्यस्य सङ्ग्रान[३] इति ॥ सूत्रङ् शालीकेर्वचो ह स्माह बौधायनो य एष[४] स्फ्यस्योद्सनो[५] मन्त्रस्तं प्रथमङ् सङ्ग्रनानां[६] कुर्यादथ तूष्णीङ् स्फ्यमुदस्येदिति ॥

4. वेद्यै परिग्रहण इति ॥ सूत्रङ् शालीकेर्वचो ह स्माह बौधायनः श्रोणिं[७] प्रथमां परिगृह्णीयादथ दक्षिणमंसमथोत्तरमिति पुरस्तादेवैनां प्रदक्षिणं परिगृह्णीयादित्यौपमन्यवः ॥

---

१ Thus (and cp xxi 4) Be and the vivarana, °माप्येभ्यो नि° Ben U H G, °माप्यस्यनि° D C and Sāyana.

२ Thus Be (and cp xx 20, xxi 4), °ग्रेणातिहायनेति H Ben C D G (pr. m) and Sāyana, °ग्रेणातिहाय निनयेदिति G (sec m.) U (sec. m.); °ग्रेणाहवनीयं निनयेदिति Bn

३ Thus (*nomen actionis* to संग्रति) Bu only, संग्रन C D G (sec. m.) Ben Be and Sāyana, सग्रान U (sec. m) and the vivarana, संस्पर्शन G (pr m.), स्पर्शं H

४ एष Ben Be C D G (sec. m) U (pr m.), एव H Bu G (pr. m) U (sec. m.) and Sāyana.

५ Thus Be Ben C D, °दसनै G Bu and Sāyana, °दसन H

६ Thus Sāyana, संग्रनाना Bu, संग्रानं G (sec m), U (sec. m.); संग्रानानां Ben, संग्रानां C D, संस्पर्शना H U (pr m.) G (pr. m.) The reading of Be is uncertain Read सङ्ग्रानानां ?

७ श्रोणीं some of the MSS.

15 योयुपन इति ॥ सूत्रं बौधायनस्य ॥ चतुर्थेन योयुपित्वा पञ्चमेनोद्गृह्णीयादिति शालीकिः । ॥

1. प्रोक्षणीनामासादन इति ॥ स्फ्यस्य वर्त्मन्नुपनिनीयासादये-दिति[1] बौधायनो ॥ ऽनुपनिनीयैवेति शालीकिः । ॥

5. इध्माबर्हिषोरुपसादन इति ॥ सूत्रं बौधायनस्यौत्तरमिध्म-मिति शालीकिः । ॥ ६ ॥ तृतीयः ॥

3. 7. वेदपरिवासनेष्विति ॥ पञ्चधा विभज्य स्रुचः संमृजेदिति[2] बौधायनः ॥ समस्तैरेवाग्निरभ्याकारमिति शालीकिः । ॥

3. 19. प्राशित्रहरणस्य संमार्जन इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीꣳ संमृजेदिति[2] शालीकिर्न संमृजेदित्यौपमन्यवः[2] । ॥

7. 1. स्रुक्संमार्जनानामनुप्रहरण इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनोऽद्भिरभ्युक्ष्यासंचर उदस्येदुत्करे वैवमिध्म-संनहनानीति । ॥

17 5. पत्नीनाꣳ संनहन इति ॥ स ह स्माह बौधायन एकैका-मासाꣳ[3] संनह्येदेकैकां गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षये-दित्यथो ह स्माह शालीकिः सकृदेवैनाः सर्वाः संनह्येदेकैकां गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदित्यथो ह स्माहौपमन्यवः

---

१ Thus Ba G (sec m.) and Sāyaṇa, वर्त्मन्नुप॰ H C Ben U D G (pr. m.)

२ संवर्चयेदिति H Ben (thrice) U, D C (the first time), C (pr. m.), the other MSS, संमृजेदिति।

३ एकैकामेवासां Ba G (sec. m.) U (sec m.).

सहदेवेनाः सर्वाः संनह्येत्सहद्वादेपत्यमोचयेदेकैकामाज्यमवेचयेदित्येकैकामेवाषाढ सर्वेणैव कर्मणा परिनिस्तिष्ठेदित्यौपमन्यवीपुत्रः ॥

b. ग्रन्थिकरण इति ॥ अवाचीनपाशमूर्ध्वनिर्मोचनमित्याचार्ययोरूर्ध्वपाशमवाचीननिर्मोचनमिति दीर्घवाह्य एवमिव हि प्रजाः प्रजायन्त इति ॥

पत्न्यामविद्यमानायामिति ॥ स ह स्माह बौधायनो यजमानायतन आसीनो यजमान एवैतान्मन्त्रान्निगदेदित्यथो ह स्माह शालीकिः पत्नीसंयोजकाः खल्वेते मन्त्रा दृष्टा भवन्ति तस्यामविद्यमानायां नैवैनानाद्रियेतेति ॥

4 अथैनामाज्यमवेक्षयतीति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनः पत्न्या तदवेक्षितमुपयच्छेत[1] तेजो ऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाहवनीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनदुल्कोत्तरेण प्रोक्षणीः सादयित्वावेक्षितोत्पुनुयादाज्यवतीभ्यां[2] प्रोक्षणीरिति ॥

10 आज्यस्यावेक्षण इति ॥ सूत्रं बौधायनस्य सर्वैरेवावेक्षितमाज्यमुत्पुनुयादिति[3] शालीकिः ॥

---

१ Thus all the MSS exc Be 115 and U sec. m, which read •यच्छेत (•यच्छेत् Sayana), but infra xxiv. 32 •यच्छेत।

२ •वेक्षिता• only Sāyana MSS •वेक्षिमो•, •वेक्षेतो• or •वेक्षतो। All the MSS and Sāyaṇa and the vīv here and I 17 पुनुया•, U only both times (sec m) and C once •पुनीया• ।

३ Thus Bu Be G (pr m) U C D, •ाज्यमवेक्षितमु• Ben H G (sec. m) and Sāyana.

0.1 आज्यग्रहाणां[1] ग्रहण इति ॥ स ह स्माह बौधायनो ऽध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च याजमानैर्यजमानो ऽनुमन्त्रयेतेत्यथो[2] ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च न याजमानैर्यजमानो ऽनुमन्त्रयेतेत्यथो ह स्माहौपमन्यवो यथापि[3] पौरोडाशिका मन्त्रा नाभिनिवर्तन्त[4] एवमेवापि याजमाना मन्त्रा नाभिनिवर्तेरन्निति[5] ॥

13 इध्माबर्हिषः प्रोक्षण इति ॥ त्रिस्त्रिरेकैकं प्रोक्षेदिति बौधायनः ॥ सकृत्सकृदिति शालीकिः ॥ १० ॥

16 बर्हिषः प्रोक्षण इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनस्तिष्ठन्दिवे त्वेत्यग्राणि प्रोक्षेदथो ऽन्तरिक्षाय त्वेति मध्यान्युपविश्य पृथिव्यै त्वेति मूलानि सह स्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्ष्यातिशिष्टाः प्रोक्षणीर्निनयेद्दक्षिणायै श्रोणेरोत्तरायै श्रोणेः स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छतेति ॥

---

[1] Thus Be only, आज्यग्रहाणो Bu, आज्यानां the other MSS, but cp xx 23

[2] Most of the MSS. ॰यथौते॰।

[3] यथापि Be G (sec m.), यथाविधि Sâyana, यथा the other MSS.

[4] ॰भिनिवर्तन्ते U Bu G (sec. m.) Sâyana, the other MSS. without नि।

[5] Thus C D G (pr m.) U (pr m) Be Ben H, ॰वर्तेत इति Bu G (sec m) U (sec. m) and Sâyana.

सुच उदूहन इति ॥ अग्रेणात्मानमुदीचीमुदूहेदिति बौधायनो जघनेनात्मानमुदीचीमुदूहेदिति शालीकिः ॥

अन्तरे पवित्रे अपिसृजति यजमाने प्राणापानौ दधामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

तं यजमानाय वा ब्रह्मणे वा प्रयच्छतीति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

शुल्वस्यायतन[1] इति ॥ सूत्रं बौधायनस्य शुल्वं विस्रस्य दक्षिणे वेद्यन्ते स्तृणीयादिति शालीकिः[2] ॥

वेद्यै स्तरण इति ॥ सूत्रं बौधायनस्यात एवैनां प्राचीं धातुश स्तृणीयादिति शालीकिः ॥

3 परिधीनां परिधान इति ॥ स ह स्माह बौधायनो ऽध्यस्येद्दक्षिणमुपोहेदुत्तरमित्यनीकसंस्पृष्टानेवैनान्परिदध्यादिति शालीकिः ॥

2 अथ सूर्यंण पुरस्तात्परिदधातीति ॥ सूत्रं बौधायनस्याहवनीयमेवैनेन यजुषोपतिष्ठेतेति शालीकिः ॥

4 ऊर्ध्वे समिधावादधातीति । सूत्रं बौधायनस्योर्ध्वे एवैने अभ्याधायानतिपातयेदिति[3] शालीकिः ॥

---

१ ०यतन Bu Be C

२ शालीकेः Be Ben H G (sec m )

३ Thus H Ben C D G (pr m ) and Sāyana, ०यानुनिपातये० Bu U G (sec m ), ०यानुपातये० Be, the verb seems to be a denominative to अनतिपात, cf Sāyana अतिपात आहवनीयादतिक्रम्य पातः । स न कार्यः । अनतिपातयेत् अनतिक्रम्य पातयेत् ।

4

16. विधृत्योः करण इति ॥ सुषमाचार्ययोरन्यो ह स्माह दक्षिणाकारो राथीतर[1] उभे एवैते वेदिं[2] व्यतिषज्येयातामिति मध्यमाद्धातोरनन्तर्गर्भे[3] स्यातामित्यौपमन्यवः ॥ ११ ॥

दोहनपवित्रस्यासादन इति ॥ विस्रस्य प्रस्तर आसादयेदिति बौधायनो ऽविस्रस्यैवेति शालीकिः ॥

18. स्रुचाꣳ सादन इति ॥ स ह स्माह बौधायन ईषत्प्रत्यवहृतामिवोपभृतꣳ[4] सादयेद्विधृतीभ्यां चैनामवगृह्णीयादित्यन्यो ह स्माह शालीकिरनुपूर्वा एवैनाः[5] सादयेन्न[5] चोपभृतं विधृतीभ्यामवगृह्णीयादिति ॥

19. हविषामुद्वासन इति ॥ अग्रेणानुद्वासितानि जघनेनोद्वासितानीति बौधायनो जघनेनानुद्वासितान्यग्रेणोद्वासितानीति शालीकिरपच्छेदमित्यौपमन्यवः[6] ॥

20. प्रत्यञ्जन इति ॥ स ह स्माह बौधायन उभयानि प्रत्य-

---

1 रथीतर Sāyana.

2 Effaced in G.

3 Thus Ben H C D G and Sāyana, °रंतर्गर्भे Bn.

4 प्रत्यवहृता° H Ben C D G (pr. m.) U and Sāyana, प्रत्यगवहृता° G (sec. m.), प्रत्यगवहिता° Bn, cp. xxii. 7

5 Thus Bn G (sec. m.) U and Sāyana, एवैना सादा° Ben H C D G (pr. m.) एवैनाꣳ सा° Be

6 Thus Bn G (sec. m.) U (sec. m.), °यपच्छेदित्य° Be, °स्वच्छेद° H Ben G (pr. m.) U (pr. m.) and Sāyana, D and G defective; cp. xx. 30 s. f., xxii. 15 s. f.

ऽग्न्याधेयार्थं चाग्रयणकापालानि चेति " कपालान्येवेति शालीकिः ' ॥

कपालानामाध्वर्यवे[१] विमोक इति ॥ उद्वास्य हवींष्यौ- त्यचावार्यौ[२] विमुञ्चतो[२] " भक्षयन्नेव[२] भक्षाणां पारे कपालानि विमुञ्चेदित्यौपमन्यवः ' ॥

आघाराविति ॥ सूत्रं बौधायनस्याभीषू[३] इव[३] व्यतिषक्तौ[३] स्यातामिति शालीकिः ' ॥

संप्रैष इति ॥ अग्नीदग्नीनिति बौधायनो " ऽग्निमग्नीदिति शालीकिर्"ग्नीत्परिधींश्चाग्निं चेत्यौपमन्यवः ' ॥

अत्याक्रमण इति ॥ सव्येन प्रदाव्यमत्याक्रामेद्बुलामुतो दक्षिणेनेति बौधायनो " दक्षिणेन प्रदाव्यमत्याक्रामेद्बुलामुतः सव्येनेति शालीकिः ' ॥

---

१ Thus only G (sec m ) Be and the vivarana, ॰ध्वर्यवो all the other MSS

२ Thus Bu G (sec m ) and, as it seems the vivarana, ॰चार्यौ विमुंचतो Be G (pr m.), ॰चार्यौविमुंचेद्भक्षय॰ the other MSS and Sāyana About the interpunction and the meaning of this dvaidham I am uncertain

३ Thus Bu (which, however, omits इव ) and the vivarana only, which runs अभिमुख्येन सुवार्थे प्रथमं येते अभीषू रश्मी, ॰भिषूवति G (sec. m.), L (sec m ), ॰भिषूध्यतिषक्तौ C ॰भिषवतिषक्तो Ben H; ॰भिष्यतिषक्तौ D, Be corrupt Sāyana reads अभिषक्तौ and comments अभिः सक्तौ सर्वादिक्संबन्धिने (sic) Read ॰भीषू ?

1 आश्रावण इति ॥ ओ श्रावयेति बौधायन '' आ श्रावयेति शालीकि: '' श्रावयेत्यौपमन्यव: ' ॥

10 प्रवर इति ॥ स्रुवꣳ शालीकेर्यो ह स्माह बौधायन उत्कर ऊर्ध्वायꣳ स्फ्यं निहत्य प्रवरं प्रवृणीयाच्चैव[1] च' स्फ्यमुदस्येदुपरिष्टाच्चोपस्पृशेदिति[2] ' ॥

11 होतुर्वरण इति ॥ स ह स्माह बौधायनो यद्यस्य पिता वाचार्यो वा व्याधान्वा होता स्यादुपाꣳश्वेतेषां गुरूणां नामानि गृह्णीयादित्यु''च्चैरेव होतुर्नाम गृह्णीयादिति शालीकि: ' ॥ १२ ॥ चतुर्थः ॥

13 अभिकामं जुहोतीति ॥ स ह स्माह बौधायन:[3] सर्वाभिकामेत्यग्न्यामाहुतीभि:[4] स्वरेणोत्तरामुत्तरामाहुतिं ज्यायसीं ज्यायसीं जुहुयादिति ' यद्यामेवाभिकामꣳ समानचाहुतीर्जुहुयादिति शालीकि: '' समानत्र तिष्ठदाहुतीभिरेवाभिक्रामेदित्यौपमन्यव:[5] '' समानत्रैव तिष्ठन्प्रदक्षिणमनुदिशꣳ कृत्वा मध्ये स्वाहाकारं जुहुयादित्याश्मीणवि: ' ॥

१ Thus H Ben C D G (pr m) U (pr. m) Keś •दम चैव Be U (sec m) Sāyaṇa •दम च Bu G (sec m)

२ •रिष्टाच चस्पृ• Bu G (sec m).

३ The text is given acc to U (sec. m) and Sāyaṇa In H Be Ben D C the words of Baudhayana are attributed to Sāliki and vice versa, but cp the vivaraṇa of I 16 init. where सर्वाभिक्रामेद् is cited as first vikalpa.

४ The MSS present sometimes चाहुतिभि sometimes चाहुतीभि, cp xxiv 3 a f.

५ अब before अभिक्रामेद् om Bu Be D G (sec m)

14 आज्यभागयोर्होम इति ॥ पूर्वार्धे प्रतिमुखं प्रवाङ्गजुहुयादिति बौधायनः ॥ पूर्वार्ध एव प्रवाङ्गिति शालीकिः ॥

17. हविषामवदान इति ॥ स ह स्माह बौधायनः पूर्वार्धादेवाग्रे प्रथमं मुख्यस्य हविषो ऽवद्येदथापरार्धादितरस्य प्रदक्षिणꣳ हविषामवत्तं भवतीत्यन्यो ह स्माह शालीकिरपरार्धादेवाग्रे प्रथमं मुख्यस्य हविषो ऽवद्येदथ पूर्वार्धादितरस्य प्राक्सꣳस्थानि हवीꣳषि भवन्तीति ॥ मध्यात्पूर्वार्धात्पश्चार्धात्पञ्चावत्तिनामित्यौपमन्यवः[१] ॥

आहुतीनामायतन इति ॥ स ह स्माह बौधायनस्त्रीण्येवैतान्यादिष्टस्थानानि भवन्त्याज्यभागौ स्विष्टकृदथेतरा यथावकाशं जुहुयादिति ॥ मध्ये रेवाहुतीर्जुहुयात्पूर्वार्धे स्विष्टकृतं जुहुयादिति शालीकिः ॥ स्रुच्यमाघारपथमभिजुहुयादित्यौपमन्यवो ॥ मध्ये प्रदक्षिणं मण्डलाकारमिति राथीतरः[२] ॥

5 उपाꣳशुयाजस्य करण इति ॥ सूत्रं मौद्गल्यस्यान्यो ह स्माह बौधायन औषधस्योपाꣳशुयाजं कुर्यादग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामित्यन्यो ह स्माह शालीकिराज्यस्योपाꣳशुयाजं कुर्यात्सौम्यं पौर्णमास्यां वैष्णवममावास्यायामित्यन्यो ह स्माहौपमन्यव औषधस्यैवोपाꣳशुयाजं कुर्यात्सरस्वतः पौर्णमास्याꣳ सरस्वत्या अमावास्यायामित्युभयत्रैवाज्यस्य

---

१ Instead of पश्चार्धात् G (sec m ) and Sāyaṇa अपरार्धात् ।

२ Thus G (sec m ) D C and Sāyana, रथीतरः the other MSS.

वैष्णव[१] इति राथीतरो ॥ ऽन्नो ह स्माह कौणपतन्त्रिमरव्य[२] स्याद्वैष्णवस्तु स्यात्स्वयं चैव[३] यजमानः प्राश्नीयादिति ॥

पञ्चमस्यावदानस्याभिवृद्ध्या[४] इति ॥ औपभृतस्याभिवर्धयेदिति बौधायन ॥ आज्यस्येवेति[५] शालीकिः ॥

7 मेक्षणस्यानुप्रहरण इति ॥ सूत्रं शालीकेरन्नो ह स्माह बौधायनो न मेक्षणन्यायेन वपाश्रपणी अनुप्रहरेदिति ॥

15. प्राशित्रस्यावदान इति ॥ सूत्रे बौधायनस्य ॥ परिहरिष्यन्नेव[६] प्राशित्रमवद्येदिति शालीकिः ॥

आज्यहविष्यन्वाहार्यस्य[७] करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः ॥

16 अन्वाहार्यस्यासादन[८] इति ॥ अग्रेण यजमानं च ब्रह्माणं च पर्याहृत्य दक्षिणस्यां श्रोण्यामासादयेदिति बौधायनो ॥ ऽत एव दक्षिणस्यां श्रोण्यामिति शालीकिः ॥ १३ ॥

---

१ Thus all, r. विष्णव ?

२ Thus (कौणपतन्त्रि॰) H D C G Be U (pr. m.) and Sāyana, कौणपतन्त्रि॰ Ben, कौणपतन्धि॰ Bu, कौणपत॰ U (sec. m.).

३ चैवं Bu C (sec. m.) G (sec. m.), चैव all the other MSS and Sāyaṇa

४ ॰वृद्ध्या all

५ Thus Bu Be G (sec. m.) आज्यस्यैवाभिवर्धयेदिति all the other MSS and Sāyaṇa

६ ॰न्नेव G (sec. m.)

७ आज्यस्य instead of आज्य॰ H G C U

८ Thus the vivaraṇa ॰स्य सादन the MSS

ib अन्वाहार्यस्योद्वासन इति ॥ अग्रेण स्रुच उदञ्चमुद्वासयेदिति बौधायनो ॥ जघनेन स्रुच उदञ्चमिति शालीकिः । ॥

16 हविर्धानच्छिद्रानामुद्वासन इति ॥ अग्रेण स्रुच उदञ्चमुद्वासयेदिति[१] बौधायनो ॥ जघनेन स्रुच उदञ्चीति[१] शालीकिः । ॥

9. अनूयाजानाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ प्रतीचीरेवैता आहुतीः सꣳस्थापयेदिति शालीकिः । ॥

r

0. वाजवत्योर्व्यूहन इति ॥ स ह स्माह बौधायनोऽन्वया प्रतीचीमुपभृतं[२] प्रत्यूहेदङ्गिसेनाꣳ सꣳस्पृशेदित्यथो ह स्माह शालीकिः प्राचीनपुष्करे एवैने विकर्षेत्[३] चोपभृतमङ्गिः सꣳस्पृशेदिति । ॥

7. प्रस्तरस्य समञ्जन इति ॥ त्रिस्त्रिरेकैकस्याꣳ समञ्ज्यादिति बौधायनः ॥ सकृत्सकृदिति शालीकिः । ॥

3. प्रस्तरस्यानुप्रहरण इति ॥ स ह स्माह बौधायनोऽध्वर्युरेवोभयैर्मन्त्रैरनुप्रहरेत्पौरोडाशिकैश्च याजमानैश्च । याजमानैर्यजमानोऽनुमन्त्रयेतेत्यथो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैरनुप्रहरेत्पौरोडाशिकैश्च याजमानैश्च । न याजमानैर्यजमानोऽनुमन्त्रयेतेत्यथो ह स्माहौपमन्यवो

---

१ उदचि Sāyana only, उदंचम् U Bu Be G (Ben H D C om this dvaidham altogether)

२ प्राचीमु॰ Sāyana

३ ॰विकर्षेत् Bu कर्षेत् H S

यथापि[१] पौरोडाशिका मन्त्रा नाभिवर्तन्त[२] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[२] ' ॥

12 परिधीनामभ्याधान इति ॥ सूत्रं बौधायनस्य " प्रस्थान[३] एवैनानभ्यादध्यादिति[२] शालीकिः ' ॥

15. अथैनान्स्रुꣳस्रावेणाभिजुहोतीति ॥ सूत्रं बौधायनस्य " प्रस्तरं चैव परिधीꣳश्चाभिजुहुयादिति शालीकिः ' ॥

18. स्रुचोर्विमोक इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

30 2. पत्नीसंयाजेष्वग्निशां परिक्रमण इति ॥ सूत्रं बौधायनस्य " सर्व एवोत्तरेण गार्हपत्यं परिक्रामेयुरिति शालीकिः ' ॥ १४ ॥

30 9 पत्नीनाꣳ संयाजन इति ॥ सूत्रं बौधायनस्य " ध्रौवाज्येन स्थानेनैव[४] पत्नीः संयाजयेदिति शालीकिः ' ॥

अन्तर्धाय देवानां पत्नीः संयाजयेदिति बौधायनो " ऽनन्तर्धायैवेति शालीकिः ' ॥

पत्नीसंयाजेषु शम्युवाकस्य करण इति ॥ कुर्यादिति बौधायनो " न कुर्यादिति शालीकिः ' ॥

1. 32. 5 ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभावेव

---

१ यथा Bu G (sec m ) यथापि the other MSS.

२ Without नि (cp xx 10 24 6) all

३ प्रस्थाने वैमा॰ Bu U (sec m ) G (sec m ) ॰नै चैवा॰ Be; प्रस्थाने-वैना॰ C D (Sāyana प्रस्थाने कर्मविसाने समिष्टयजुर्होमानन्तरमित्यर्थः)

४ एव om Bu G (sec. m.) and Sāyana.

ध्रुवामाप्याययेतामध्वर्युश्च[1] यजमानश्चेत्यध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजुर्जुहुयादिति शालीकिः ॥

समिष्टयजुषो होम इति ॥ सूत्रमाचार्ययोरन्यो ह स्माह गौतमः स्वाहा वाचीति हुत्वा बर्हिषो धाकूनां संप्रलुप्य ध्रुवायां समज्यानुप्रहृत्याभिजुहुयात्स्वाहा वाते धाः स्वाहेति ॥ १५ ॥ पञ्चमः ॥

अथातोऽग्न्याधेयं व्याख्यास्यामः ॥

संभारेष्विति ॥ सूत्रं राथीतराणामन्यो[2] ह स्माह बौधायनो नाग्निहृतं कुर्वीत घोररूपमिति कुर्वीतैवाग्निहृतं न तु सुचक्रुलायं न ह्येतस्यानुख्या विज्ञायत[3] इति शालीकिः ॥

पात्राणां करण इति ॥ स ह स्माह बौधायनस्त्वक्-आसेचनानि कारयेदग्रतःपुष्कराण्येवमस्य प्राचीनपुष्कराः स्रुचः सन्ना भवन्तीत्यन्यो ह स्माह शालीकिस्त्वक्आसेचनानि कारयेन्मूलतःपुष्कराण्येवमस्य प्राचीनपुष्कराः[4] स्रुचः सन्ना भवन्तीति विज्ञायते तस्मादवाचीनाग्रा वनस्पतयः पृथिवीं क्षियन्तीति[5] ॥

---

१ Thus G (*sec. m.*) and Sāyaṇa, °प्याययेताम° C G (pr. m.) Ben; °प्यायेताम° H, °प्याययताम° D, °प्यायय° U Be

२ रथीत° Bu

३ विद्यत U (*sec. m.*)

४ *Thus* G U D C Be, प्रोचीन° Ben Bu H

५ *Thus* (क्षियन्तीति) Bu U C D G Ben, क्षिपन्तीति Be H

स्रुचां प्रमाण इति ॥ बाहुमात्राः स्युरिति बौधायनो ″ अरत्निमात्रा इति शालीकिः ″ प्रादेशमात्रा इत्यौपमन्यवः ′ ॥

स्रुचामाकृतिविकार इति ॥ हस्तोष्ठ्यः[1] स्युरिति बौधायनो ″ वायसपुच्छा इति शालीकिर्हंसमुखप्रसेचना[2] इत्यौपमन्यवः ′ ॥

54. 16. अम्बरीषस्य करण इति ॥ उत्तरतो ऽग्न्यगारस्याम्बरीषं कुर्यादिति बौधायनो ″ यत्रैवाम्बरीषः स्यात्तद्गच्छेदिति शालीकिः ′ ॥

55. 12. अग्न्यगारस्य परिक्रम[3] इति ॥ दक्षिणेनेति बौधायन ″ उत्तरेणेति शालीकिः ′ ॥

55. 14. रोहिते चर्मणीति ॥ सूचं बौधायनस्योपरोहितं स्यादिति[4] शालीकिः ′ ॥

55 15 ब्रह्मौदनस्य[5] मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक[6] इति[6] शालीकिः ′ ॥

ib. ब्रह्मौदनस्य निर्वपण इति ॥ पवित्रवता पात्रेण मन्त्रवन्तमिति बौधायनो ″ ऽपवित्रेण तूष्णीकमिति शालीकिः ′ ॥

---

१ हस्तोष्ठ्य Ben H C D Bu G; हस्तोष्ठ Be U.

२ Thus Be Bu G (sec m) U (sec m.); °प्रवेषा H Ben C D G (pr m) U (pr. m).

३ °क्रमण G and U (sec. m.).

४ कुर्यादिति C D H Ben U

५ Here and *infra* the MSS sometimes ब्रह्मौ° sometimes ब्राह्मौ° ।

६ Thus Be only, °ष्णीकमिति G (sec m) Bu, तूष्णीमिति H Ben U C D G (pr. m).

६ ब्रह्मौदनस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो" ऽप्स्विति शालीकिः' ॥

नैवाभिन्नाभिश्चेन्न निःषिञ्चेदिति बौधायनः" काममभिन्नाभिश्चेन्न निःषिञ्चेदिति शालीकि"र्विस्राव्य[1] तद्[2] सूपवन्तमित्यौपमन्यवः' ॥

७ ब्रह्मौदनस्योपस्तरण इति ॥ सूत्रं बौधायनस्य" नोपस्तृणीतेति शालीकिः' ॥

८ ब्रह्मौदनस्योद्वासन इति ॥ सूत्रं बौधायनस्य"नैव पर्युपविशेयुरिति[2] शालीकिः' ॥

९ ब्रह्मौदनस्योपोहन इति ॥ यज्ञो मोपनमत्विति वा तूष्णीं वेति' पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः' ॥

ब्रह्मौदनस्य प्राशन इति ॥ आर्षेया एव ब्रह्मौदनं प्राश्नीयुरिति बौधायनो" य एव केच नियतपाना[3] इति कात्यो" ऽन्यो ह स्माहौपमन्यवो महर्त्विज एव ब्रह्मौदनं प्राश्नीयुर्न[4] ह्येवैते[5] सतानुमन्त्रिणो भवन्तीति' ॥

---

१ Uncertain, विस्राव्यतं U H Ben C D G (pr m), विस्राव्य G (sec. m.), विस्राव्यतं Bu, विस्राव्य स्तु सुतं Be.

२ Thus Bu G and U (sec m), ॰पविशेरन्निति the other MSS.

३ Uncertain, निपाना H Ben G (sec m) C D, निपक Be, निपाथमा Bu, नियतपाना G (pr. m) U, this seems to be the reading also of the vivarana, according to which the meaning is . सवभोजनाः।

४ ॰श्चो Ben H G C and U (pr m)

५ After ॰वैते Be ins प्रथमं, thus also Keś in a citation of this passage.

57.1 समिधामभ्याधान इति ॥ सूत्रं शालीकिर्वो ह स्माह बौधायनः सकृत्प्राशिते ऽप्रत्यवसृष्टे समिधो ऽभ्यादध्यादित्यौचो ह स्माहौपमन्यवो ऽन्वैवैनाः पार्श्वतः समस्य सादयेत्तं यदा सर्वं प्राश्नीयुरथैतां पात्रीं निर्णिज्योपस्तीर्य यत्स्थाल्या-माज्यमवशिष्टं स्यात्तत्सकृदभ्युन्नीय तेन समिधो ऽभ्यादध्यादिति ॥

57 13 गोः करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिरपि अक्षौरपि कुर्वीतान्तु चैतस्य भवेत्पुण्या प्रशस्तेति कात्यः ॥

57.15. अरण्योः प्रदान इति ॥ सूत्रमाचार्ययोर्वो ह स्माहौपमन्यवो ऽपररात्र एवास्मा अरणी प्रयच्छेदिदं ददामीत्येव वाचं विसृजेदिति ॥

. 59 1. अग्न्यायतनानां परिलेपन इति ॥ सूत्रमाचार्ययोर्वो ह स्माहौपमन्यवो गार्हपत्यायतनमेवैकं परिलिम्पेत्तद्धि विदग्धं भवतीति ॥

I 59 2 संभाराणां निवपन इति ॥ सूत्रमाचार्ययोर्वो ह स्माहौपमन्यवो गार्हपत्यायतन एवैनान्सर्वैर्मन्त्रैः परिनिधाय त्रेधा निवपेदिति ॥ १६ ॥

I 62. 9. इध्मस्य हरण इति ॥ स ह स्माह बौधायनो जानुदघ्नं प्रथमं हरेदथ नाभिदघ्नमथ ग्रीवदघ्नं प्राणांस्तु नातिहरेदित्यौद्दान एवैतत्सात्वा अभिसंपाद्य प्राणांस्त्वेव नातिहरेदिति शालीकिः ॥

18 संभाराणामाक्रमण इति ॥ सूचङ् शालीकेर्"थो ह स्माह बौधायन एवमेवैतेन पुरस्तात्प्रत्यगाहृत्तेन[१] दक्षिणेन पूर्वपदेनोत्तरतः पार्श्वतः[२] संभाराणामाक्रमयेद्यथाहितस्याग्नेरङ्गारा अभ्यववर्तेरन्निति ' ॥

62 20 अश्वस्य दान इति ॥ अध्वर्यव एतमग्निपदमश्वं[३] दद्यादन्यं ब्रह्मण इति बौधायन " एतं[४] ब्रह्मणे[४] ऽन्यमध्वर्यव[४] इति शालीकिः ' ॥

63, 1. इध्मस्य निधान इति ॥ सूत्रं बौधायनस्य " तूष्णीमेवेध्मं निदध्यादिति शालीकिः ' ॥

63 13 सभ्यावसथ्ययोः करण इति ॥ कुर्यादिति बौधायनो " न कुर्यादिति शालीकिः ' ॥

ib. सभ्यावसथ्ययोर्विहरण इति ॥ आहवनीयादेवैनौ विहरेदिति बौधायनो " ग्रामाग्नेरिति शालीकि"र्निर्मन्थ्यौ स्यातामित्यौपमन्यवो " ऽथो ह स्माहौपमन्यवीपुत्रः सभायामेव सभ्यं व्यपदिशेदावसथ आवसथीयं पर्वणि[५] चैनयो स्थालीपाकौ श्रपयित्वा ब्रह्मणे जुहुयादित्येतदपि न कुर्यादित्याश्मीगविः ' ॥

---

१ Thus G (sec m) D G, °हृतेन *the other MSS.*

२ Found only in Be and U (sec m)

३ अश्वं given only by Bu and G (sec m)

४ एव instead of एतं Bn, the other MSS are defective, leaving out एतं ब्रह्मणे।

५ पर्वणिपर्वणि U (sec m.)

होतारमित्येवैतदाग्न्याधेयिकेषु[1] तन्त्रेषु दृष्टं भवतीति शालीकिरग्निमेवैतदाग्नेये ऽष्टाकपाले दृष्टं भवतीत्यौपमन्यवः ॥

4. तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवता इत्यथो ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांशुदेवता इत्यथो ह स्माहौपमन्यव आग्नेये ऽष्टाकपाले वार्त्रघ्नावाज्यभागौ स्यातां वृधन्वन्तावैन्द्राग्नादित्ययो[1] रयिमन्तौ[2] पुष्टिमन्तौ पवमानहविःषु वीतवन्तावन्वारम्भणीयामिति[3] ॥

याजमानस्य करण इति ॥ अभीनाम[4] याजमानं कुर्यादिति बौधायनः ॥ कुर्याद्यथावकाशं याजमानमिति शालीकिः ॥

---

१ Thus Bu G U (sec m.), एवैतद॰ H, एवैतद॰ Ben U (pr m.), एतेवैतद॰ Be; तेनैवैतद॰ D C.— आग्न्याधे॰ H Ben Be U D G (sec. m.), अग्न्याधे॰ Bu G (pr m.)

२ ॰योरयिमंतौ C D U (pr m.) Ben, ॰योरविमंतौ H, ॰योरयिमन्तौ Be, योरमिथिमंतौ Bu U (sec m.) I am uncertain whether रयिमन्तौ or अभिथिमन्तौ is the right reading

३ Thus Be Ben H C D G and U (pr m.), पौवर्त्तनाव॰ Bu, इष॰ भ्यंताव॰ G and U (sec. m.)

४ अभीनमं Be The word seems to be absol to अभिनमति ('to change accordingly') Viraraṇa अभिनामसमोदिता, correct perhaps ॰समूदिता ।

6 दक्षिणानां दान इति ॥ सूत्रं शालीकेर्" वो ह स्माह बौधायनः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्यात्तिस्रस्तिस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति[1] ॥

5. 9 तन्त्रसमास इति ॥ नास्ति तन्त्रसमास आचार्ययोर्" वो ह स्माहौपमन्यव आग्नेयो ऽष्टाकपालो ऽग्नये पवमानाय तत्प्रथमं तन्त्रं स्यादथाग्नये पावकायाग्नये शुचये तद्द्वितीयमथैन्द्राग्नश्चादित्यश्च' चरुस्तौ' परीयातामिति[1] ॥

15. दक्षिणानां दान इति ॥ सूत्रं शालीकेराख्यातं बौधायनस्त्वेवो ह स्माहौपमन्यवः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्याच्चतस्रश्चतस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति[1] ॥

अनन्वारम्भदर्शपूर्णमासस्य प्रायश्चित्तकरण इति ॥ कुर्यादिति बौधायनो" न कुर्यादिति शालीकिः[1] ॥

17 18 अन्वारम्भेष्यामिति ॥ चतुर्होतारं सारस्वतौ होमावन्वारम्भेष्टिमित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति बौधायनश्"चतुर्होतारं सारस्वतौ होमावित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति शालीकिश्"चतुर्होतारमेवोपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादित्यौपमन्यवः" सर्वमेवैतदिष्ट्यहनि कुर्यादित्यौपमन्यवीपुत्रः[1] ॥ १८ ॥ षष्ठः ॥

---

१ Emended, ॰श्चादित्यश्चरुस्तं परीयातामिति U (sec. m.), ॰श्चादित्यश्चरुस्तत्परियादिति G (sec. m.), ॰श्चादित्यश्चतुरंतं परीयादिति Bu; ॰श्चादित्यश्च (or क) स्त्व (or च) परीयातामिति (or परियादिति) the other MSS

1. अथातः पुनराधेयं[1] व्याख्यास्यामः ॥

6 सर्पराज्ञीष्विति ॥ सूत्रꣳ शालीकेर्''चो ह स्माह बौधायनः सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधातीति तꣳ षड्भिराधाय सप्तम्योपतिष्ठतेति ' ॥

1. पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

3. तन्त्रकरण इति ॥ सूत्रꣳ शालीकेर्''चो ह स्माह बौधायन उभयानि तन्त्राणि कारयेत्पौनराधेयिकानि चाग्न्याधेयिकानि चाग्नेयमष्टाकपालं निर्वपेत्तस्यासमुदिते ऽग्न्याधेयदक्षिणा[२] दद्यादथाग्नेय पञ्चकपालं ' तस्यासमुदिते पुनराधेयदक्षिणा[३] दद्यादथैन्द्राग्नं चादित्यं[४] च[४] चरुमंयाग्निवाहणं ' पारे[५] द्वादशाहस्य तन्त्र[६] इति[६] ' ॥

7 विभक्तीनां धान इति ॥ सूत्रꣳ शालीकेर्''चो ह स्माह बौधायनः सर्वांꣳसर्वास्विचमुक्त्वा[७] यजेतेत्याग्नेयोद्वरा[८] विभक्तीर्दध्यादित्यौपमन्यवः ' ॥

१ पुनराधानं Bu

२ °क्षिणां Bu D C

३ °क्षिणां Bu U Ben D C.

४ Emended, च is missing both times in B G (sec. m), the second च is missing in Be D C Ben H U G (pr. m)

५ परे H Bu Ben D C U G (pr. m), पारे Be G (sec. m)

६ इति is missing in all the MSS, which read तन्त्रो, the vivaraṇa runs: द्वादशाहे गते तनुष्वीꣳषीति ।

७ Thus Bu G (sec. m), सर्वास्विचमु° the other MSS

८ Thus Be only, °ग्नेयोद्धव° the other MSS.

12. पुरोडाशस्य परिहोम इति॥ दैवतं परिजुहुयादिति बौधायनः " अस्विष्टकृत्कमिति शालीकिः ' ॥

14 स्विष्टकृतो निर्वचन इति॥ स्वे स्थाने निर्ब्रूयादिति बौधायनः " स्वे स्थाने निरुप्य कामं तत ऊर्ध्वं निर्ब्रूयादिति शालीकिर्ह्वो ह स्माहौपमन्यवः पञ्चैतानि स्विष्टकृत्स्थानानि भवन्तीति[१] ' तेषु[२] सर्वेषु निर्ब्रूयादिति ' ॥

17. अथापहृताग्नेर्नष्टारणीकस्य चेति॥ सूत्रं शालीकिर्ह्वो ह स्माह बौधायनः कामं नष्टेषु वापहृतेषु वाग्निषु नाद्रियेताग्न्याधेयमाधानप्रभृति यजमान एवाग्नयो भवन्ति ' तस्य प्राणो गार्हपत्यो ऽपानो ऽन्वाहार्यपचनो व्यान आहवनीयः ' काममुपावरोह्य जुहुयादिति ' ॥

23. अग्नीनां विहरण इति॥ सूत्रं बौधायनस्याधानप्रभृत्येवैते ऽजस्राः स्युरिति शालीकिः ' ॥

17. पात्राणां सादन इति॥ सूत्रं शालीकिर्ह्वो ह स्माह बौधायनः कूर्चे वा तृणेषु वा पात्राणि सादयेदयमय्यं[३] दारुणा[३] दारु[३] संसीयमानं[३] भवतीति ' ॥

---

१ G om. इति।

२ स्वेषु (meaning?) ms Bn.

३ Uncertain reading. Bn reads as given in the text; °यर्थं दारुणा दारु संसीय° G (sec m.), °यर्थं दारुणा दारु (sec. m. दारुणा) संसीय° U, °यथा दारुणा दारुराधीय° Ben II, °यथा दारुणा दारुणा संसीय° Bo, °यथा दारुणा दारुराधीय° D C, °यथा दारुणा दारु संसीय° G (pr m.).

दयोर्देमि इति ॥ स ह स्माह बौधायनो यदि पूर्वा[१] मेषं नीयादुत्तरया[२] प्रायश्चित्तं कुर्वीताथ यद्युत्तरा[३] मेषं नीयादुभयं[४] मेषक्तन्ः[५] स्यादन्यथा प्रायश्चित्तं कुर्वीतेत्यथो ह स्माह शालीकिर्यतरा कतरा चिद् मेषं नीयादुभयं[६] मेषक्तन्ः स्यादन्यथैव ततः प्रायश्चित्तं कुर्वीतेति ' ॥ १९ ॥

10. अभिज्वलन इति ॥ सूत्र बौधायनस्य ' गार्हपत्यादङ्गारेणाभिज्वाल्य त्रिः पर्यग्नि कुर्यादिति शालीकिः ' ॥

13. वर्त्म कुर्वन्नुदगुदासयतीति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनस्तत्रैव[७] त्रिः प्रतिष्ठापयन्निवोदासयेत्तय इमे लोका ' एष्वेव लोकेषु प्रतितिष्ठतीति[८] ' ॥

8. उन्नयन इति ॥ पूर्णान्वानूचो वेति ' पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

---

१ पूर्वा G (sec m), पूर्वा Be, पर्यया H Ben U C D, पूर्वया Bu

२ Emended, मेयादु॰ H Ben U D C, म्येयादु॰ Be G (sec m)

३ ॰त्तरा Be G (sec. m), ॰त्तरया H Ben U C D G (pr. m), ॰त्तरया Bu.

४ नेयादु॰ H Ben Bu U C D G (pr m), म्येयादु॰ Be G (sec m) — Thus G (sec m), ॰दुभयत्र Bu, ॰दुभयत्रै Be, ॰दुभये the other MSS

५ घोर (धोर, घेरि) क्तनं Ben H U G (pr m) C D

६ नेयादु॰ Bu U C D G (pr m), नेयदु॰ Ben H, म्येयादु॰ G (sec m.) Be — ॰दुभय (instead of ॰दुभयं) H Ben U D C

७ Thus Bu Be, मत्रमत्रैव Ben G U D C, तत्रत्र H

८ Thus (and cp XX 22) Bu G and U (sec m.), ॰ष्ठानोति H Ben C Be, G and U (pr m.), ॰ष्ठामोति D

20. संसर्ग[१] इति ॥ स ह स्माह बौधायन उभयं संसृष्टयेच्च स्यात्सुगतं चेति ॥ सुगतमेवेति शालीकिः ॥

.4. अथ जघनेन गार्हपत्यमुपसादयतीति ॥ स्रुचं बौधायनस्रौपेणातिहारयेति[२] शालीकिः ॥

20. स्रुवेण इति ॥ स्वयं प्रवेत्य जुहुयादिति बौधायनो । यद्यस्य पुत्रो वान्तेवासी वालंकर्मीणः[३] स्यात्स दक्षिणत आसीनो जुहुयादिति शालीकिः ॥

b. आहुत्योर्होम इति ॥ पूर्वापरे जुहुयादिति बौधायनः ॥ सह[४] इति शालीकिः ॥

75.8 द्विरुपमृज्य द्विर्निमृजेदिति बौधायनः ॥ सकृदुपमृज्य द्विर्निमृजेदिति शालीकिः ॥

76.2. द्विरङ्गुल्या प्राश्योदङ् पर्यावृत्य प्राचीनदण्डया स्रुचा भक्षयतीति ॥ स्रुचं बौधायनस्त्वौदीचीनदण्डया भक्षयेदिति शालीकिः ॥

---

१ Thus Bu Be and the vivarana, संसर्ग H Ben G U D C.

२ Thus (and cp XX 8 21 4) Bu G and U (sec. m.) ॰तिहरेति Be ॰मिहरेति Ben G (pr. m), ॰मिहरेति H U (pr m. D C corrupt

३ Thus G U (sec m), वालकर्मीण Ben वालंकर्मिण H, वालंकर्मीणः Bu, वालंकर्मीण Be cp XX 2 6 12

४ Thus G (sec m) and the vivarana सहो H Ben Be U D C, सहोति Bu cp. XX 13 29 11.

1-13 निर्णिज्य स्रुचं निष्ट्याद्भिः पूरयित्वोदगुद्दिशतीति[1] जघनेन गार्हपत्यमपो निनयतीदमहमग्नौ वैश्वानरे ऽमृतं जुहोमि स्वाहेत्यचित्यामचित्ताकूतिमिति वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

18. आग्निपावमानीभिरुपस्थान इति ॥ स ह स्माह बौधायनः संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्यथो ह स्माह शालीकिर्यस्मात् चोर्ध्वं आग्निपावमानीभ्यस्तेन संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्यौपमन्यवो[2] न चास्यात ऊर्ध्वमाग्निपावमान्य आहवनीयमागच्छेयुर्न गार्हपत्यं स्वाध्यायार्था एवास्यात ऊर्ध्वं स्युरिति[3] व्याहृतीभिरुपस्थाय भर्तुं वः[4] शकेयं श्रद्धा मे मा विगादित्येव ब्रूयादित्याश्मीगविः ॥

4. आग्निःस्थिति[5] ॥ स ह स्माह बौधायन आत्मने प्रथम-

---

१ उदगुद्दिशतीति found only in Bu and G (sec m) Be and U (sec. m.) have instead वदिर About the constitution of the text of this dvaidham and its meaning I am uncertain

२ All the MSS exc. G (sec m) om यथम् ।

३ All the MSS ins शालीकिर which in G is effaced

४ Effaced in G

५ आग्नौस्थिति MSS

माशाशीताय जातेभ्यो ऽथ तन्त्रव इत्यौपो ह स्माह शालीकिर्जातेभ्यः प्रथममाशाशीतायात्मने ऽथ तन्त्रव इत्यौपो ह स्माहौपमन्यवो ऽजातेभ्यश्चात्मने[1] च तन्त्रवे चेति ॥ काममपि यावन्मात्रमाशीतेत्यौपमन्यवीपुत्रः । ॥ २० ॥

पिण्डपितृयज्ञस्य करण इति ॥ स ह स्माह बौधायन आदित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्यादाङ्गतीनाम् होमादाङ्गतीर्होष्यन्यज्ञोपवीतं कुर्वीत । स यज्ञोपवीत्येव स्यादा सकृदाच्छिन्नस्य स्तरणात्सकृदाच्छिन्नं स्तरिष्यन्प्राचीनावीतं[2] कुर्वीत । स प्राचीनावीत्येव स्यादा प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठेतेत्यौपो ह स्माह शालीकिरादित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्यादा प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्ययर्चोद्द्वेयादिति[3] ।

तूष्णीं[4] सकृदुत्पूय सकृत्प्रोक्ष्य सकृद्विष्क्रूर्पं कुर्यादिति बौधायनः ॥ सकृदेवैनान्सुफलीकृतान्कृत्वा पवित्रवत्याम् स्थाल्यामोप्य स्थालीपाकम् श्रपयित्वाभिघार्योदञ्चमुद्वासयेदिति शालीकिः । ।

---

१ The avagraha given only by G (sec. m), to the reading ऽजातेभ्य the vivarana also seems to point

२ स्तरीष्य॰ H Be

३ Thus G (sec m), ॰र्चोदेयादिति Ben H C D G and U (sec. m), ॰र्चदूर्ेयादिति Bu, ॰र्चाद्देयादिति Be U (pr m).

४ Effaced in G.

5. आहुतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ नाच मध्यमामाहुतिं जुहुयान्मेक्षणमेव तृतीयꣳ स्यादिति शालीकिः ॥

9. मक्षदाच्छिन्नस्य स्तरण इति ॥ उपनिष्क्रम्याग्न्यगाराद्दक्षिणे पूर्वेऽवान्तरदेशे मक्षदाच्छिन्नꣳ स्तृणीयाद्दक्षिणतश्चोल्मुकमुपनिदध्यादिति बौधायनोऽन्तरेवैतां दिशमिति शालीकिर्न चोल्मुकमुपनिदध्यादिति ॥

11. पिण्डानां दान इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनः परस्तादेवामुतोऽर्वाचोऽपमलैः पिण्डान्दद्यादिति[१] ॥

10. आञ्जनाभ्यञ्जने मममो निह्नव[२] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥[३]

8 पिण्डानामनुप्रहरण इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनोऽथैवैते पिण्डाः परिशयीरन्नुच्छिष्टा ह्येते भवन्ति पितृभिर्भक्षिता इति[४] ॥

अतिशिष्टस्य प्राशन इति ॥ स्वयं यजमानः प्राश्नीयादिति बौधायनः पुत्राय वान्तेवासिने वा दद्यादिति

---

१ पिंडदा० MSS exc. G (see m.)

२ निह्नव G

३ No vikalpa is found in the text proper of Baudh.

४ Thus B Ben C D G (sec. m.) भक्षता इति Bo, भक्षितवदिति G (sec. m.), भक्षतवंति Ba

शालीकिः ॥ पत्नीं प्राशयेत्प्रजाख्यैषा[1] भवतीत्यौपमन्यवो ॥ ऽङ्गुल्या यावन्मात्रमवघ्रायाथेतरदप्स्वनुप्रहरेदित्यौपमन्यवीपुत्रो ॥ मस्तोत्कर उदास्य संप्रच्छादयेदित्याश्मीगविर्यो[2] ऽभ्यवहरेदिति मौद्गल्यः ॥ २१ ॥

32 4 आग्रयणस्य तन्त्रमध्याय इति ॥ नास्ति तन्त्रमध्याय[3] आचार्ययोर्यो ह स्माहौपमन्यवः सौम्यं[4] निरुप्याथेतराणि हवींषि निर्वपेद्देवमस्य षट्मुख्यानि[5] हवींषि भवन्तीत्यु यो ह स्माहौपमन्यवीपुत्रो ऽतिपातादाग्रापिक एव सौम्यः स्यादन्तरेण वैश्वदेवं चैककपालं च निर्वपेदित्युयो[6] ह स्माहाश्मीगविस्त्वे-ष्वेतानि[7] हवींषि भवन्ति । त्रय इमे लोका । एष्वेव लोकेषु प्रतितिष्ठति । श्यामाकेनैवास्य प्रस्तरेणैतदाप्तं भवतीति ॥

32 6. अञ्जानीनाऽ होम इति ॥ सूत्रं बौधायनस्य ॥ पुरस्तात्स्विष्टकृतो ऽञ्जानीरुपजुहुयादिति शालीकिः ॥

ib आग्रयणहविषाऽ श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो ॥ ऽप्स्विति शालीकिः ॥

---

१ Thus Ben Be G U D C, प्राजास्थेष Bn; प्रजास्येव H

२ सं (before प्रच्छाद॰) om H Ben D C U G (pr. m.)

३ इति ins G and U (sec m), but cp. XX, 18 40 4.

४ चह ins H Ben U C D G (pr m)

५ ॰मुख्यानि Bu D G (sec m)

६ Thus (निर्वपेद्) Ben H Be U D C, श्रपयेद् Bu; effaced in G.

७ Thus without एव, U C D Ben D G (pr. m) and Kes, चैष्वेवैतानि Be Bu G (sec m)

